तमसा। उचितमेव दाक्षिण्यं स्नेहस्य सञ्जीवनोपायस्तु मौलिक एव रामभद्रस्याद्य सन्निहितः।

मुरला। कथमिव?

तमसा। श्रूयताम्। पुरा किल वाल्मीकितपोवनोपकण्ठात् परित्यज्य गते लक्ष्मणे सीतादेवी प्राप्तप्रसववेदनम् आत्मानम् अतिदुःखसंवेगाद्गङ्गाप्रवाहे निक्षिप्तवती तदैव तत्र दारकद्वयं प्रसूता भगवतीभ्यां पृथ्वीभागीरथीभ्यां अभ्युपपन्ना रसातलञ्च नीता स्तन्यत्यागात् परेण च तद्दारकद्वयं तस्याः प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती।

मुरला। [सविस्मयम्]।

ईदृशानां विपाकोऽपि जायते परमाद्भुतः (१)।

यत्रोपकरणीभावमायात्येवंविधो जनः॥ ३॥

तमसा। इदानीन्तु शम्बूकवृत्तान्तेनानेन सम्भावितजनस्थानागमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी, यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता।

मुरला। सुविचिन्तितं भगवत्या राजधानीस्थितस्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्य्यैर्व्यापृतस्य नियताश्चित्तविक्षेपाः अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ

---

(१) पावनाद्भुतः इति पाठान्तरम्।

इति तत् कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात्।

तमसा। उक्तमेव (१) भगवत्या भागीरथीदेव्या, वत्से देवयजनसम्भवे सीते अद्य खलु आयुष्मतोः कुशलवयोर्द्वादश(२) संवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्ध्यते, (३) तदात्मनः पुराणश्वशुरम् एतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व। न च त्वामवनिपृष्ठवर्त्तिनीमस्मत्प्रभावाद्वनदेवता (४) अपि द्रक्ष्यन्ति, किं पुनर्मर्त्त्या इति अहञ्च आज्ञापिता तमसे! त्वयि प्रकृष्टप्रेमैव वधूर्वत्सा जानकी अतस्त्वमेवास्याः प्रत्यन्तरीभवेति साहमधुना यथादिष्टमनुतिष्ठामि।

मुरला। अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि रामभद्रोऽप्यागत एवेति तर्कयामि।

तमसा। तदियं गोदावरीह्रदान्निष्क्रम्य।

परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकवरीकमाननम्।
करुणस्य मूर्त्तिरथवा (५) शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ४ ॥

मुरला। इयं हि सा।

---

(१) भव इति पाठान्तरम्। (२) जन्मसंवत्सरस्य इति पाठभेदः। (३) अभिवर्त्तते इति भिन्नः पाठः। (४) चारिणीमिति पाठान्तरम्। ५) इव वा इति पाठान्तरम।

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम्॥ ५॥

इति परिक्रम्य निष्क्रान्ते। विष्कम्भकः।

[ नेपथ्ये ]

प्रमादः प्रमादः।

ततः प्रविशति पुष्पावचयव्यग्रा सकरुणौत्सुक्यमाकर्णयन्ती सीता।

सीता। अह्महे जाणामि पिअसही मे वासन्दी वाहरदि। (क)

[ पुनर्नेपथ्ये ]

सीतादेव्याः स्वकरकलितैः शल्लकीपल्लवाग्रै-
रग्रे लोलः करिकरभको यः पुरा पोषितोऽभूत्।

सीता। किं तस्स। (ख)

[ पुनर्नेपथ्ये। ]

वध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन दर्पा (१)
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः॥ ६॥

सीता। [ ससम्भ्रमं कतिचित्पदानि गत्वा ] (२) अज्जउत्त! परित्ताहि परित्ताहि मम तं पुत्तअं। [स्मृतिमभिनीय सवैक्लव्यम्।] हद्धी हद्धी ताइं ज्जेव चिरपरिचिताइं

(क) अहो, जानामि प्रियसखी मे वासन्ती व्याहरति। (ख) किं तस्य?

---

(१) वेगादिति पाठान्तरम्। (२) दधती इति पाठान्तरम्।

इंकखराइं पञ्चवटीदंसणेण मं मन्दभाइणीं अणुरुन्धन्ति हा अज्जउत्त ! (क) [ इति मूर्च्छति । ]

प्रविश्य

तमसा । वत्से ! समाश्वसिहि समाश्वसिहि ।

[ नेपथ्ये ]

विमानराज अत्रैव स्थीयताम् ।

सीता । [ ममाश्वस्य ससाध्वसोल्लासम् । ) अह्महे ! जलभरिदमेहत्थणिदगम्भीरमंसलो कुदो णु एसो भारदी-णिग्घोसो ? भरन्तकण्णविवरं मंपि मन्दभाइणीं झत्ति उस्सावेदि । (ख)

तमसा । [ सस्मितास्रम् । ] अयि वत्से !

किमव्यक्तेऽसि निनदे कुतस्त्येऽपि त्वमीदृशी । (१)
स्तनयित्नोर्मयूरीव चकितोत्कण्ठितं (२) स्थिता ॥ ७ ॥

सीता। भअवदि ! किं भणासि अपरिप्फुडेत्ति ? मए

(क) आर्य्यपुत्र । परित्रायस्व परित्रायस्व मम त पुत्रकम् हा धिक् हा धिक् तान्येव चिरपरिचितानि अक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनरुध्यन्ते हा आर्य्यपुत्र । (ख) अहो । जलभृतमेघस्तनितगम्भीरमांसलो कुतो नु एषो भारतीनिर्घोषो भ्रियमाणकर्णविवरां मामपि मन्दभागिनी झटिति उत्क्रामयति ।

---

(१) कुतस्त्ये प्रीतिरीदृशी इति पाठान्तरम् । अपरिस्फुटणिक्काणे इति पाठ क्वचित् । (२) चकितोत्कण्ठिता इति पाठभेदः ।

उण सरसंजोएण पच्चभिआणिदं, अज्जउत्तो ज्जेव वाह-रदि। (क)

तमसा। श्रूयते तपस्यतः किल शूद्रस्य दण्डधारणार्थ-मैक्ष्वाको राजा जनस्थानमागत इति।

सीता। दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राआ। (ख)

[ नेपथ्ये ]

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम्।
एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य गिरेस्तटानि॥ ८॥

सीता। [ दृष्ट्वा। ] हा कधं पहादचन्दमण्डलपाण्डरपरि-क्खामदुब्बलेण आआरेण, अअं (१) सोम्मगम्भीराणुभावमेत्त-पच्चभिआणिदो अज्जउत्तो ज्जेव, ता मं धारेहि (२)। (ग)

इति तमसामाश्लिष्य मूर्च्छति।

तमसा। [ धारयन्ती ] वत्से! समाश्वसिहि समाश्व-सिहि।

(क) भगवति! किं भणसि अपरिस्फुटेति? मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातम्, आर्य्यपुत्र एव व्याहरति। (ख) दिष्ट्या अपरिहीनराजधर्मः खलु स राजा। (ग) हा कथं प्रभातचन्द्रमण्डलपाण्डुरपरिक्षामदुर्बलाकारेण, अयं सौम्य-गम्भीरानुभावमात्रप्रत्यभिज्ञात आर्य्यपुत्र एव, तन्मां धारय।

---

(१) अअं सो गम्भीराणुभावः... इति पाठभेदः। अअं णिअसोम्मगम्भीराणुभाव... इति पाठान्तरम्। (२) ता धारेदु मं पिअसही; भअवदि तमसे धारेहि मम् इति पाठभेदौ।

[ नेपथ्ये ]

अनेन पञ्चवटीदर्शनेन।

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः।
उत्पीड़ इव धूमस्य मोहः प्रागावृणोति माम्॥ ९॥

हा प्रिये जानकि!

तमसा। [ स्वगतम्। ] इदं तदाशङ्कितं गुरुजनेनापि।

सीता [ समाश्वस्य। ] हा! कहं एदं। (क)

[ पुनर्नेपथ्ये ]

हा देवि। दण्डकारण्यवासप्रियसखि! विदेहराजपुत्रि! [ इति मूर्च्छति। ]

सीता। हद्धी हद्धी मं मन्दभाइणिं उद्दिसिअ (१) आमीलन्तणेत्तणीलुप्पलो मुच्छिदो ज्जेव, हा हा कहं धरणीपिट्ठे णिरुस्साहणीसहं विपल्हत्थो, भअवदि तमसे! परित्ताहि परित्ताहि जीवावेहि अज्जउत्तम् (ख)। [इति पादयोः पतन्ति]।

तमसा। त्वमेव ननु कल्याणि! सञ्जीवय जगत्पतिम्।
प्रियस्पर्शो हि पाणिस्ते तत्रैव नियतो भवः(२)॥१०॥

सीता। जं भोदु तं भोदु, जधा भअवदी भणादि। (ग)

ससम्भ्रमं निष्क्रान्ता।

(क) हा! कथमेतत्। (ख) हा धिक् हा धिक् मां मन्दभागिनीमुद्दिश्य आमीलन्नेत्रनीलोत्पलो मूर्च्छित एव, हा हा! कथं धरणीपृष्ठे निरुत्साहनिःसहं विपर्यस्तः, भगवति तमसे! परित्रायस्व परित्रायस्व जीवय आर्य्यपुत्रम्। (ग) यद्भवतु तद्भवतु, यथा भगवती भणति।

---

(१) वाइरिअ इति विद्यासागरधृतः पाठः। (२) तत्रैव निरतोजनः तत्रैव नियताभव इति पाठभेदौ।

ततः प्रविशति भूमौ निपतितः सास्रया सीतया स्पृश्यमानः
साह्लादाक्रान्तो रामभद्रः।

सीता। [ किञ्चित् सहर्षम् आत्मगतम्। ] जाणे पुणोवि पच्चागदं विअ जीविदं तेल्लोअणाहस्स (१)। (क)

रामः। हन्त भोः! किमेतत्?।

प्रश्च्योतनं नु हरिचन्दनपल्लवानां?
निष्पीड़ितेन्दुकरकन्दलजो नु सेकः?
आतप्तजीवनमनःपरितर्पणो (२) मे
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः?॥ ११ ॥

स्पर्शः पुरा परिचितो नियतं स एष
सञ्जीवनश्च मनसः परिमोहनश्च।
सन्तापजां सपदि यः प्रतिहृत्य मूर्च्छा-
मानन्दनेन जड़तां पुनरातनोति ॥ १२ ॥

सीता। [ ससाध्वसोत् (३) कम्पमपसृत्य। ] एत्तिअं ज्जेव दाणिं मे बहुदरं। (ख)

रामः। [ उपविश्य। ] न खलु वत्सलया सीतादेव्या अभ्युपपन्नोऽस्मि?

(क) जानामि पुनरपि प्रत्यागतमिव जीवितं त्रिलोकनाथस्य। (ख) एतावदेव इदानीं मे बहुतरम्।

(१) तेल्लोकस्स इति पाठान्तरम्। (२) जीवितत्तरीः। जीवितपुनःपरितर्पणोऽयं इति पाठान्तरद्वयम्। (३) ससाध्वसकम्पं इति पाठान्तरम्।

सीता। हद्दी हद्दी किं त्ति मं अज्जउत्तो मग्गिस्सदि। (क)

रामः। भवतु, पश्यामि।

सीता। भअवदि तमसे! ओसरह्म, जइ दाव मं पेक्खिस्सदि, तदो अणब्भणुस्सादसस्सिधाणेण अहिअतरं मम महाराओ कुविस्सति। (ख)

तमसा। अयि वत्से! भागीरथीवरप्रभावात् वनदेवतानामपि अदृश्या संवृत्तासि।

सीता। आं, अत्थि एदं। (ग)

रामः। हा प्रिये जानकि।

सीता। [समन्युगद्गदम्।] अज्जउत्त! असरिसं क्खु एदं वअणं इमस्स वुत्तन्तस्स। [सास्रम्।] अहवा किं त्ति वज्जमई जम्मन्तरेसु वि पुणो असम्भाविददुल्लहदंसणस्स मं ज्जेव मन्दभाइणीं उद्दिसिअ वच्छलस्स एवंवादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सं, अहं एदस्स हिअअं जाणामि मम एसोत्ति। (घ)

रामः। [सर्वतो विलोक्य सनिर्वेदम्।] हा! न काचित् अत्र।

(क) हा धिक् हा धिक् किमिति मामार्य्यपुत्रो मार्गिष्यति। (ख) भगवति तमसे! अपसराव:, यदि तावन्मां प्रेक्षिष्यते, तदा अनभ्यनुज्ञातसन्निधानेन अधिकतरं मम महाराजः कोपिष्यति। (ग) आं अस्ति इदम्। (घ) आर्य्यपुत्र! असदृशं खलु एतद्वचनमस्य वृत्तान्तस्य। अथवा किमिति वज्रमयी जन्मान्तरेषु अपि पुनरसम्भावितदुर्लभदर्शनस्य मामेव मन्दभागिनीमुद्दिश्य वत्सलस्य एवंवादिन आर्य्यपुत्रस्य उपरि निरनुक्रोशा भविष्यामि, अहमेतस्य हृदयं जानामि ममापि एष इति।

सीता । भअवदि तमसे ! तहा णिक्कारणपरिच्चाइणोवि एदस्स एदिणा एव्वंविधेण दंसणेण कीदिसो मे हिअआणुबन्धोत्ति ण आणामि ! (क)

तमसा । जानामि वत्से ! जानामि ।

तटस्थं नैराश्यादपि च कलुषं विप्रियवशात्
　वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव ।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
　द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥ १३ ॥

रामः । देवि !

प्रसाद इव मूर्त्तस्ते स्पर्शः स्नेहार्द्रशीतलः ।
अद्याप्यानन्दयति (१) मां त्वं पुनः क्वासि नन्दिनि ॥१४॥

सीता । एदे दे अगाधदंसिदसिणेहसंभारा आणन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा, जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदोवि बहुमदो मे जम्मलाहो । (ख)

रामः । अथवा कुतः प्रियतमा, नूनं सङ्कल्पाभ्यासपाटवोपादान (२) एष रामस्य भ्रमः ।

(क) भगवति तमसे ! तथा निष्कारणपरित्यागिनोऽप्येतस्य एतेन एवंविधेन दर्शनेन कीदृशो मे हृदयानुबन्ध इति न जानामि । (ख) एते ते अगाधदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः श्रुता मया आर्य्यपुत्रस्य उल्लापाः येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः ।

---

(१) अद्याप्येकार्द्रयति मां इति विद्यासागरधृतः पाठः । (२) पाटवोत्पादः इति विद्यासागरधृतः पाठः ।

[ नेपथ्ये ]

प्रमादः प्रमादः। [ सीतादेव्याः स्वकरकलितैरित्यर्द्धं पठ्यते ]।

रामः। [ सकरुणौत्सुक्यम्। ] किं तस्य वत्सस्य ?

[ पुनर्नेपथ्ये ]

वध्वा सार्द्धमित्युत्तरार्द्धं पठ्यते।

सीता। को दाणीं अहिउज्जिस्सदि। (क)

रामः। क्वासौ दुरात्मा यः प्रियायाः पुत्रकं वधूद्वितीय-मभिभवति। [ इति उत्तिष्ठति। ]

प्रविश्य

सम्भ्रान्ता वासन्ती। कथं देवो रघुनन्दनः।

सीता। कहं पिअसही मे वासन्ती। (ख)

वासन्ती। जयति जयति देवः।

रामः। [ निरूप्य। ] कथं देव्याः प्रियसखी वासन्ती।

वासन्ती। देव! त्वर्य्यतां त्वर्य्यताम्, इतो जटायु-शिखरस्य (१) दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य्य सम्भावयतु देव्याः पुत्रकं देवः।

सीता। हा ताद जटाओ! सुण्णं तुए विणा जणट्ठाणं। (ग)

(क) क इदानीमभियोक्ष्यते। (ख) कथं प्रियसखी मे वासन्ती। (ग) हा तात जटायो! शून्यं त्वया विना जनस्थानम्।

---

(१) जटायुशिखरदक्षिणेन इति विद्यासागरधृतः पाठः।

रामः। अहह! हृदयमर्म्मच्छिदः खलु अमी कथोद्घाताः।

वासन्ती। इत इतो देवः।

सीता। भअवदि! सच्चं एव्व बणदेवदावि मं ण पेक्खदि? (क)

तमसा। अयि वत्से! सर्वदेवताभ्यः प्रकृष्टमैश्वर्य्यं भागीरथीदेव्याः, (१) तत् किमाशङ्कसे?

सीता। तदो अणुसरह्म। (ख) [इति परिक्रामतः]

रामः। [परिक्रम्य] भगवति गोदावरि! नमस्ते।

वासन्ती। [निरूप्य] देव, देव! मोदस्व विजयिना बधूद्वितीयेन देव्याः पुत्त्रकेण।

रामः। विजयतामायुष्मान्।

सीता। अह्महे ईदिसो एसो संवुत्तो। (ग)

रामः। देवि! दिष्ट्या वर्द्धसे।

येनोद्गच्छद्विसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु! लवलीपल्लवः कर्णपूरात् (२)
सोऽयं पुत्त्रस्तव मदमुचां वारणानां विजेता
यत् कल्याणं वयसि तरुणे भाजनं तस्य जातः ॥१५॥

(क) भगवति। सत्यमेव वनदेवतापि मां न प्रेक्षते? (ख) ततोऽनुसराव:।
(ग) अहो ईदृश एष संवृत्तः।

(१) मन्दाकिनी देव्याः इति पाठभेदः। (२) कर्णमूलात् इति पाठः क्वचित।

सीता। अविउत्तो दाणीं अअं दीहाउ इमाए सोम्म-दंसणाए होदु। (क)

रामः। सखि वासन्ति! पश्य पश्य कान्तानुवृत्ति-चातुर्य्यमपि शिक्षितं वत्सेन।

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः

पुष्यत् (१) पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।

सेकः शीकरिणा करेण विहितः कामं विरामे पुन-

र्यत् स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम्॥ १६॥

सीता। भअवदि तमसे! अअं दाव ईदिसो जादो, ते उण ण आणामि कुसलवा एत्तिएण कालेन कीदिसा विअ होन्ति। (ख)

तमसा। यादृशोऽयं तादृशो तावपि।

सीता। ईदिसी अहं मन्दभाइणी, जाए ण केअलं णिरन्तरं अज्जउत्तविरहो पुत्तविरहोवि। (ग)

तमसा। भवितव्यता इयमीदृशी।

सीता। किंवा मए पसूदाए, जेण तादिसं पि मम पुत्तकाणं ईसिविरलकोमलधवलदसणुज्जलकवोलं अणुवद्ध-

(क) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु। (ख) भगवति तमसे! अयं तावदीदृशो जातः, तौ पुनर्न जानामि कुशलवौ एतावता काले कीदृशौ इव भवतः। (ग) ईदृशी अहं मन्दभागिनी यस्या न केवलं निरन्तर-मार्य्यपुत्त्रविरहः पुत्त्रविरहोऽपि।

---

(१) पुष्यत्पुष्कर इति पाठान्तरम्।

मुद्धकाअलिविहसिदं णिबद्धकाअसिहण्डअं अमलमुहपुण्डरीअजुअलं ण परिचुम्बिदं अज्जउत्तेण। (क)

तमसा। अस्तु देवताप्रसादात्।

सीता। भअवदि तमसे। एदिणा अपच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी ताणं अ पिदुणो सण्णिधाणेण खणमेत्तं संसारिणी ह्मि संवुत्ता। (ख)

तमसा। किमत्र उच्यते? प्रसवः खलु प्रकर्षपर्य्यन्तः स्नेहस्य। परश्चैतदन्योऽन्यसंश्लेषणं पित्रोः।

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते॥ १७॥

वासन्ती। इतोऽपि देवः पश्यतु।

अतरुणमदताण्डवोत्सवान्ते (१)
स्वयमचिरोद्गतमुग्धलोलबर्हः।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी॥ १८॥

सीता। [सकौतुकास्रम्] एसो सो। (ग)

(क) किं वा मया प्रसूतया, येन तादृशमपि मम पुत्रयोरीषद्विरलकोमलधवलदशनोज्ज्वलकपोलमनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुखपुण्डरीकयुगलं न परिचुम्बितमार्य्यपुत्रेण। (ख) भगवति तमसे। एतेन अपत्यसंस्मरणेन उच्छ्वसितप्रस्नुतस्तनी तयोश्च पितुः सन्निधानेन क्षणमात्रं संसारिणी अस्मि संवृत्ता। (ग) एष सः।

(१) अनुदिवसमवर्द्धयत् प्रिया ते
समचिरनिर्गतमुग्धलीलबर्हम्। इति पाठान्तरम्।

रामः। मोदस्व वत्स ! मोदस्व।

सीता। एव्वं भोदु। (क)

रामः। भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः।
प्रचलितचतुरभ्रूताण्डवैर्मण्डयन्त्या।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥ १९ ॥

हन्त तिर्य्यञ्चोऽपि परिचयमनुरुध्यन्ते।
कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्द्धितो य आसीत्।

सीता। [निरूप्य सास्रम्।] सुट्ठु पच्चभिआणिदं अज्ज-उत्तेण। (ख)

रामः। स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥

वासन्ती। अत्र तावदासनपरिग्रहं करोतु देवः।
एतत्तदेव कदलीवनमध्यवर्त्ति
कान्तासखस्य शयनीयशिलातलं ते।
अत्र स्थिता तृणमदाद् बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

रामः। इदं तावदशक्यमेव द्रष्टुम्। [इति अन्यतो रुदन्नुपविशति।]

सीता। सहि वासन्दि ! किं तुए किदं अज्जउत्तस्स मम

(क) एवं भवतु। (ख) सुष्ठु प्रत्यभिज्ञातमार्य्यपुत्रेण।

अ एदं दंसअन्तीए। हद्धी ! हद्धी ! सो एव्व अज्जउत्तो, तं एव्व पञ्चवटीवणं, सा एव्व वासन्दी, ते एव्व विविहविस्सम्भसाक्खिणो गोदावरीकाणणुद्देसा, ते एव्व जादणिव्विसेसा मिअपक्खिपादवा, सा एव्व चाहं, मम उण मन्दभाइणीए दीसन्तं पि सव्वं एव्व एदं णत्ति, ईदिसो जीअलोअस्स परिवत्तो। (क)

वासन्ती। सखि सीते ! कथं न पश्यसि रामस्य अवस्थाम्।

कुवलयदलस्निग्धै रङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवं नवमेव यः।
विकलकरणः पाण्डुच्छायः (१) शुचा परिदुर्वलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशां प्रियः ॥२२॥

सीता। पेक्खामि सहि ! पेक्खामि। (ख)

तमसा। पश्यन्ती प्रियं भूयाः।

सीता। हा देव्व ! एसो मए विणा, अहम्मि एदेण विणेत्ति सिविणेवि केण सम्भाविदं आसी। ता मुहुत्तकं पि

(क) सखि वासन्ति ! किं त्वया कृतमार्य्यपुत्रस्य मम च एतद्दर्शयन्त्या। हा धिक् ! हा धिक् ! स एव आर्य्यपुत्रः, तदेव पञ्चवटीवनं, सैव वासन्ती, त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः, त एव जातनिर्विशेषा मृगपक्षिपादपाः सैव चाहं, मम पुनर्मन्दभागिन्याः दृश्यमानमपि सर्व्वमेवैतन् नास्तीति तादृशो जीवलोकस्य परिवर्त्तः। (ख) प्रेक्षे सखि ! प्रेक्षे।

(१) पाण्डुःसोऽयं इति विद्यासागरधृतः पाठः।

जम्मन्तरादो विअ लद्धदंसणं बाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तं। (क) [ इति पश्यति ]

तमसा। [ सस्नेहास्रं परिष्वज्य

विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहुलमुग्धा दुग्धकुल्येव दृष्टिः॥ २३॥

वासन्ती।

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः।
कलमविरलं रत्युत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः॥ २४॥

रामः। एहि सखि वासन्ति! नन्वितः स्थीयताम्।

वासन्ती। [ उपविश्य सास्रम् ] महाराज! अपि कुशलं कुमारलक्ष्मणस्य?

रामः। [ अश्रुतिमभिनीय। ]

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत्।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः॥ २५॥

(क) हा देव! एष मया विना, अहमप्येतेन विनेति स्वप्नेऽपि सम्भावितमासीत्। तन्मुहूर्त्तकमपि जन्मान्तरत इव लब्धदर्शनं वाष्पसलिलान्तरेषु पश्यामि तावद्वत्सलमार्य्यपुत्रम्।

वासन्ती। महाराज! ननु पृच्छामि, अपि कुशलं कुमारलक्ष्मणस्य?

रामः। [स्वगतम्] अये महाराजेति निष्प्रणयमामन्त्रणपदं सौमित्रिमात्रे च बाष्पस्खलिताक्षरः कुशलप्रश्नः, तथा मन्ये विदितसीतावृत्तान्तेयमिति। [प्रकाशम्।] आं कुशलं कुमारस्य। [इति रोदिति।]

वासन्ती। अयि देव! किमिति दारुणः खलु असि।

सीता। सहि वासन्दि! किं तुमं सि एव्वंवादिणी, पिआरुहो क्खु सव्वस्स अज्जउत्तो, विसेसदो मम पिअसहिए। (क)

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
वसन्ततिलका त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव, शान्तमथवा किमिहोत्तरेण॥ २६॥

इति मूर्च्छति।

रामः। स्थाने खलु वाक्यनिवृत्तिर्मोहश्च। सखि! समाश्वसिहि समाश्वसिहि।

वासन्ती। [समाश्वस्य।] तत् किमिदमकार्य्यमनुष्ठितं देवेन।

(क) सखि वासन्ति! किं त्वमसि एवंवादिनी, प्रियार्हः खलु सर्वस्य आर्य्यपुत्रः विशेषतो मम प्रियसख्याः।

सीता। सहि वासन्दि! विरम। (क)

रामः। लोको न मृष्यतीति।

वासन्ती। तत् कस्य हेतोः।

रामः। स एव जानाति किमपि।

तमसा। उचितस्तदुपालम्भः।

वासन्ती।

अयि कठोर यशः किल ते प्रियं
किमयशो ननु घोरमतः परम्।
किमभवद्विपिने हरिणीदृशः
कथय नाथ! कथं वत मन्यसे॥ २७॥

सीता। तुमं ज्जेव्व सहि वासन्दि। दारुणा कठोरा अ, जा एव्वं अज्जउत्तं पलित्तं पदीवेसि। (ख)

तमसा। प्रणय एवं व्याहरति शोकश्च।

रामः। सखि! किमत्र मन्तव्यम्।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा (१)
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता॥ २८॥

सीता। अज्जउत्त! धरामि एसा धरामि। (ग)

रामः। हा प्रिये जानकि! क्वासि।

(क) सखि वासन्ति! विरम। (ख) त्वमेव सखि वासन्ति! दारुणा कठोरा च, या एवं आर्य्यपुत्रं प्रदीप्तं प्रदीपयसि। (ग) आर्य्यपुत्र। ध्रिये एषा ध्रिये।

(१) मृदुमुग्ध इति पाठान्तरं।

सीता। हद्धी! हद्धी! अज्जउत्तोवि प्पमुक्तकण्ठं (१) रोइदि। (क)

तमसा। वत्से। साम्प्रतिकमेवैतत्, कर्त्तव्यानि दुःखितै-र्दुःखनिर्वापणानि। यतः।

पूरोत्पीड़े तड़ागस्य परीवाहः प्रतिक्रिया।
शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते ॥ २९ ॥

विशेषतो रामभद्रस्य बहुतरप्रकारकष्टो जीवलोकः।

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्मः क्लमयति। (२)
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥

रामः। कष्टं भोः कष्टम्।

दलति हृदयं गाढ़ोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३१ ॥

सीता। एवमिदम्। (ख)

रामः। हे भवन्तः पौरजानपदाः!

न किल भवतां स्थानं देव्या गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता।

(क) हा धिक! हा धिक्। आर्य्यपुत्रोऽपि प्रमुक्तकण्ठं रोदिति। (ख) एवमिदम्।

(१) रुसी इति पाठभेदः। (२) म्लपयति इति पाठान्तरम्।

चिरपरिचितास्ते ते भावाः परिभ्रमयन्ति माम्
इदमशरणैरद्याप्येवं प्रसीदत रुद्यते ॥ ३२ ॥

तमसा। अतिगम्भीरमापूरणं (१) शोकसागरस्य।

वासन्ती। देव ! अतिक्रान्ते धैर्य्यमवलम्ब्यताम्।

रामः। सखि ! किमुच्यते धैर्य्यमिति।

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः।
लुप्तसीतेति नामापि (२) न च रामो न जीवति ॥ ३३ ॥

सीता। मोहिदह्मि अज्जउत्तस्स एदेहिं वअणेहिं। (क)

तमसा। एवं वत्से !

नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः।
एतास्ता मधुनो धाराश्च्योतन्ति सविषास्त्वयि ॥ ३४ ॥

रामः। अयि वासन्ति। मया खलु

यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दंशः।
तथैव तीव्रो हृदि शोकशङ्कु
र्मर्माणि कृन्तन्नपि किं न सोढः ? ॥ ३५ ॥

सीता। एवं ह्मि मन्दभाइणी पुणोवि आआसआरिणी अज्जउत्तस्स। (ख)

(क) मोहितास्मि आर्य्यपुत्रस्य एतैर्वचनैः। (ख) एवमस्मि मन्दभागिनी पुनरप्यायासकारिणी आर्य्यपुत्रस्य।

(१) अवगूरणं इति विद्यासागरधृतः पाठः। अवगूरणं आवर्त्तः। (२) प्रनष्टमिव नामापि इति पाठान्तरम्।

राम:। एवमतिनिष्कम्पस्तम्भितान्त:करणस्यापि मम संस्तुततत्तत्प्रियवस्तुदर्शनादुद्दामोऽयमावेग: (१)। तथाहि

लोलोल्लोलक्षुभितकरणोज्जृम्भणस्तम्भनार्थं
यो यो यत्न: कथमपि मयाधीयते तं तमन्त:।
भित्त्वा भित्त्वा प्रसरति बलात् कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरय: सैकतं सेतुमोघ:॥ ३६॥

सीता। एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुक्खसंक्खोहेण पप्फुरिदणिअदु:खं बिअ आकम्पिदं मे हिअअं। (क)

वासन्ती। [स्वगतम्।] कष्टमभ्यापन्नो देवस्तदन्यत: क्षिपामि तावत्। [प्रकाशम्] चिरपरिचितानामेतेषां जनस्थानभागानामवलोकनेन आत्मानमानन्दयतु (२) देव:।

राम:। एवमस्तु। [इति उत्थाय परिक्रामति।]

सीता। सन्दीवणाइं ज्जेव दुक्खस्स पिअसही बिणोदणोवाओ त्ति मस्सेदि। (ख)

वासन्ती। देव, देव!

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षण:
सा हंसै: कृतकौतुका चिरमभूद्गोदावरीरोधसि। (३)

(क) एतेन आर्य्यपुत्रस्य दुर्वारदारुणारम्भेन दु:खसंक्षोभेण प्रस्फुरितनिजदु:खमिवाकम्पितं मे हृदयम्। (ख) सन्दीपनानि एव दु:खस्य प्रियसखीविनोदनोपाय इति मन्यन्ते।

(१) अत्यायमावेग इति विद्यासागरधृत: पाठ:। (२) चिरपरिचितानेतान् जनस्थानभागानवलोकयतु देव: इति पाठान्तरम्। (३) सैकते इति पाठान्तरम्।

आयाम्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्य्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥३७॥

सीता। दारुणासि सहि वासन्दि! दारुणासि, जा एदेहिं हिअअमम्मगूढसल्लघट्टनेहिं पुणो पुणो मं मन्दभाइणीं अज्जउत्तं वि सन्दावेसि। (क)

रामः। चण्डि जानकि! इतस्ततो दृश्यसे इव न चानुकम्पसे।

हा हा देवि! स्फुटति हृदयं स्रंसते (१) देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥३८॥

इति मूर्च्छति।

सीता। हद्धी हद्धी पुणोवि प्पमूढो अज्जउत्तो। (ख)

वासन्ती। देव! समाश्वसिहि समाश्वसिहि।

सीता। हा अज्जउत्त! मं मन्दभाइणीं उद्दिसिअ सअलजीअलोअमङ्गलाधारस्स दे वारं वारं संसइदजीविददारुणो दसापरिणामोत्ति हा हदह्मि। (ग)

इति मूर्च्छति।

(क) दारुणासि सखि वासन्ति! दारुणासि, या एतैर्हृदयमर्मगूढशल्यघट्टनैः पुनः पुनर्मां मन्दभागिनीमार्य्यपुत्रमपि सन्तापयसि। (ख) हा धिक्! हा धिक्! पुनरपि प्रमूढ आर्य्यपुत्रः। (ग) हा आर्य्यपुत्र! मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारस्य ते वारं वारं संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि।

(१) ध्वंसते इति विद्यासागरधृतः पाठः।

तमसा। वत्से! समाश्वसिहि समाश्वसिहि, पुनस्त्वत्पाणिस्पर्श एव सञ्जीवनोपायो रामभद्रस्य। (१)

वासन्ती। कथमद्यापि नोच्छ्वसिति, हा प्रियसखि! सीते! क्वासि, सम्भावयात्मनो जीवितेश्वरम्।

सीता। [ससम्भ्रममुपसृत्य हृदि ललाटे च स्पृशति।]

वासन्ती। दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः।

रामः। आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम्॥ ३८॥

[आनन्दनिमीलिताक्ष एव] सखि वासन्ति! दिष्ट्या वर्द्धसे।

वासन्ती। देव कथमिव?

रामः। सखि! किमन्यत्, पुनः प्राप्ता जानकी।

वासन्ती। अयि देव रामभद्र! क्व सा?

रामः। [स्पर्शसुखमभिनीय] पश्य ननु इयं पुरत एव।

वासन्ती। अयि देव! किमिति मर्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि पुनर्मन्दभागिनीं मां दहसि।

सीता। ओसरिदुमिच्छामि, एसो उण चिरसब्भावसोम्मसीअलेन अज्जउत्तप्फंसेण दीहदारुणं वि सन्दावं

---

(१) जीवनोपाय इति विद्यासागरधृतः पाठः।

झत्ति हरन्तेण(१)वज्जलेवोवणद्धो विअ मिहन्तणीसहविपज्जत्थो वेवदि अवसो विअ मे हत्थो। (क)

राम:। सखि ! कुत: प्रलापा:।

गृहीतो य: पूर्वं परिणयविधौ कङ्कणधर-
श्चिरं स्वेच्छास्पर्शैरमृतशिशिरैर्य: परिचित:।

सीता। अज्जउत्त ! सो ज्जेव दाणिं सि तुमम् ? (ख)

राम:। स एवायं तस्यास्तुहिनकरकौपम्यसुभगो उत्प्रेक्षा
मया लब्ध: पाणिर्ललितलवलीकन्दलनिभ: ॥४०॥

[ इति गृह्णाति। ]

सीता। हद्धी हद्धी अज्जउत्तफंसमोहिदाए प्पमादो क्खु मे संवुत्तो। (ग)

राम:। सखि वासन्ति ! आनन्दनिमीलितेन्द्रिय: साध्वसेन परवानस्मि, तत्त्वं तावदेनां धारय।

वासन्ती। कष्टमुन्माद एव।

[सीता। ससम्भ्रममाक्षिप्यापसर्पति।]

राम:। हा धिक् प्रमाद:

(क) अपसर्तुमिच्छामि, एष पुनश्चिरसद्भावसौम्यशीतलेनार्य्यपुत्रस्पर्शेन दीर्घदारुणमपि सन्तापं झटिति हरता वज्रलेपोपनद्ध इव स्विद्यनि.सहविपर्य्यस्तो वेपते अवश इव मे हस्त:। (ख) आर्य्यपुत्र ! स एव इदानीमसि त्वम् ? (ग) हा धिक्। हा धिक् ! आर्य्यपुत्रस्पर्शमोहिताया: प्रमाद: खलु मे संवृत्त:।

(१) सोल्लवन्तेन इति विद्यासागरधृत: पाठ:। सोल्लवन्तेन उल्लपता हरता इत्यर्थ:।

करपल्लवः स तस्याः सहसैव जड़ाज्जड़ः परिभ्रष्टः।
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन्॥४१॥

सीता। हद्धी हद्धी अज्जवि अणवत्थिदत्थिमिदमूढ़घूसन्तणअणो ण पज्जवत्थावेदि अत्ताणअं। (क)

तमसा। सस्नेहहासकौतुकं निर्वर्ण्य।

सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा।
मरुन्नवाम्भःप्रविधूतसिक्ता कदम्बयष्टिः स्फुटकोरकेव॥ ४२॥

सीता। [स्वगतम्] अम्महे! अवसेण एदेण अत्ताणएण लज्जाविदह्मि भअवदीए तमसाए, किंत्ति किल एसा मण्णिस्सदि एसो दे परिच्चाओ एसा अ हिअआसङ्गोत्ति। (ख)

रामः। [सर्वतोऽवलोक्य] हा कथं नास्त्येव, ननु अकरुणे वैदेहि!

सीता। सच्चम् अकरुणह्मि, जा एवंविधं तुमं पेक्खन्ती णं धरामि ज्जेव जीविदम्। (ग)

रामः। क्वासि देवि! प्रसीद न मामेवंविधं परित्यक्तुमर्हसि।

सीता। अइ अज्जउत्त विवरीदं विअ एदं। (घ)

(क) हा धिक् हा धिक् अद्यापि अनवस्थितस्तिमितमूढघूर्णन्नयनो न पर्य्यवस्थापयत्यात्मानम्। (ख) अम्महे! अवशेन एतेनात्मना लज्जापितास्मि भगवत्या तमसया, किमिति किल एषा मंस्यते एष ते परित्यागः एष च हृदयासङ्ग इति। (ग) सत्यमकरुणास्मि, या एवंविधं त्वां पश्यन्ती धराम्येव जीवितम्। (घ) अयि आर्य्यपुत्र! विपरीतमिवेदम्।

वासन्ती। देव! प्रसीद प्रसीद, स्वेनैव लोकोत्तरेण धैर्य्येण संस्तभ्ययातिभूमिगतविप्रलम्भमात्मानं कुतोऽत्र मे प्रियसखी सीता।

रामः। व्यक्तं नास्ति, कथमन्यथा वासन्ती अपि तां न पश्येत्, अपि खलु स्वप्न एष स्यात्, न चास्मि प्रसुप्तः कुतो वा रामस्य निद्रा, सर्वथा स एवैष भगवान् अनेकवारपरिकल्पना-निर्मितो (१) विप्रलम्भः पुनः पुनरनुबध्नाति माम्।

सीता। मए ज्जेव दारुणाए विप्पलद्धो अज्जउत्तो। (क)

वासन्ती। देव! पश्य पश्य।

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः

पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः।

खड्गच्छिन्नजटायुपक्षतिरितः, सीतां ज्वलन्तीं वहन्।

अन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः ॥४३॥

सीता। [सभयम्] अज्जउत्त! तादो वावादीअदि, अहम्ब अवहरिआमि, परित्ताहि परित्ताहि। (ख)

रामः। [सवेगमुत्थाय] आः पापः! तातप्राणसीताप-हारिन्! क्व यासि!

वासन्ती। अयि देव राक्षसकुलप्रलयधूमकेतो! अद्यापि ते मन्युविषयः।

(क) मयैव दारुणया विप्रलब्धः आर्य्यपुत्रः। (ख) आर्य्यपुत्र! तातो व्यापाद्यते, अहञ्चापह्रिये, परित्रायस्व परित्रायस्व।

---

(१) परिकल्पितनिर्म्मितः। परिकल्पितनिर्म्माता इति पाठभेदौ।

सीता। अहो उम्मत्तिअ म्हि संवुत्ता। (क)

रामः। अन्वर्थ एवायमधुना प्रलापो वर्त्तते।

उपायानां भावादविरतविनोदव्यतिकरै (१)
विमर्द्दैर्वीराणां जगति जनितात्यद्भुतरसः।
वियोगो मुग्धाच्या: स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरिदानीन्तु विरहः(२)॥४४॥

सीता। णिरवधित्ति हा हदम्हि मन्दभाइणी। (ख)

[इति रोदिति।]

रामः। हा कष्टम्।

व्यर्थं यत्र कपीन्द्रसख्यमपि मे, वीर्य्यं हरीणां वृथा,
प्रज्ञा जाम्बवतोऽपि, यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्मतनयः कर्त्तुं नलोऽपि चमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये! क्वासि भोः(३)॥४५॥

सीता। वहु मस्साविदम्हि तं पुव्वविरहं। (ग)

रामः। सखि वासन्ति! सुहृदामिदानीं दुःखायैव रामस्य दर्शनं कियच्चिरं त्वां रोदयिष्यामि (४) तदनुजानीहि मां गमनाय।

(क) अहो! उन्मत्ताऽस्मि संवृत्ता। (ख) निरवधिरिति हा हतास्मि मन्दभागिनी। (ग) वहु मानितास्मि तं पूर्वविरहम्।

(१) विनोदव्यतिकरः इति विद्यासागरधृतः पाठः। (२) अयं त्वप्रतिविधः इति विद्यासागरधृतः पाठः। (३) मे इति पाठान्तरम्। (४) तदिदं कियच्चिरं त्वा रोदयिष्यति इति पाठान्तरम्।

सीता। [ सोद्वेगं तमसामवलम्ब्य ] भअवदि तमसे! गच्छदि ज्जेव अज्जउत्तो। (क)

तमसा। वत्से! समाश्वसिहि समाश्वसिहि, ननु आवामपि आयुष्मतोः कुशलवयोर्वर्षवर्द्धनमङ्गलानि (१) सम्पादयितुं भागीरथीपादान्तिकमेव गच्छावः।

सीता। भअवदि! पसीद, खणमेत्तंवि दाव दुल्लहं जणं पेक्खामि। (ख)

रामः। अस्ति चेदानीमश्वमेधाय सहधर्मचारिणी मे।

सीता। [ सोत्कम्पं ] अज्जउत्त! का सा। (ग)

रामः। हिरण्मयी सीतायाः प्रतिकृतिः। (२)

सीता। [ सोच्छ्वासं सास्रम्। ] अज्जउत्तो दाणीं सि तुमं अम्मए उक्खादिदं दाणीं मे परिच्चाअलज्जासल्लं अज्जउत्तेण। (घ)

रामः। तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि।

सीता। धण्णा सा, जा अज्जउत्तेण बहु मण्णीअदि, जा अ अज्जउत्तं विणोदयन्ती आसानिबन्धणं जादा जीअलोअस्स। (ङ)

(क) भगवति वत्से! गच्छत्येवार्य्यपुत्रः। (ख) भगवति! प्रसीद, क्षणमात्रमपि तावत् दुर्लभं जनं पश्यामि। (ग) आर्य्यपुत्र! का सा! (घ) आर्य्यपुत्र इदानीमसि त्वम्, अहो! उत्खातमिदानीं मे परित्यागलज्जाशल्यमार्य्यपुत्रेण। (ङ) धन्या सा, या आर्य्यपुत्रेण बहुमन्यते, या च आर्य्यपुत्रं विनोदयन्ती आशानिबन्धनं जाता जीवलोकस्य।

(१) वर्षग्रन्थिमङ्गलं इति विद्यासागरधृतः पाठः। (२) सीताप्रतिकृतिः इति समस्तः पाठः दृश्यते।

तमसा । [ सस्मितस्नेहास्रं परिष्वज्य । ] अयि वत्से ! एवमात्मा स्तूयते ।

सीता । [ सलज्जमधोमुखी स्वगतम् । ] परिहसिदह्मि भअवदीए । (क)

वासन्ती । महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं प्रति पुनर्यथा कार्य्यहानिर्न भवति तथास्ताम् (१) ।

सीता । पडिउला दाणीं मे वासन्दी संवुत्ता । (ख)

तमसा । वत्से ! एहि गच्छावः ।

सीता । [ सकष्टम् ] एव्वं करेम्ह । (ग)

तमसा । कथं वा गम्यते यस्यास्तव

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः ।
मर्म्मच्छेदपरैर्यत्नैराकर्षो न समाप्यते ॥ ४६ ॥

सीता । णमो णमो अपूव्वपुस्सजणिददंसणाणं अज्जउत्त-चरणकमलाणं । (घ) [इति मूर्च्छति । ]

तमसा वत्से ! समाश्वसिहि समाश्वसिहि ।

सीता । [ समाश्वस्य । ] किअच्चिरं वा मेहन्तरेण पुण्णिमा-चन्दस्स दंसणं । (ङ)

(क) परिहसितास्मि भगवत्या । (ख) प्रतिकूला इदानीं मे वासन्ती संवृत्ता । (ग) एवं कुर्मः । (घ) नमो नमोऽपूर्वपुण्यजनितदर्शनेभ्यः आर्य्यपुत्रचरणकमलेभ्यः । (ङ) कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम् ।

---

(१) तथास्तु इति पाठान्तरम् ।

तमसा । अहो संविधानकम् ।

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान् ।
आवर्त्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा, सलिलमेव तु तत् समग्रम् (१) ॥४७॥

रामः । अयि विमानराज ! इतः इतः ।

[इति सर्व्वे उत्तिष्ठन्ति ।]

तमसावासन्त्यौ सीतारामौ प्रति ।

अवनिरमरसिन्धुः सार्द्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।
स च मुनिरनुयातारुन्धतीको वशिष्ठ-
स्त्वयि (२) वितरतु भद्रं भूयसे मङ्गलाय ॥ ४८ ॥

इति निष्क्रान्ताः सर्व्वे ।

इति छाया नाम तृतीयोऽङ्कः ।

(१) हि तत् समस्तम् इति पाठान्तरम् । (२) तव इति पाठान्तरम् ।

# अथ चतुर्थोऽङ्कः ।

---

ततः प्रविशतस्तापसौ ।

एकः । सौधातकि ! दृश्यतामद्य भूयिष्ठसन्निधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य । तथाहि,

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्य्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्य्यते ॥ १ ॥

सौधा । आअदं अणज्झाअकारणं सविसेसभूदं अज्ज जिस्सकुच्चाणं (१) । (क)

प्रथमः । [ विहस्य ] अपूर्वः कोऽपि ते बहुमानहेतुर्गुरुषु सौधातकि ।

सौधा । भो भाण्डाअण । किंणामधेओ एसो महन्तस्स त्थविरसत्थस्स धुरन्धरो अज्ज अदिधी आअदो (२) । (ख)

भाण्डायनः । धिक् प्रहसनम् । नन्वयमृष्यशृङ्गाश्रमा-

(क) आगतमनध्यायकारणं सविशेषभूतमद्य जीर्णकूर्च्चानाम् । (ख) भो भाण्डायन ! किंनामधेय एष महतः स्थविरसार्थस्य धुरन्धरोऽद्य अतिथिरागतः ।

---

(१) साअदं अनीअपियाराणं जिस्सकुच्चाणं अणज्झाअकारणम् इति पाठान्तरम् ।
(२) इत्थिआ सत्थस्स इति पाठभेदः ।

दरुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान् वशिष्ठः प्राप्तस्तत्किमेवं प्रलपसि।

सौधा। हुं वसिट्ठो। (क)

भाण्डा। अथ किम्।

सौधा। मए उण जाणिदं, वग्धो वा विओ वा एसो त्ति। (ख)

भाण्डा। आः किमुक्तं भवति?।

सौधा। तेण परावडिदेण ज्जेव सा वराइआ कल्लाणिआ मड़मड़ाइदा (१)। (ग)

भाण्डा। समांसो मधुपर्क इति आम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति गृहमेधिनः, तं हि धर्मसूत्रकाराः समामनन्ति। (२)

सौधा भो णिगिहीदोऽसि। (घ)

भाण्डा। कथमिव?

सौधा। जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विस सिदा, अज्जएव्व पच्चागदस्स राएसिणो जणअस्स भअवदा वम्मीएण वि दहिमहूहिं एव्व णिव्वत्तिदो महुवक्को, वच्छदरी उण विसज्जिदा। (ङ)

(क) हु वशिष्ठ। (ख) मया पुनर्ज्ञात, व्याघ्रो वा वृको वा एष इति। (ग) तेन परापतितेनैव सा वराकिका कल्याणिका मड्मडायिता। (घ) भो निगृहीतोऽसि। (ङ) येन आगतेषु वशिष्ठमिश्रेषु वत्सतरी विशसिता, अद्य एव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभिरेव निर्वर्त्तित मधुपर्क, वत्सतरी पुनर्विसृष्टा।

(१) येन . . . सावराईकविला कल्लाणी मडमडाइदा इति पाठान्तरम्।

(२) इति हि धर्मसूत्रकाराः इति विद्यासागरधृतः पाठः।

ভাণ্ডা। অনিবৃত্তমাংসানামেবং কল্পমৃষয়ো মন্যন্তে নিবৃত্তমাংসস্তু তত্রভবান্ জনকঃ।

সৌধা। কিং নিমিত্তম্? (ক)

ভাণ্ডা। স তদৈব সীতাদেব্যাঃ তাদৃশং দৈবদুর্বিপাকমুপশ্রুত্য বৈখানসঃ সংবৃত্তঃ, তথাস্য কতিপয়ে সবৎসরাশ্চন্দ্রদ্বীপতপোবনে তপস্তপ্যমানস্য।

সৌধা। তদো কিংত্তি আঅদো? (খ)

ভাণ্ডা। চিরন্তনপ্রিয়সুহৃদং প্রাচেতসং দ্রষ্টুম্।

সৌধা। অবি অজ্জ সম্বন্ধিণীহিং সমং সংবুত্তং সে দংসণং ণ বেত্তি। (গ)

ভাণ্ডা। সম্প্রত্যেব ভগবতা বশিষ্ঠেন দেব্যাঃ কৌশল্যায়াঃ সকাশং ভগবতী অরুন্ধতী প্রহিতা, যৎ স্বয়মুপেত্য বৈদেহো দ্রষ্টব্য ইতি।

সৌধা। জধা এদে থবিরা পরস্পরমিলিদা, তথা অম্হে বি বটুকেহিং সমং মিলিঅ অণজ্ঝাঅমহূসবং খেলন্তা সম্ভাবেম্হ। (ঘ)

[ইতি পরিক্রামতঃ।]

ভাণ্ডা। তদয়ং ব্রহ্মবাদী পুরাণরাজর্ষির্জনকঃ প্রাচেতসবশিষ্ঠাবুপাস্য সম্প্রতি আশ্রমবহির্বৃক্ষমূলমধিতিষ্ঠতি, য এষঃ।

(ক) কিং নিমিত্তম্? (খ) ততঃ কিমিতি আগতঃ? (গ) অপি অদ্য সম্বন্ধিনীভিঃ সমং সংবৃত্তমস্য দর্শনং ন বেতি। (ঘ) যথা এতে স্থবিরাঃ পরস্পরমিলিতাঃ, তথা বয়মপি বটুকৈঃ সমং মিলিত্বা অনধ্যায়মহোৎসবং খেলন্তঃ সম্ভাবয়ামঃ।

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते।
अन्तःप्रसृप्तदहनो (१) ज्वलन्निव (२) वनस्पतिः॥ २॥

इति निष्क्रान्तौ। विष्कम्भकः।

[ ततः प्रविशति जनक ]

जन।

अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन् मर्माणि क्रकच इव मन्युर्विरमति॥३॥

कष्टम् एवं नाम जरसा दुःखेन च दुरासदेन भूयः पराक-सान्तपनप्रभृतिभिस्तपोभिरात्तरमधातुः अनुपयुज्यमानो (३) न अद्यापि मे दग्धदेहः पतति। अन्धतामिस्रा हि असूर्य्या नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते ये आत्मघातिन इत्येवमृषयो मन्यन्ते, अनेकसंवत्सरातिक्रमेऽपि च प्रतिक्षणपरिभावना-स्पष्टनिर्भासः(४)प्रत्यग्र इव दारुणो न मे दुःखसंवेगः प्रशाम्यति। अयि मातर्देवयजनसम्भवे देवि सीते! ईदृशस्ते निर्माणभागः परिणतः, येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते। हा हा पुत्रि!

---

(१) अन्तःप्रदीप्तदहन इति विद्यासागरधृतः पाठः। (२) जरन्निव इति पाठ-भेदः। (३) अनवष्टम्भः इति पाठान्तरम्। (४) प्रतिक्षणपरिभावनया स्पष्टनिर्भास इति विद्यासागरसम्मतः पाठः।

अनियतरुदितस्मितं विराजत्-

कतिपयकोमलदन्तकुड्मलाग्रम्।

वदनकमलकं शिशोः स्मरामि

स्खलदसमञ्जसमञ्जु (१) जल्पितं ते ॥ ४ ॥

भगवति वसुन्धरे! सत्यमतिदृढ़ासि।

त्वं वह्निमुनयो वशिष्ठगृहिणी गङ्गा च यस्या विदुः

माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः।

विद्यां वागिव यामसूत भवती, तद्वत्तु या दैवतम् (२)

तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणे ऽमृष्यथाः॥५॥

[ नेपथ्ये ] इत इतो भगवतीमहादेव्यौ।

जनकः। [ दृष्ट्वा ] अये! गृष्टिनोपदिश्यमानमार्गा भगवती अरुन्धती। [ उत्थाय ] कां पुनर्महादेवीत्याह। [ निरूप्य ] हा! कथं महाराजदशरथस्य धर्मपत्नी (३) प्रियसखी मे कौशल्या? क एतत् प्रत्येति सैवेयमिति।

आसीदियं दशरथस्य गृहे यथा श्रीः

श्रीरेव वा किमुपमानपदेन, सैषा।

कष्टं बतान्यदिव दैववशेन जाता

दुःखात्मकं किमपि भूतमहो विपाकः॥ ६ ॥

अयमपरःपापो (४) दशाविपर्यासः।

(१) असमञ्जसमुग्धजल्पितम् इति विद्यासागरधृतपाठः। २) शुद्धिं गतायाः पुरः इति पाठान्तरम्। (३) धर्मदाराः इति विद्यासागरधृतः पाठः। (४) अपरप्रायः इति पाठान्तरम्।

य एव मे जनः पूर्वमासीन्मूर्त्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥

ततः प्रविशति अरुन्धती कौशल्या कञ्चुकी च ।

अरु । ननु ब्रवीमि द्रष्टव्यः स्वयमुपेत्य वैदेह इत्येष वः कुलगुरोरादेशः, अतएवाहं प्रेषिता, ततः कोऽयं पदे पदे महान् अनध्यवसायः ।

कञ्चुकी । देवि ! संस्तम्भयात्मानम् अनुरुध्यस्व भगवतो वशिष्ठस्यादेशमिति विज्ञापयामि ।

कौशल्या । ईरिसे काले मिहिलाधिवो दट्ठव्वोत्ति समं ज्जेव सव्वाइं दुक्खाइं समुव्भवन्ति । ण सक्कणोमि उव्वत्तमाण मूलबन्धनं (१) हिअअं अवत्थाविदुं । (क)

अरु । अत्र कः सन्देहः ।

सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

कौशल्या । कहं वच्छाए वहुए एवं गदे तस्स राएसिणो मुहं दंसेम्ह ? (ख)

अरु । एष वः श्लाघ्यसम्बन्धी जनकानां कुलोद्वहः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

(क) ईदृशे काले मिथिलाधिपो द्रष्टव्य इति समम् एव सर्वाणि दुःखानि समुद्भवन्ति । न शक्नोमि उद्वर्त्तमानमूलबन्धनं हृदयमवस्थापयितुम् । (ख) कथं वत्साया वध्वा एवं गते तस्य राजर्षे मुखं दर्शयामः ? ।

(१) उग्घट्टमाणमूलबन्धनं इति विद्यासागरधृतः पाठः ।

कौशल्या । एसो सो महाराअस्स हिअआणन्दो वच्छाए वहूए पिदा राएसी, हद्धी हद्धी सम्भाविदम्हि अणुवट्ठिदमहूसवे दिअहे । हा देव्व ! सव्वं एव्व तं णत्थि । (क)

जनकः । [ उपसृत्य । ] भगवति अरुन्धति ! वैदेहः सीरध्वजोऽभिवादयते ।

यया पूतम्मन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः ।
त्रिलोकीमङ्गल्यामवनितललोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ १० ॥

अरु । परं ज्योतिस्ते प्रकाशताम्, अयं त्वां पुनातु देवः परोरजा य एष तपति । (१)

जनकः । आर्य्य गृष्टे ! अपि कुशलमस्याः प्रजापालमातुः ।

कञ्चुकी । [ स्वगतम । ] निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः । [ प्रकाशम् ] राजर्षे ! अनेनैव मन्युना चिरपरित्यक्तरामभद्रमुखचन्द्रदर्शनां नार्हसि त्वं दुःखयितुमतिदुःखितां देवीम् । रामभद्रस्यापि (२) दैवदुर्नियोगः कोऽपि, यत् किल समन्तात् प्रवृत्तवीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निपरिशुद्धिमप्यल्पकाः प्रतियन्ति इत्यतो दारुणमनुष्ठितम् देवेन ।

(क) एषः स महाराजस्य हृदयानन्दी वत्सायाःवध्वाः पिता राजर्षिः हा धिक् हा धिक् सम्भाविता अस्मि अनुपस्थितमहोत्सवे दिवसे, हा दैव ! सर्वमेव तन्नास्ति ।

(१) परो रजसां इति पाठान्तरम् । (२) रामभद्रेणापि समन्तात् प्रवर्त्तितवीभत्स-किंवदन्तीकाः......दारुणमनुष्ठितमिति विद्यासागरधृतपाठः ।

जनकः । आः ! कोऽयमग्निर्नाम अस्मत्प्रसूतिपरिशोधने, कष्टमेवंवादिना जनेन रामपरिभूता अपि वयं पुनः परिभूयामहे ।

अरु । [ निःश्वस्य ] एवमेतत्, अग्निरिति वत्सां प्रति परिलघूनि अक्षराणि, सीतेत्येव पर्य्याप्तम् । हा वत्से !

शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढ़यति (१) ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥११॥

कौशल्या । अम्भो उन्मीलन्ति वेअणाओ । (क) [ इति मूर्च्छति । ]

जनकः । हा कष्टं ! किमेतत् ।

अरु । राजर्षे ! किमन्यत् ।

स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम् ।
विपाके घोरेऽस्मिन्नथ (२) खलु विमूढ़ा तव सखी
पुरन्ध्रीणां चित्तं (३) कुसुमसुकुमारं हि भवति ॥ १२ ॥

जनकः । हन्त हन्त सर्वथा नृशंसोऽस्मि संहरः यच्चिरस्य दृष्टान् प्रियसुहृदः प्रियान् दारान् न स्निग्धं पश्यामि ।

(क) अह्मो उन्मीलन्ति वेदनाः ।

(१) जनयति इति विद्यासागरधृतपाठः । (२) ननु खलु इति विद्यासागरधृतः पाठः । (३) चीतः इति विद्यासागरधृतः पाठः ।

स सम्बन्धी श्लाघ्यः प्रियसुहृदसौ, तच्च हृदयम्,
स चानन्दः साक्षादपि च निखिलं जीवितफलम्।
शरीरं जीवो वा, यदधिकमतो वा प्रियतमो
महाराजः श्रीमान् किमिव मम नासीद्दशरथः॥ १३॥

कष्टम् इयमेव सा कौशल्या।

यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः।
प्रमादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत् स्मृत्वा दहति यदवस्कन्द्य हृदयम्॥ १४॥

अरु। हा कष्टम्! अतिचिरनिरुद्धनिश्वासनिष्ठुरं हृदयमस्याः।

जनकः। हा प्रियसखि!

[इति कमण्डलूदकेन (१) सिञ्चति।]

कञ्चुकी। सुहृदिव प्रकटय्य सुखप्रदः
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम्॥१५॥

कौशल्या। [संज्ञां लब्ध्वा] हा वच्छे जाणइ! कहिं सि, सुमरामि दे विआहलच्छीपरिग्गहेक्कमण्डणं पप्फुरन्तसुद्धविहसिदंमुद्धमुहपुण्डरीअं, आपफुरन्तचन्दचन्दिआसुन्दरेहिं अङ्गेहिं पुणोवि मे जादे उच्छोएहि उच्छङ्गं सव्वदा महा-

(१) कमण्डलुजलेन इति विद्यासागरधृतः पाठः।

राम्रो भणादि, एसा रहुउलमहत्तराणं बहु, अम्हाणं उण जणअसम्बन्धेण दुहिदिआ एव्व। (क)

कञ्चुकी। यथाह देवी।

पञ्चप्रसूतेरपि राज्ञ आसीत् प्रियो विशेषेण सुबाहुशत्रुः।
वधूचतुष्केऽपि यथाहि शान्ता प्रिया तनूजास्य तथैव सीता ॥१६॥

जनकः। हा प्रियसखे महाराज दशरथ! एवमसि सर्व्वप्रकारहृदयङ्गमः कथं विस्मर्य्यसे।

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि।
त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धबीजञ्च तद्
घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग्जीवितम् ॥१७॥

कौशल्या। जादे जाणइ! किं करेमि, दढ़बज्जलेबघड़िअबन्धणिच्चलं हदजीविद मं मन्दभाइणीं ण परिच्चअइ। (ख)

अरु। आश्वसिहि राजपुत्रि! वाष्पविश्रामोऽप्यन्तराले(१) कर्त्तव्य एव अन्यच्च किं न स्मरसि, यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरुस्तदुपजातमेव, (२) किन्तु कल्याणोदर्कं भविष्यति।

(क) हा वत्से जानकि! क्वासि, स्मरामि ते विवाहलक्ष्मीपरिग्रहैकमण्डन प्रस्फुरत्कुन्दविहसितमुग्धमुखपुण्डरीकम्, आस्फुरच्चन्द्रचन्द्रिकासुन्दरैरङ्गैः पुनरपि मे जाते उद्योतयोत्सङ्ग सर्वदा महाराजो भणति, एषा रघुकुलमहत्तराणां वधूः, अस्माकं पुनर्जनक सम्बन्धेन दुहिता एव। (ख) जाते जानकि! किं करोमि, दृढवज्रलेपघटितबन्धनिश्चलं हतजीवितं मां मन्दभागिनी न परित्यजति।

(१) अन्तरे इति पाठान्तरम्। (२) तत्तथैवोपजातमेव इति पाठभेदः।

कौशल्या । भअवदि ! अदिक्कन्तो मणोरहो (१) । (क)

अरु । तत् किं मन्यसे राजपुत्रि ! (२) मृषोद्यं तदिति, नह्येदं सुचरिते अन्यथा मन्तव्यं, भवितव्यमेव तेन ।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयो भूत् ।
भद्रा ह्येषा वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥ १८ ॥

नेपथ्ये कलकलः ।

सर्वे आकर्णयन्ति ।

जनकः । अद्य खलु शिष्टानध्याय इत्युद्धतं खेलतां वटूनां कलकलः ।

कौशल्या । सुलहसोक्खं दाव बालत्तणं होदि ।

[ निरूप्य ] अम्महे ! एदाणं मज्झे को एसो रामभद्दल-च्छीपरिसोहिदेहिं सावट्टम्भमुद्धललिदेहिं अङ्गेहिं अह्माणं लोअणाइं सीदलावेदि । (ख)

अरु । [ अपवार्य्य सहर्षोत्कण्ठं स्वगतम् ] इदं नाम तद्भागीरथीनिवेदितरहस्यं कर्णामृतं, नत्वेवं विद्मः कतरो-ऽयमायुष्मतोः कुशलवयोरिति ।

(क) भगवति ! अतिक्रान्तो मनोरथ. । (ख) सुलभसौख्यं तावद बालत्वं भवति । अहो ! एतेषां मध्ये क एष रामभद्रलक्ष्मीपरिशोभितैः सावष्टम्भमुग्ध-ललितैरङ्गैरस्माकम् लोचनानि शीतलयति ।

(१) कुदो अदिक्कन्दमणोरहाएमह एदम् इति पाठान्तरम् । (२) राजपत्नि इति पाठान्तरम् ।

जनकः। कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो (१)
वटुपरिषदं पुण्यश्लोकः श्रियेव सभाजयन्।
पुनरिव शिशुर्भूता (२) वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥१६॥

कञ्चुकी। नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये।

जनकः। एवमेतत्। तथाहि,

चूड़ाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोमपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्। (३)
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठिकम्
पाणौ कार्मुकमक्षसूत्रवलयं दण्डं तथा पैप्पलम् ॥२०॥ (४)

भगवति अरुन्धति! किमुत्प्रेक्षसे कुतस्त्योयमिति।

अरु। अद्यैव वयमागताः।

जनकः। आर्य्य गृष्टे! अतीव मे कौतुकं वर्त्तते। तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ, इमञ्च बालकं ब्रूहि, कोऽप्येति प्रवयसस्त्वां दिदृक्षव इति।

कञ्चुकी। यदाज्ञापयसि। [ इति निष्क्रान्तः। ]

कौशल्या। किं भणध, एवं भणिदो आगमिस्सदित्ति (क)

अरु। भिद्येत वा सद्वृत्तमीदृशस्य निर्माणस्य? (५)।

कौशल्या। [ निरूप्य। ] कहं सविणअं णिसामिदगिद्धिव-

(क) किं भणथ, एवं भणित आगमिष्यतीति।

(१) श्यामस्निग्ध इति पाठान्तरम्। (२) भूत्वा इति पाठभेदः।
(३) भस्मस्तोकपवित्र इति पाठान्तरम्। (४) दण्डोऽपरः पैप्पलः इति भिन्नः पाठः।
(५) भिद्येत किं इति पाठान्तरम्।

अणो विसज्जिदइमिदारओ इदो अहिमुहं पसरिदो ज्जेव सो वच्छो। (क)

जनकः। [ चिरं निर्वर्ण्य। ] भोः किमपेतत।

मह्निम्नामेतस्मिन् विनयशिशुतामौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः।
मनो मे सम्मोदः स्थिरमपि हरत्येव बलवान्
अयोधातुं यद्वत् परिलघुरयस्कान्तशकलः॥ २१॥

[ प्रविश्य लवः स्वगतम् ] अज्ञातनामक्रमाभिजनान् पूज्यानपि नः स्वतः कथमभिवादयिष्ये। [ विचिन्त्य ] अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते। [ सविनयमुपसृत्य ] एष वो लवस्य शिरसा प्रणामपर्य्यायः।

[ अरुन्धतीजनकौ। ] कल्याणिन् आयुष्मान् भूयाः।

कौशल्या। जाद! चिरं जीव. (ख)

अरु। एहि वत्स! [इति लवमुत्सङ्गे कृत्वा स्वगतम्।](१) दिष्ट्या न केवलमुत्सङ्गश्चिरात् मनोरथोऽपि मे सम्पूर्णः।

कौशल्या। जाद! इदो वि दाव एहि [उत्सङ्गे कृत्वा](२) अम्महे ण केअलं दरविअसन्तणीलुप्पलसामलुज्जलेण देह बन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसणिणाददो- हरदोहरेण सरेण अ रामभद्दमणुहरदि, णं कठोरकमलगब्भ-

(क) कथं सविनय निशामितगृष्टिवचनो विसर्जितर्षिदारकः इतोऽभिमुख प्रसृत एव स वत्सः। ख) जात। चिरं जीव।

(१) उत्सङ्गे कृत्वा अपवार्य्य इति विद्यासागरधृत: पाठः। (२) क्रोडे कृत्वा उत्सङ्गे गृहीत्वा इति पाठभेदौ।

पक्खलो सरीरप्फंसोवि तादिसो ज्जेव वच्छस्स । जाद (१) पेक्खामि दाव दे मुहचन्दम् । [चिबुकमुन्नमय्य निरूप्य सवाष्पाकूतम् ] राएसि ! किं ण पेक्खसि, णिउणं णिरूविज्जमाणं से मुहं वच्छाए मुहचन्देण संवददि ज्जेव । (क)

जनकः । पश्यामि सखि ! पश्यामि ।

कौशल्या । अम्मो उम्मत्तीभूदं विश्र मे हिअअं, किम्पि चिन्तअन्तो बहु विप्पलवदि । (ख)

जनकः । निरूप्य ।

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सम्पूर्णप्रतिविम्बितेव निखिला सैवाकृतिः सा द्युतिः (२) ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा दैव ! किमुत्पथैर्मम मनः पारिप्लवं धावति ॥२२॥

कौशल्या । अत्थि दे मादा, सुमरसि वा तादं । (ग)

(क) जात ! इतोऽपि तावदेहि । अहो न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहवन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनादद्दीर्घदो स्वरेण च रामभद्रमनुहरति, ननु कठोरकमलगर्भपक्ष्मलः शरीरस्पर्शोऽपि तादृश एव वत्सस्य । जात ! प्रेक्षे तावत्ते मुखचन्द्रम् । राजर्षे ! किं न प्रेक्षसे, निपुणं निरूप्यमाणम् अस्य मुखं वत्साया बध्वा मुखचन्द्रेण संवदति एव । (ख) अहो उन्मत्तीभूतमिव मे हृदयं, किमपि चिन्तयत् बहु विप्रलपति । (ग) अस्ति ते माता, स्मरसि वा तातम् ।

(१) जीवजाद इति पाठः विद्यासागरधृतः । (२) सम्पूर्णं प्रतिविम्बितेव, सम्पूर्णप्रतिविम्बितेव इति पाठान्तरे ।

लवः। नहि नहि।

कौशल्या। तदो कस्स तुमं। (क)

लवः। भगवतो वाल्मीकेः।

कौशल्या। अइ जाद! कहिदव्वं कहेहि। (ख)

लवः। एतावदेव जानामि।

[नेपथ्ये।] भोः भोः सैनिकाः! एष खलु कुमारश्चन्द्रकेतुराज्ञापयति, न केनचिदाश्रमाभ्यर्णभूमिराक्रमितव्येति।

[अरुन्धतीजनकौ।] अये! मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो सुदिवसः। (१)

कौशल्या। वच्छलक्खणस्स पुत्तको आणवेदित्ति अमिअबिन्दुसुन्दराइं अक्खराइं सुणोअन्ति। (ग)

लवः। आर्य्य! क एष चन्द्रकेतुर्नाम।

जनकः। जानासि रामलक्ष्मणौ दाशरथी।

लवः। एतावेव रामायणकथापुरुषौ। (२)

जनकः। तत् कथं न जानासि तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः।

लवः। ऊर्मिलापुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः।

अरु। [विहस्य।] आविष्कृतं कथाप्रावीण्यं वत्सेन (३)।

(क) ततः कस्य त्वम्। (ख) अयि जात! कथयितव्यं कथय। (ग) वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतविन्दुसुन्दराण्यक्षराणि श्रूयन्ते।

---

(१) द्रष्टव्य अहो सुदिवसः इति विद्यासागरधृतः पाठः। (२) तावेव रामायणकथा इति विद्यासागरधृतः पाठः। (३) कुमारेण इति विद्यासागरधृतः पाठः।

जनकः । [विचिन्त्य ।] यदि त्वमीदृशः कथायामभिज्ञस्तद् ब्रूहि तावत् पृच्छामस्तेषां दशरथात्मजानां किन्नामधेयानि अपत्यानि केषु दारेषु प्रसूतानि ? (१)

लवः । नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

जनकः । किं न प्रणीतः कविना ?

लवः । प्रणीतो न तु प्रकाशितः । तस्यैव खलु कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः, तच्च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भरतस्य मुनेस्तौर्य्यत्रिकसूत्रकारस्य ।

जनकः । किमर्थम् ?

लवः । स किल भगवान् (२) भरतस्तमप्सरोभिः प्रयोजयिष्यतीति ।

जनकः । सर्वमिदमस्माकमाकूतकरम् ।

लवः । महती पुनस्तस्मिन् भगवतो वाल्मीकेरास्था, केषाञ्चिदन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति (३) प्रेषितम् । तेषामानुयात्रिकश्चापपाणिः प्रमादापनोदनार्थमस्मद्भ्राता प्रेषितः । (४)

कौशल्या । जाद ! भादावि दे अत्थि ? (क)

लवः । अस्ति आर्य्यः कुशो नाम ।

(क) जात ! भ्रातापि तेऽस्ति ।

(१) केषु केषु इति पाठान्तरम् । (२) स किल भगवान् तम् इति विद्यासागरधृतः पाठः । (३) तत् पुस्तकं भरताश्रमं प्रेषितम् इति विद्यासागरधृतः पाठः । (४) अप्रमादार्थमिति क्वचित् पाठः ।

कौशल्या। जेट्ठोत्ति भणिदं होदि। (क)

लवः। एवमेतत्, प्रसवक्रमेण स किल ज्यायान् इति।

जनकः। किं यमजावायुष्मन्तौ ?

लवः। अथ किम्।

जनकः। कथय कथाप्रबन्धस्य कीदृशः पर्य्यन्तः ?

लवः। अलोकपौरप्रवादोद्विग्नेन राज्ञा निर्वासितां देवयजनसम्भवां सीतादेवीमासन्नप्रसववेदनामेकाकिनीमरण्ये परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति।

कौशल्या। हा वच्छे मुद्धचन्दमुहि! को दाणिं दे कुसुमभूदस्स सरीरस्स (१) देव्वदुव्विलासपरिणामो एआलिआए णिवड़िदो। (ख)

जनकः। हा वत्से!

नूनं त्वया परिभवञ्च नवञ्च घोरं
तांश्च व्यथां प्रसवकालकृतामवाप्य।
क्रव्याद्गणेषु परितः परिवारयत्सु
सन्त्रस्तया शरणमित्यसकृत् स्मृतोऽस्मि॥२३॥

लवः। [अरुन्धतीं प्रति।] आर्य्ये! कावेतौ ?

अरु। इयं कौशल्या, अयं जनकः।

लवः। [सबहुमानखेदकौतुकं पश्यति।]

(क) ज्येष्ठ इति भणितं भवति। (ख) हा वत्से मुग्धचन्द्रमुखि! क इदानीं ते कुसुमभूतस्य शरीरस्य दैवदुर्बिलास परिणामएकाकिन्या निपतितः।

---

(१) शरीरकुसुमस्स इति विद्यासागरधृत: पाठः

जनकः। अहो दुर्मर्य्यादता दुरात्मनां पौराणाम्, अहो रामस्य राज्ञः क्षिप्रकारिता।

एतद्वैशसघोरवज्रपतनं शश्वन्ममोत्पश्यतः।
क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा ॥ २४ ॥

कौशल्या। भअवदि! परित्ताहि, परित्ताहि, पसादेहि कुविदं राएसिं। (क)

अरु। एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम्।
राजन्नपत्यं रामस्ते पाल्याश्च कृपणाः प्रजाः ॥ २५ ॥

जनकः। शान्तं वा रघुनन्दने तदुभयं तत्पुत्रभाण्डं हि मे।
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥ २६ ॥

[ प्रविश्य संभ्रान्ता वटवः। ] कुमार! अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेषु श्रूयते, सोऽयमधुनास्माभिः प्रत्यक्षीकृतः।

लवः। अश्व इति पशुसमाम्नाये सांग्रामिके च पठ्यते, वद्ब्रूत कीदृशः।

वटवः। श्रूयताम्।

पश्चात् पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं वाख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥२७॥

इति उपसृत्याजिने हस्तयोश्चाकर्षन्ति।

(क) भगवति! परित्राहि परित्राहि, प्रसादय कुपितं राजर्षिम्।

लवः। [ सकौतुकपरोधविनयम्। ] आर्य्याः! पश्यत पश्यत, एभिर्नीतोऽस्मि। [ इति त्वरितं परिक्रामति। ]

[ अरुन्धतीजनकौ। ] पूरयतु कुतूहलं वत्सः (१)।

कौशल्या। भअवदि! जाणामि, एदं अणालोअअन्तो ण जीआमि विअ. अदो असदो भविअ पेक्खम्ह दाव गच्छमाणं दीहाउम्। (क)

अरु। अतिजवेन (२) दूरमतिक्रान्तः स चपलः कथं दृश्यते।

प्रविश्य

कञ्चुकी। भगवान् वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति।

जनकः। अतिगम्भीरमेतत् किमपि भविष्यति। भगवति अरुन्धति! सखि कौशल्ये! आर्य्ये गृष्टे! स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः।

[ इति निष्क्रान्तो वृद्धवर्गः। ]

वटवः। पश्यतु कुमारस्तदाश्चर्य्यम्।

लवः। दृष्टमवगतञ्च नूनमाश्वमेधिकोऽयमश्व इति।

वटवः। कथं ज्ञायते?

(क) भगवति। जानामि, एतमनालोकयन्ती न जीवामीव, अतोऽन्यतो भूत्वा पश्यामस्तावद्गच्छन्तं दीर्घायुषम्।

(१) कौतुक वत्सः इति विद्यासागरधृतः पाठ.। (२) दूरमतिक्रान्तः स चपलः इति विद्यासागरधृतः पाठः।

लवः। ननु मूर्खाः! पठितमेव युष्माभिस्तत्काण्डे। किं न पश्यथ, प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारस्तत्प्रायमेववलमिदमपि दृश्यते, यदि इह न प्रत्यय स्तद्गत्वा पृच्छत।

वटवः। भोः भोः! किम्प्रयोजनोऽयमश्वः परिवृतः पर्य्यटति।

लवः। [ सस्पृहमात्मगतम्। ] अये! अश्वमेध इति विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रियपरिभावी महान् उत्कर्षनिष्कर्षः (१)

[ नेपथ्ये ]

अयमश्वः पताकेयमथवा वीरघोषणा।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः॥ २८॥

लवः। [ सव्यथमिव ] अहो! सन्दीपनानि अक्षराणि।

वटवः। किम् उच्यते, प्राज्ञः खलु कुमारः।

लवः। भोः भोः! तत् किमक्षत्रिया पृथ्वी? यदेवमुद्घत मुद्घोष्यते (२)। [ नेपथ्ये ]

अरे! महाराजं प्रति कुतः क्षत्रियाः?

लवः। धिग् जाल्मान्।

यदि ते सन्ति सन्त्येव, केयमन्या विभीषिका।
किमुक्तैः सन्निपत्यैव पताकां (३) वो हराम्यहम्॥२९॥

(१) उत्कर्षनिकषः इति पाठान्तरम्। (२) यदेव मुदीर्य्यते इति विद्यासागर धृतः पाठः। (३) एभिरधुना तां पताकां हरामि वः। परसम्बाधां पताकां वो हराम्यहम् इति पाठभेदौ।

भो भो वटवः! परिवृत्य लोष्टैरभिघ्नन्तो नयत (१) एनमश्वम्। एष रोहितानां मध्ये वराकश्चरतु।

[प्रविश्य सक्रोधदर्पः पुरुषः।] धिक् चापलं, किमुक्तवानसि, तीक्ष्णनीरसा ह्यायुधीयश्रेणयः शिशोरपि दृप्तां वाचम् न सहन्ते, राजपुत्रश्चन्द्रकेतुररिविमर्द्दनः सौम्यपूर्वारण्यदर्शनकौतूहलाक्षिप्तहृदयो न यावदायाति तावत् त्वरितमनेन तरुगहनेनापसर्पत (२)।

वटवः। कुमार कृतमनेनाश्वेन, तर्जयन्ति विस्फुरितशस्त्राः कुमारमायुधीयश्रेणयः, दूरे चाश्रमपदमितस्तदेहि हरिणप्लुतैः पलायामहे।

लवः। [स्मितं कृत्वा] किं नाम विस्फुरन्ति शस्त्राणि।

[धनुरारोपयन्।]

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारि घोरघनघर्घरघोषमेतत्।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम्॥ ३०॥

[इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे]।

इति कौशल्याजनकयोगो नाम चतुर्थोऽङ्कः।

---

(१) परावर्त्तयत इति विद्यासागरधृत पाठः। (२) न परापतत्यद्यापि तत् त्वरितमपसर्पतानेन तरुगहनेन इति पाठान्तरम्। अरिविमर्द्दनः इत्यत्र आकृष्टशरासनः इति पाठभेदः।

# अथ पञ्चमोऽङ्कः ।

[ नेपथ्ये ]

भोः भोः सैनिकाः ! जातं जातमवलम्बनमस्माकम् ।

नन्वेष त्वरितसुमन्त्रनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन ।
उद्घातप्रचलितकोविदारकेतुः (१) प्रहर्षिणी
श्रुत्वा वः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः
साद्भुतहर्षसम्भ्रमश्चन्द्रकेतुः ।

चन्द्र । आर्य्य सुमन्त्र ! पश्य ! पश्य !

किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रनवरतनिगुञ्जत्कोटिना कार्मुकेण । श्याम
समरशिरसि चञ्चत्पञ्चचूडश्चमूनाम् मालिनी
उपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ २ ॥

आश्चर्य्यम् !

मुनिजनशिशुरेकः सर्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः ।
दलितकरिकपोलग्रन्थिटङ्कारघोर- (२) मालिनीवृत्त
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ३ ॥

आश्चर्य्यमाश्चर्य्यम् !

---

(१) उद्घातप्रचलितकोविदारकेतु इति पाठः विद्यासागरधृतः ।

(२) टङ्कारघोरं इति पाठः विद्यासागरधृतः ।

सुमन्त्रः । आयुष्मन् !

अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥४॥

चन्द्र । इमन्त्वेकमुद्दिश्य (१) भूयसामारम्भ इति हृदयमपत्रपते ।

अयं हि शिशुरेकक: समरभारभूरिस्फुरत्-
करालकरकन्दलीकलित (२) शस्त्रजालैर्बलैः ।
क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमदुर्दिनद्विरदवारिदैरावृतः ॥ ५ ॥

सुमन्त्रः । वत्स ! एभिः समस्तैरपि किमस्य, किं पुनर्व्यस्तैः ।

चन्द्र । आर्य्य । त्वर्य्यताम् त्वर्य्यतामनेन हि महानाश्रितजनप्रमाथोऽस्माकमारब्धः । तथाहि,

आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवः (३)
तृप्यत्कालकरालवक्त्रविघसव्याकीर्य्यमाणा इव ॥६॥

सुमन्त्रः । [ स्वगतम् । ] कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसम्प्रहारमनुजानीयाम् (४) । [ विचिन्त्य । ] अथवा इक्ष्वाकुगृहवृद्धाः खलु वय, प्रत्युपस्थिते (५) च का गतिः ।

---

(१) समस्तैकमुद्दिश्य इति पाठान्तरम् । (२) जटिल इति पाठान्तरम् । (३) भुवमिति पाठः क्वचित् दृश्यते । (४) अनुजानीमः इति पाठान्तरम् । (५) इक्ष्वाकुकुलवृद्धाः......प्रत्युपस्थिते रणे च.. इति पाठान्तरम् ।

चन्द्र। [सविस्मयलज्जासम्भ्रमम्।] धिक् प्रतिनिवृत्तानि सर्वतः सैन्यानि मम।

सुमन्त्रः। [रथवेगमभिनीय।] आयुष्मन्! एष वाग्विषयीभूतस्ते स वीरः।

चन्द्र। [विस्मृतिमभिनीय।] आर्य्य! किमस्य नामधेयमाख्यातमाख्यायकैः।

सुमन्त्रः। वत्स! लव इति।

चन्द्र।

भो भो लव! महाबाहो! किमेभिस्तव सैनिकैः?।
एषोऽहमेहि मामेव, तेजस्तेजसि शाम्यतु॥ ७॥

सुमन्त्रः। कुमार। पश्य पश्य।

व्यपवर्त्तत एष बालवीरः पृतनानिर्मथनात् त्वयोपहूतः।
स्तनयित्नुरवादिभावलीनामवमर्दादिव दृप्तसिंहशावः॥ ८॥

[ततः प्रविशति त्वरितोद्धतक्रमो लवः।]

लवः। साधु, राजपुत्र! साधु, सत्यमैक्ष्वाकः खल्वसि तदयं परागत एवास्मि।

[नेपथ्ये महान् कलकलः।]

लवः। [सावेगं परावृत्त्य।] कथमिदानीं भग्ना अपि प्रतिनिवृत्य युद्धाभिसारिणः पर्य्यवष्टभ्य निघ्नन्ति मां चमूपतयः धिग् जाल्मान्!

अयं शैलाघातक्षुभितवडवावक्त्रहुतभुक्
प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे।

पृथ्वी समन्तादुत्सर्पन् घनतुमुलसेनाकलकलः
(शिखरिणी) पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

इति परिक्रामति।

चन्द्र। भो भोः कुमार !

अत्यद्भुतादसि गुणातिशयात् प्रियो मे,
तस्मात् सखा त्वमसि, यन्मम तत्तवैव।
तत्किं निजे परिजने कदनं करोषि
वसन्ततिलक नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

लवः। [सहर्षसम्भ्रमं परावृत्य] अहो महानुभावस्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्त्तनकुलकुमारस्य। तत् किमेभिः एनमेव तावत् सम्भावयामि।

[पुनर्नेपथ्ये कलकलः।]

लवः। [सक्रोधनिर्वेदम्।] आः कदर्थितोऽहमेभिः वीरसंवादविघ्नकारिभिः [तदभिमुखं परिक्रामति।]

चन्द्र। आर्य्य ! दृश्यतामेतद्द्रष्टव्यम्।

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा।
निदर्शना द्वेधा समुद्धतमरुत्तरलस्य धत्ते
वसन्ततिलक मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ११ ॥

सुमन्त्रः। कुमार एवैनं द्रष्टुमपि जानाति, वयन्तु केवलं परवन्तो विस्मयेन।

चन्द्र। भो भो राजानः !

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्वेकस्मिन् कवचनिचितैर्मध्यचर्मोत्तरीये।
कालज्येष्ठैरभिनववयःकाम्यकाये (१) भवद्भि-
र्योऽयं बद्धो युधि परिकरस्तेन वो धिग् (२) धिगस्मान्॥१२॥

लवः। [सक्षोभम्।](३) कथमनुकम्पते नाम। [विचिन्त्य] भवतु, कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि। [इति ध्यानं नाटयति।]

सुमन्त्रः। तत्किमकस्मात् अस्मत्सैन्यघोषः प्रशाम्यति ?

लवः। पश्याम्येनमधुना प्रगल्भम् (४)

सुमन्त्रः। [ससम्भ्रमम्।] वत्स! मन्ये कुमारेणानेन जृम्भकास्त्रमामन्त्रितम्।

चन्द्र। अत्र कः सन्देहः।

व्यतिकर इव (५) भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति।
अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतममितवीर्य्यं (६) जृम्भते जृम्भकास्त्रम्॥१३॥

आश्चर्य्यमाश्चर्य्यम्।

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभोजृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः।

---

(१) अचरमवयः इति पाठान्तरम्। (२) तेन धिग्वो धिगस्मान् इति पाठान्तरम्।
(३) सौन्मादम् इति विद्यासागरधृतः पाठः। (४) सप्रगल्भम् इति पाठान्तरम्।
(५) इह इति पाठभेदः। (६) अजितवीर्य्यमिति विद्यासागरधृतपाठः।

कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवाकीर्य्यते (१)
मीलन्मेघ (२) तड़ित्कड़ारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

सुमन्त्रः। कुतः पुनरस्य जृम्भकाणामागमः स्यात् (३)?

चन्द्र। भगवतः प्राचेतसादिति मन्यामहे।

सुमन्त्रः। नास्य व्यवहारोऽस्त्रेषु, विशेषतो जृम्भकेषु। यतः,

कृशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः।
अथ तत्सम्प्रदायेन रामभद्रे व्यवस्थिताः ॥ १५ ॥

चन्द्र। अपरेऽपि परमोपचीयमानसत्त्वप्रकाशाः स्वयं हि मन्त्रदृशः पश्यन्ति (४)।

सुमन्त्रः। वत्स! सावधानो भव, परागतः प्रवीरः।

कुमारौ। [अन्योऽन्यं प्रति।] अहो प्रियदर्शनः कुमारः।

सस्नेहानुरागं निर्वर्ण्य

यदृच्छासंवादः किमु, किमु गुणानामतिशयः
पुराणो वा जन्मान्तरनिविड़बन्धः परिचयः।
निजो वा सम्बन्धः किमु विधिवशात् कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥ १६ ॥

सुमन्त्रः। भूयसा जीविधर्म एषः, यद्रसमयी कस्यचित् क्वचित् प्रीतिः, यत्र लौकिकानामुपचारस्ताराभैत्रकं (५) चक्षुराग इति तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति।

---

(१) अवस्तीर्य्यते इति विद्यासागरधृत पाठः। (२) मीलाम्भाद इति पाठान्तरम्। (३) जृम्भकास्त्राधिगमः इति पाठान्तरम्। (४) प्रचीयमानसत्त्वप्रकाशाः स्वयं सर्व्वमन्त्रदृशः इति पाठान्तरम्। (५) लौकिकानां व्याहारः इति विद्यासागरधृतः पाठः।

अर्हतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया।

स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि (१) सीव्यति ॥ १७ ॥

कुमारौ। [ अन्योऽन्यं उद्दिश्य ]।

एतस्मिन् मसृणितराजपट्टकान्ते

मोक्तव्याः कथमिव सायकाः शरीरे।

यत्प्राप्तौ मम परिरम्भणाभिलाषात्

उन्मीलत (२) पुलककदम्बमङ्गमास्ते ॥ १८ ॥

किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना

शस्त्रेणापि हि तेन किं, न विषयो जायेत यस्येदृशः।

किं वक्ष्यत्ययमेवयुद्ध (३) विमुखं मामुद्यतेऽप्यायुधे

वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

सुमन्त्रः। [ लवं निर्वर्ण्य सास्रमात्मगतम्। ] हृदय! किमन्यथा परिकल्पसे।

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम्।

लतायां पूर्व्वलूनायां प्रसूनस्यागमः कुतः ॥ २० ॥

चन्द्र। अवतरामि आर्य्य! सुमन्त्र! स्यन्दनात्।

सुमन्त्रः। तत्कस्य हेतोः!

चन्द्र। यतस्तावदयं वीरपुरुषः पूजितो भवति अपिच खलु आर्य्य! क्षात्त्रधर्मः परिपालितो भवति न रथिनः पादचारमायोधयन्तीति शास्त्रविदः परिभाषन्ते (४)।

(१) अन्तर्भूतानि इति पाठान्तरम्। (२) आवद्धोत्पुलक इति पाठान्तरम्। (३) अद्य विमुखमिति पाठान्तरम्। (४) अपि खलु आर्य्यक्षात्त्रधर्म्मश्चानुगृहीतो भवति। क्षात्त्रधर्म्मः समनुगतो भवति। रथिनः पादचारमभियुञ्जन्तीति च पाठभेदा दृश्यन्ते।

सुमन्त्रः। [स्वगतम्। ] कष्टं वतानुप्रपन्नोऽस्मि (१)।

कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु।
कथं वाप्यनुजानातु साहसैकरसां क्रियाम्॥ २१॥

चन्द्र। यदा तातमिश्रा अपि पितुः प्रियसखं (२) धर्मार्थसंशयेषु आर्य्यमेव पृच्छन्ति, तत्किमार्य्यो विमृशति।

सुमन्त्रः। आयुष्मन्! एवं यथाधर्ममभिमन्यसे।

एषः सांग्रामिको न्याय एष धर्मः सनातनः।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः॥ २२॥

चन्द्र। प्रतिरूपं वचनमार्य्यस्य।

इतिहासं पुराणञ्च धर्मप्रवचनानि च।
भवन्त एव जानन्ति रघूणाञ्च कुलस्थितिम्। २३॥

सुमन्त्रः। सस्नेहास्नं परिष्वज्य।

जातस्य ते पितुरपीन्द्रजितो निहन्तु (३)
वत्सस्य वत्स! कति नाम दिनान्यमूनि।
तस्याप्यपत्यमनुगच्छति वीरवृत्तं (४)
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम्॥ २४॥

चन्द्र। सकष्टम्।

अप्रतिष्ठे रघुज्येष्ठे (५) का प्रतिष्ठा कुलस्य नः।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे॥ २५॥

---

(१) कष्टां दशामनुप्रपन्नोऽस्मि इति पाठान्तरम्। (२) प्रियं सखायमिति विद्यासागरधृतः पाठः। (३) विजेतुः इति विद्यासागरधृतः पाठः। (४) अनुतिष्ठति वीरधर्म्मम् इति पाठान्तरम्। (५) कुलज्येष्ठे इति पाठान्तरम्।

सुमन्त्रः। अहह! हृदयमर्मदारणानि (१) एतानि चन्द्रकेतोर्वचनानि।

लवः। हन्त! मिश्रीकृतो रसक्रमो (२) वर्त्तते।

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन् दृष्टिर्मम, कलहकामः पुनरयम्।
झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्वणरसः (३) ॥ २६॥

चन्द्र। [ अवतरणं रूपयन् (४)। ] आर्य्य! सावित्रश्चन्द्रकेतुः अभिवादयते।

सुमन्त्रः। अजितं पुण्यमोजस्वि (५) काकुत्स्थस्येव ते महः।
श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् ॥ २७॥

अपिच,

देवस्त्वां सविता धिनोतु, समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽभि (६) नन्दतु, गुरुर्यस्ते गुरूणामपि
ऐन्द्रं (७) वैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ २८॥

लवः। कुमार! अति हि नाम शोभसे रथस्थ एव कृतं कृतमत्यादरेण।

---

(१) दारुणानि इति पाठभेदः। (२) रसः इति पाठान्तरम् विद्यासागरसम्मतम्। (३) विकटविकरालव्रणमुखः इति पाठान्तरम्। (४) अवतरन् इति विद्यासागरधृतः पाठः। (५) ऊर्जस्वि इति विद्यासागरधृतः पाठः। (६) अपि नन्दतु इति पाठान्तरम्। (७) ऐन्द्रावैष्णवमिति पाठभेदः।

चन्द्र। तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु।

लव:। आर्य्य! प्रत्यारोपय रथोपरि राजपुत्रम्।

सुमन्त्र:। त्वमप्यनुरुध्यस्व चन्द्रकेतोर्वचनम्।

लव:। को विचार: स्वेषु उपकरणेषु। किन्तु अरण्यसदो वयमनभ्यस्तरथचर्य्या:।

सुमन्त्र:। जानामि वत्स! दर्पसौजन्ययोर्यथोचितमौरयितुम्, (१) यदि पुनरीदृशं त्वामैक्ष्वाको रामभद्र: (२) पश्येत् तदा अस्य स्नेहेन हृदयमभिष्यन्देत।

लव:। आर्य्य सुजन: स राजर्षि: श्रूयते। [सलज्जमिव]

वयमपि न खल्वेवंप्राया: क्रतुप्रविघातिन: (३)
क इह (४) च गुणैस्तं राजानं न वा बहु मन्यते।
तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ॥ २९ ॥

चन्द्र। [सस्मितम्।] किन्तु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष:।

लव:। अस्त्विहामर्षो मा भूद्वा, एतत्तु पृच्छामि, दान्तं हि राघवं राजानं शृणुम:, स किल नात्मना दृप्यति नाप्यस्य प्रजासु दृप्तत्वं जायते (५) तत् किमस्य मनुष्या राक्षसीं वाचं वदन्ति (६)।

---

(१) आचरितुम् इति विद्यासागरधृत. पाठ:। (२) ऐक्ष्वाकोराजा रामभद्र इति विद्यासागरगृहीत: पाठ:। (३) प्रतिघातिन: इति पाठान्तरम्। (४) इव इति पाठभेद:। (५) नाप्यस्य प्रजा ईदृश्यो जायन्ते ; नास्य प्रजा वा दृप्ता जायन्ते इति पाठभेदौ। (६) उदीरयन्ति इति पाठान्तरम्।

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्व्ववैराणां सा हि लोकस्य निर्ऋतिः॥ ३०॥

इति ह स्म तां निन्दन्ति अथेतरामभिष्टुवन्ति।

कामान् दुग्धे, विप्रकर्षत्यलक्ष्मीं
कीर्त्तिं सूते दुष्कृतं या हिनस्ति।
ताञ्चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः॥ ३१॥

सुमन्त्रः। परिपूत (१) स्वभावोऽयं कुमारः प्राचेतसान्तेवासी वदति अयं अभिसम्पन्नमार्षेण संस्कारेण।

लवः। यत् पुनश्चन्द्रकेतो! वदसि, किन्नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति, तत् पृच्छामि, किं व्यवस्थितविषयाः क्षत्त्रधर्मा इति?

सुमन्त्रः। नैव खलु जानासि तं देवमैक्ष्वाकं, यदेवं वदसि, (२) तद्विरम्यतामतिप्रसङ्गात् (३)।

सैनिकानां प्रमाथेन (४) सत्यमोजायितं त्वया।
जामदग्न्यस्य दमने नैवं (५) निर्व्वक्तुमर्हसि॥ ३२॥

लवः। [सहासम्] आर्य्य! जामदग्न्यस्य दमनः स राजा, इति कोऽयमुच्चैर्वादः।

---

(१) अपरिप्लुत इति पाठान्तरम्। (२) यदेव वदसि इत्यंशो विद्यासागरेण न धृतः। (३) तद् विरम विरमातिप्रसङ्गादिति विद्यासागरधृतः पाठः। (४) रामेऽप्यमृष्यमाणेन इति पाठान्तरम्। (५) नातिनिर्व्वक्तुम्, नहि निर्व्वन्धम् इति पाठभेदौ।

सिद्धं ह्येतद्वाचि वीर्य्यं द्विजानां
वाह्वोर्वीर्य्यं यत्तु तत् क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन् दान्ते का स्तुतिस्तस्य राज्ञः ॥ ३३ ॥

चन्द्र । [ सोन्माथमिव । ] आर्य्य ! आर्य्य ! कृतमुत्तरोत्तरेण ।

कोऽप्येष सम्प्रति नवः पुरुषावतारो
वीरो (१) न यस्य भगवान् भृगुनन्दनोऽपि ।
पर्य्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितानि च यो न वेद ॥ ३४ ॥

लवः । को हि रघुपतेश्चरितं महिमानञ्च न जानाति, यदि नाम किञ्चिद्वक्तव्यमस्ति, अथवा शान्तम् !

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु, किं वर्ण्यते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो (२) लोके महान्तो हि ते ।
यानि त्रीण्यपराङ्मुखान्यपि (३) पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३५ ॥

चन्द्र । आः तातापवादभिन्नमर्य्याद ! अति हि नाम प्रगल्भसे ।

लवः । अये मय्येव (४) भ्रुकुटीधरः संवृत्तः ।

---

(१) स्वाध्यीन यस्य इति पाठः विद्यासागरसम्मतः । (२) अकुण्ठयशसः इति पाठान्तरम् । (३) अकुतोभयानि इति पाठान्तरम् । (४) आः कथं मय्येव इति विद्यासागरधृतः पाठः ।

सुमन्त्रः। स्फुरितमनयोः क्रोधेन। तथाहि।

चूड़ामण्डलबन्धनं तरलयत्याकूतजो वेपथुः (१)
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः।
धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य(२)कमलस्योद्भ्रान्तभृङ्गस्य च ॥२६॥

कुमारौ। तदितो विमर्दक्षमां भूमिमवतराव:।

इति निष्क्रान्ताः सर्वे।

इति कुमारविक्रमो नाम पञ्चमोऽङ्कः।

---

(१) क्रोधेनोद्धतधूतकुन्तलभरः सर्व्वाङ्गजो वेपथुः इति पाठान्तरम्। (२) उद्भटलाञ्छनस्य इति पाठान्तरम्।

# अथ षष्ठोऽङ्कः ।

ततः प्रविशति विमानेनोज्ज्वलेन विद्याधरमिथुनम् ।

विद्याधरः । अहो खलु अनयोर्विकर्त्तनकुलकुमारयोः अकाण्डकलहप्रचण्डयोः उद्योतितच्चात्रलक्ष्मीकयोः अद्भुतोद्भ्रान्तदेवासुराणि विक्रान्तचरितानि ।

तथाहि प्रिये ! पश्य पश्य ।

झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनु-
  र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम् ।
वितत्य किरतोः शरानविरतस्फुरच्चूडयो-
  र्विचित्रमभिवर्द्धते भुवनभीममायोधनम् ॥ १ ॥

विजृम्भितञ्च दिव्यस्य (१) मङ्गलाय द्वयोरपि ।
स्तनयित्नोरिवामन्द्रं (२) दुन्दुभेर्दुन्दुमायितम् ॥ २ ॥

तत् प्रवर्त्त्यताम् अनयोः प्रवीरयोः अनवरतम् अविरल ललितविकचकनककमलकमनीयसंहतिः (३) अमरतरुतरुण-मणिमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः ।

विद्याधरी । ता किंत्ति उण अआण्डविप्फुरिदतडिच्छड़ाकड़ारं बिअ अम्बरं झत्ति संवुत्तं । (क)

(क) तत् किमिति पुनरकाण्डविस्फुरिततडिच्छटाकडारमिव अम्बरं झटिति संवृत्तम् ।

(१) दिव्यास्त्रं इति पाठान्तरम् । जृम्भितञ्च विचित्राय इत्यपि पाठभेदः क्वचिद् दृश्यते । (२) अमन्ददुन्दुभेरिति पाठान्तरम् । (३) कमनीयसन्ततिः इति विद्यासागरधृतः पाठः ।

विद्याधरः। तत्किन्नु खलु अद्य !

त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलः। (१)
पुटभेदो ललाटस्थनीललोहितचक्षुषः॥ ३॥

[ विचिन्त्य ] आं ज्ञातं, वत्सेन (२) चन्द्रकेतुना प्रयुक्तमस्त्र माग्नेयं, यस्यायमग्निच्छटासम्पातः (३) मर्म्मति हि,

अवदग्धकर्व्वुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः।
दधति ध्वजांशुकपटाञ्चलेष्वमी (४)
क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः॥ ४॥

आश्चर्य्यं, प्रवृत्त एवायम् उच्चण्डवज्रखण्डावस्फोटपटुः (५) उत्सर्पिस्फुलिङ्गगुरुः उत्तालतुमुललेलिह्यानज्वालासम्भारभैरवो भगवान् उषर्वुधः।

प्रचण्डश्चास्य सर्वतः सन्तापः तत्प्रियामङ्गेनाच्छाद्य दूर मपसरामि। [ तथा करोति। ]

विद्याधरी। दिट्ठिआ एदेण विमलमोत्तिअफलसीदल (६)

(१) त्वष्ट्रयन्त्र इति पाठान्तरम्। (२) जातक्षोभेण चन्द्रकेतुना इति पाठान्तरम्। (३) तस्यायमिति पाठः विद्यासागरेण धृतः। (४) ध्वजांशुक इति पाठान्तरम्। (५) वज्रखण्डावस्फोटपटुतरस्फुलिङ्गविकृतिः इति विद्यासागरधृतः पाठः। वज्रखण्डावस्फोपपटुः, अवस्फुलिङ्गगुरुः, इति च पाठान्तरम् दृश्यते। (६) विमलमौक्तिकसरशीतल इति विद्यासागरधृतः पाठः। सिणिद्धमसिणसीवानमांसलेन इति च पाठान्तरम्।

सिणिद्धमसिणमंसलेण णाहदेहप्फंसेण आणन्दमन्दमुउलिदघुसन्तलोअणाए अन्तरिदो ज्जेव सन्दावो। (क)

विद्याधरः। अयि किमत्र मया कृतम् अथवा

अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥ ५॥

विद्याधरी। कहमविरलविलोलघुसन्तविज्जुल्लदाविलासमण्डिदेहिं मत्तमोरकण्ठसामलेहिं ओत्थरीअदि णहत्थलं जलहरेहिं। (ख)

विद्याधरः। हन्त हन्त कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खलु अयम्। कथमविरलप्रवृत्तवारिधारासहस्रसम्पातैः प्रशान्तं पावकास्त्रम्।

विद्याधरी। पिअं मे पिअं मे। (ग) (१)

विदद्याधरः। हन्त! हन्त! सर्वमतिमात्रं दोषाय यत् प्रबलवातावलिक्षोभगम्भीरगुणगुणायमानमेघमेदुरान्धकारनीरन्ध्रनिबद्धम् (२) एकवारविश्वग्रसनविकचविकरालकालकण्ठ-

(क) दिष्ट्या एतेन विमलमौक्तिकफलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेन आनन्दमन्दमुकुलितघूर्णल्लोचनाया अन्तरित एव सन्तापः। (ख) कथमविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैरवस्तीर्य्यते नभस्तलं जलधरैः। (ग) प्रियं मे प्रियं मे।

---

(१) पिअं मे इति पाठः विद्यासागरेण धृतः। (२) नीरन्ध्रनिरुद्धमिति विद्यासागरधृतः पाठः। नीरन्ध्रनद्धमिति च पाठान्तरम्।

कण्ठकन्दरविवर्त्तमानमिव (१) युगान्तयोगनिद्रानिरुद्धसर्व-(२) द्वारनारायणोदरनिविष्टमिव भूतजातं प्रवेपते (३)।

साधु वत्स चन्द्रकेतो ! साधु, स्थाने वायव्यास्त्रमीरितम् यतः,

विद्याकल्पेन मरुता मेघानां भूयसामपि।

ब्रह्मणीव विवर्त्तानां क्वापि विप्रलयः कृतः॥ ६॥

विद्याधरी। णाह ! क्वो दाणिं एषो ससम्भमुक्खित्तकरब्भमिदपट्टकञ्चलो (४) दूरदो ज्जेव महुरवअणपडिसिद्धजुज्झवावारो (५) एदाणं कुमाराणं अन्तरम्मि (६) विमाणवरं (७) ओदरावेदि। (क)

विद्याधरः। [ दृष्ट्वा ] एष शम्बूकवधात् प्रतिनिवृत्तो रघुपतिः।

शब्दं महापुरुषसंविहितं निशम्य
तद्गौरवात् समुपसंहृतसम्प्रहारः।
शान्तो लवः, प्रणत एव च चन्द्रकेतुः,
कल्याणमस्तु सुतसङ्गमनेन राज्ञः॥ ७॥

तदितस्तावन्निर्गच्छावः इति निष्क्रान्तौ। विष्कम्भकः।

(क) नाथ। क इदानीमेष ससम्भ्रमोत्क्षिप्तकरभ्रमितपट्टाञ्चलो दूरत एव मधुरवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोः अन्तरे विमानवरमवतारयति।

---

(१) कालकण्ठमुखकन्दर इति पाठान्तरम्। (२) युगान्तनिद्रानिरुद्ध इति पाठान्तरम्। (३) विपद्यते इति पाठभेदः। (४) करभमिदजीमूतरीचाञ्चल इति पाठान्तरम्। (५) महुरसिणिद्धवअण इति पाठान्तरम्। (६) कुमाराणं मज्झे इति विद्यासागरधृतः पाठः। (७) विमाणं इति विद्यासागरधृतः पाठः।

ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च ।

रामः । [ पुष्पकादवतरन् । ]

दिनकरकुलचन्द्र ! चन्द्रकेतो !

सरभसमेहि दृढं परिष्वजस्व ।

तुहिनशकलशीतलैस्तवाङ्गैः

शममुपयातु ममापि चित्तदाहः ॥ ८ ॥

रामः । [ उत्थाप्य सस्नेहास्रं परिष्वज्य । ] अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य ?

चन्द्र । कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन (१) । तद्विज्ञापयामि, मामिव विशेषेण वा मत्तः, शिवेन चक्षुषा पश्यतु अमुं महावीरप्रकाण्डं तातः (२) ।

रामः । [ लवं निरूप्य ] दिष्ट्या अतिगम्भीरमधुर-कल्याणाकृतिरयं वयस्यो वत्सस्य (३) ।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः

क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोषस्य (४) गुप्त्यै ।

सामर्थ्यानामिव समुदयः सञ्चयो वा गुणाना-

माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ९ ॥

लवः । अहो ! पुण्यानुभावदर्शनोऽयं महापुरुषः ।

(१) लवस्य अभ्युदयेन इति पाठान्तरम् । (२) मामिव अविशेषेण मत्तः शिव-तरेण चक्षुषा इति पाठभेदः । (३) अतिगम्भीराकृतिरयं इति विद्यासागरधृतः पाठः । (४) ब्रह्मघोषस्य इति पाठान्तरम् ।

आश्वासस्नेहभक्तीनामेकमालम्बनं महत् (१) ।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्त्तिसञ्चरः ॥ १० ॥

आश्चर्य्यम् ।

विरोधो विश्रान्तः, प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति, विनयः प्रह्वयति माम् ।
झटित्यस्मिन् दृष्टे किमपि (२) परवानस्मि, यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ११ ॥

रामः । तत् किमेकपद एव दुःखविश्रामं ददाति उपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम्, अथवा स्नेहस्य निमित्तमव्यपेक्ष इति विप्रतिषिद्धमेतत् ।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥

लवः । चन्द्रकेतो ! क एते ।

चन्द्र । प्रियवयस्य ! ननु तातपादाः ।

लवः । ममापि तर्हि धर्मतस्तथैव, यतः प्रियवयस्य इत्यात्थ, किन्तु चत्वारः खलु भवतामेवंव्यपदेशभागिनः तत्रभवन्तो रामायणकथापुरुषाः तद्विशेषं ब्रूहि ।

चन्द्र । ननु ज्येष्ठतातपादा इति अवेहि ।

(१) आश्वास इव भक्तीनां इति पाठः क्वचिद् दृश्यते । एकमालम्बनं महत्; एकमायतनं महत् इति पाठभेदौ । (२) किमिव परवानस्मि इति विद्यासागरधृतः पाठः ।

लवः। [ सोल्लासम्। ] कथं रघुनाथ एव ( १ ) दिष्ट्या सुप्रभातमद्य, यदयं देवो दृष्टः। [ सविनयकौतुकं निर्वर्ण्य ] तात प्राचेतसान्तेवासी लवोऽभिवादयते।

रामः। [ सस्नेहम् ] आयुष्मन् एह्येहि। [सस्नेहं परिष्वज्य। ] अयि वत्स! कृतं कृतमतिविनयेन, अनेकवारमपरिश्लथं परिष्वजस्व।

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः।
नन्दयति चन्द्रचन्दननिष्यन्दजडस्तव स्पर्शः॥ १३॥

लवः। [स्वगतम्।] ईदृशो मां (२) प्रति अमीषामकारणस्नेहः, मया पुनरेभ्य एव अभिद्रुग्धमज्ञेन, यदायुधपरिग्रहं यावत् अध्यारूढो दुर्योगः। [ प्रकाशम् ] मृष्यन्तु इदानीं लवस्य बालिशतां तातपादाः।

रामः। किमपराद्धं वत्सेन ?

चन्द्र। अश्वानुयात्रिकेभ्यः तातप्रतापाविष्करणमुपश्रुत्य वीरायितम् अनेन।

रामः। ननु अयमलङ्कारः क्षत्रस्य।

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते (३)
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयोग्रावा निकृत इव तेजांसि वमति॥१४॥

---

(१) कथं रघुनाथः इति पाठः विद्यासागरेण धृतः। कथं रघुनाथ एषः इति च पाठान्तरम्। (२) अस्मादृशान् प्रति इति पाठान्तरम्। (३) प्रसहते इति पाठान्तरमङ्गीकृतं विद्यासागरेण।

चन्द्र। तात! अमर्षोऽप्यस्य शोभते वीरस्य, पश्यतु हि तातः प्रियवयस्यविनियुक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्वतः सैन्यानि।

रामः। [विलोक्य।] वत्स लव! संह्रियन्तामस्त्राणि, त्वमपि चन्द्रकेतो! निर्व्यापारविलक्षाणि सान्त्वय बलानि।

लवः। यथा आज्ञापयति तातः। [इति प्रणिधानं नाटयति।]

चन्द्र। यथादिष्टम्। [इति निष्क्रान्तः।]

लवः। प्रशान्तमस्त्रम्।

रामः। वत्स! सरहस्यप्रयोगसंहरणानि अस्त्राणि आम्नायवन्ति।

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि।
एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि॥ १५॥

अथैतन्मन्त्रपारायणोपनिषदं भगवान् कृशाश्वः परःसहस्रपरिवत्सरान्तेवासिने कौशिकाय विश्वामित्राय प्रोवाच, स तु भगवान् मह्यमित्येष गुरुपूर्वानुक्रमः (१)। कुमारस्य तु कः सम्प्रदाय इति पृच्छामि (२)।

लवः। स्वतःप्रकाशानि आवयोरस्त्राणि।

(१) इत्येष क्रमः इति विद्यासागरधृतः पाठः। (२) कुमारस्य पुनः कुतः सम्प्रदायः इति पाठान्तरम्।

रामः। [ विचिन्त्य ] किं न सम्भाव्यते प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि महिमा स्यात्, द्विवचनन्तु कथम्।

लवः। भ्रातरौ आवां यमजौ।

रामः। स तर्हि द्वितीयः कः ?

[ नेपथ्ये। ] भाण्डायन। भाण्डायन !।

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ ? सखे तथेति।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
चत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

रामः। अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव दत्तपुलकं करोति माम्।
नवनीलरधनीरधीरगर्जित-
चणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

लवः। अयमसौ मम ज्यायान् आर्य्यः कुशो नाम भरताश्रमात् प्रतिनिवृत्तः।

रामः। [ सकौतुकम्। ] वत्स ! इत आह्वयैनमायुष्मन्तम्।

लवः। एवम्। [ इति परिक्रामति। ]

ततः प्रविशति कुशः।

कुशः। [ साङ्कृतहर्षधैर्य्यं धनुरास्फालयन् ]।

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादामनो-
र्दृप्तानां(१)दमनाय दीपितनिजक्षत्रप्रतापाग्निभिः।

(१) दुष्टानां दमनाय इति पाठभेदः।

आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्तास्त्र(१)स्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥१८॥

[ विकटं परिक्रामति ] ।

रामः । कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् । वसन्ततिलकवृ॰
कौमारकेऽपि गिरिवद्गुरुतां दधानो उत्प्रेक्षालङ्कारः
वीरो रसः किमयमेत्युत दर्प एव ॥ १९ ॥

लवः । [ उपसृत्य ] जयति आर्य्यः ।

कुशः । नन्वायुष्मन् किमियं वार्त्ता युष्मिति ।

लवः । यत्किञ्चिदेतत्, दृप्तभावमुत्सृज्यार्य्योऽस्मिन् (२) विनयेन वर्त्तताम् ।

कुशः । किमर्थम् ?

लवः । एष देवो रघुपतिस्तिष्ठति, स च स्निह्यति आवयोरुत्कण्ठते च युष्मत्सन्निकर्षस्य ।

कुशः । [ सतर्कम् । ] स रामायणकथानायको ब्रह्मकोषस्य गोपायिता ।

लवः । अथ किम् ?

कुशः । आशंसनीयपुण्यदर्शनः स महात्मा, किन्तु कथमस्माभिरुपगन्तव्य इति न सम्प्रधारयामि ।

लवः । यथा गुरुस्तथोपचारेण ।

---

(१) दिव्यास्त्र इति पाठान्तरम् । (२) उद्धृतभावमिति पाठान्तरम् ।

कुश:। अपि (१) कथं नामैतत्।

लव:। अत्युदात्त: सुजनश्चन्द्रकेतु: सौमित्रेय: प्रियवयस्य इति सख्येन मामुपतिष्ठते, तेन तत्सम्बन्धेन धर्मतात एवायं राजर्षिरिति।

कुश:। सम्प्रति अवचनीयो (२) राजन्येऽपि प्रश्रय:।

लव:। पश्यतु एनम् आकारानुभावगाम्भीर्य्यसम्भाव्यमान विविधलोकोत्तरचरितातिशयमार्य्यो महापुरुषम्।

कुश:। [ निर्वर्ण्य ]

अहो प्रासादिकं (३) रूपमनुभावश्च पावन:।

स्थाने रामायणकविर्देवीं वाचं व्यवीवृतत् (४) ॥ २० ॥

[ उपसृत्य। ] तात ! प्राचेतसान्तेवासी कुशोऽभिवादयते।

राम:। एहि एहि आयुष्मन्।

अमृताध्मातजीमूतस्निग्धसंहननस्य ते।

परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते (५) जन: ॥२१॥

[ परिष्वज्य स्वगतम्। ] तत् किमपत्यमयं दारक:।

अङ्गादङ्गात् सृत इव निजो देहज: स्नेहसार: (६)

प्रादुर्भूय स्थित इव वहिश्चेतनाधातुरेव।

सान्द्रानन्दक्षुभितहृदयप्रस्रवेनेव सृष्टो

गात्र (७) श्लेषे यदमृतरसस्रोतसा सिञ्चतीव ॥ २२ ॥

(१) अयि इति विद्यासागरधृत: पाठ:। (२) करणीय इति पाठान्तरम्। (३) प्रामोदिकं इति पाठान्तरम्। (४) व्यवीवृणत् इति पाठभेद:। (५) परिष्वङ्गस्य इति पाठ: विद्यासागरेण धृत:। (६) स्नेहजो देहसार: इति पाठान्तरम्। च्युत इव स्रुत इव स्रुत इव इति पाठान्तराणि। (७) गात्रश्लेषे, गात्राश्लेषे इति पाठभेदौ।

लवः। तात! ललाटन्तपो घर्मदीधितिस्तदत्र सालच्छाये मुहूर्त्तमासनपरिग्रहं करोतु तातः।

रामः। यदभिरुचितं वत्साय।

[ सर्वे परिक्रम्य उपविशन्ति। ]

रामः। [ स्वगतम्। ]

अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः।
साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २३ ॥

वपुरविहितसिद्धा एव लक्ष्मीविलासाः
प्रतिजनकमनीयं कान्तिमत् केतयन्ति, मालिनी वृत्तम्
अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा मालोपमा
विकसितमिव (१) पद्मं बिन्दवो माकरन्दाः ॥२४॥

भूयिष्ठञ्च रघुकुलकुमारच्छायामनयोः पश्यामि।

कठोरपारावतकण्ठमेचकं वंशस्थविलम्
वपुर्वृषस्कन्धमबन्धुरांसकम् (२)। समासोपमा
प्रसन्नसिंहस्तिमितञ्च वीक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥ २५ ॥

[ सूक्ष्मं निरूप्य। ] अये! न केवलमस्मदङ्गसंवादिनी (३) आकृतिः।

अपि जनकसुतायास्तच्च तच्चानुरूप्यं मालिनी वृत्तम्
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति। उत्प्रेक्षालङ्कार

(१) विकसितमरविन्दम् इति पाठान्तरम्। (२) अबन्धुरांसयोः इति पाठान्तरम्। (३) अज्ञातसंवादिनी इति विद्यासागरधृतः पाठः।

ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः॥ २६॥

अनुत्ताच्छदन्तच्छविसुन्दरीयं (१) सैवौष्ठमुद्रा स च कर्णपाशः।
नेत्रे पुनर्यद्यपि रक्तनीले तथापि सौभाग्यगुणः स एव॥ २७॥

तदेतत् प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्यक्ता, इयञ्च अनयोराकृतिर्वपुश्च (२) यदपि स्वतःप्रकाशानि अस्त्राणीति, तत्र विमृशामि, अपि खलु तच्चित्रदर्शनप्रासङ्गिकमस्त्राभ्यनुज्ञानमुद्भूतं (३) स्यात्, नहि असाम्प्रदायिकानि अस्त्राणीति पूर्वेषामपि अनुशुश्रुमः अयञ्च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते भूयिष्ठञ्च मया द्विधा प्रतिपन्नो देव्या गर्भभार आसीत्। [सास्रम्।]

पुरारूढे स्नेहे परिचयविकासादुपचिते
रहो विस्रब्धाया अपि सहजलज्जाजडदृशः।
मयैवादौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया॥ २८॥

[रुदित्वा] तत्किमेतौ पृच्छामि केनापि उपायेन।

लवः। तत्किमेतत्।

---

(१) क्वचिदनुरा, क्वचिसुन्दरा इति पाठभेदौ। (२) आकृतिर्वत्सयो, इति विद्यासागरधृतः पाठः। इयञ्चानयोराकृतिर्वयोऽनुभावश्च इति पाठान्तरञ्च दृश्यते। (३) अपि न खलु तच्चित्रदर्शनप्रस्तावे अस्त्राभ्यनुज्ञानमुद्भूत स्यादिति विद्यासागरधृत पाठः।

वाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् । निदर्शनालङ्क

अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २९ ॥

कुशः । अयि वत्स !

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः ? शिखरिणी

प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति (१) ।

स च स्नेहस्तावानयमपि वियोगो निरवधिः अर्थान्तरन्यासोऽ

किमित्येवं पृच्छस्यनधिगतरामायण इव ? ॥ ३० ॥

रामः । [स्वगतम्] अये ! तटस्थित आलाप, कृतं प्रश्नेन, दग्धहृदय ! कोऽयमाकस्मिकस्ते स्नेहपरिप्लवो विकारः, (२) एवञ्च निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि, भवतु तावदन्तरयामि । [प्रकाशम्] वत्सौ ! रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिस्यन्दः प्रशस्तिरादित्यवंशस्य तत्र कौतूहलेन यत्किञ्चिच्छ्रोतुमिच्छामि (३) ।

कुशः । स कृत्स्न एव सन्दर्भोऽस्माभिराहृत्तः, स्मृत्युपस्थितौ (४) तावदिमौ बालचरितस्यान्त्येऽध्याये श्लोकौ (५) ।

रामः । उदीरयतु वत्सः ।

कुशः । प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।

प्रियभावः स तु तया स्वगुणैरेव वर्द्धितः ॥ ३१ ॥

---

(१) जगदिदमरण्यं हि भवति इति विद्यासागरधृतः पाठः । (२) आकस्मिकस्ते पारिप्लवो विकारः इति विद्यासागरधृतः पाठः । (३) कौतूहलेन किञ्चित् श्रोतुमिति विद्यासागरधृतः पाठः । (४) स्मृतिप्रत्युपस्थितौ इति पाठान्तरम् । (५) द्वौ श्लोकौ इति पाठभेदः ।

तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥ ३२ ॥ इति ।

रामः । कष्टमतिदारुणोऽयं हृदयमर्मोद्घातः, हा देवि ! एवं किल तदासीत् अहो ! निरन्वय(१)विपर्य्यासविरसवृत्तयो विप्रलम्भपर्य्यवसायिनस्तापयन्ति संसारवृत्तान्ताः ।

क्व तावानानन्दो निरतिशयविस्रम्भबहुलः ?
क्व तेऽन्योन्यं यत्नाः ? क्वचनु गहनाः कौतुकरसाः ? ।
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति ॥३३॥

भोः ! कष्टम् ।

प्रियागुणसहस्राणामेकोन्मीलनपेशलः ।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

तदा किञ्चित् किञ्चित् कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनयुगल (२) मासीन्मृगदृशः ।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धस्य वपुषि ॥३५॥

कुशः । अयञ्च मन्दाकिनीचित्रकूटवनविहारे सीतादेवी-मुद्दिश्य रघुपतेः श्लोकः ।

त्वदर्थमिव विन्यस्तः शिलापट्टो (३) ऽयमग्रतः ।
यस्यायमभितः पुष्पैः प्रहृष्टः इव केसरः ॥ ३६ ॥

---

(१) निरत्यय इति पाठान्तरम् । (२) स्तनमुकुलमिति पाठान्तरम् । (३) शिलापादः इति पाठान्तरम् ।

राम:। [सलज्जास्मितस्नेहकरुणम्।] अतिनाम मुग्धः शिशुजनो विशेषतस्त्वरण्यचरः। हा देवि! स्मरसि वा तस्य प्रदेशस्य तत्समयविस्रम्भातिशयप्रसङ्गसाक्षिणः? कष्टं भोः! कष्टम्!

श्रमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलितालकाकुलललाटचन्द्रद्युति।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं (१) मुखम्॥ १७॥

[स्तम्भित इव स्थित्वा सकरुणम्] अहो नु खलु भोः!

चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः
प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः।
जगज्जीर्णारण्यं भवति हि विकल्पव्युपरमे (२)
कुकूलानां राशौ तदनु हृदयं पच्यत इव॥ १८॥

[नेपथ्ये]

वशिष्ठो वाल्मीकिर्दशरथमहिष्योऽथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः।
जराग्रस्तैर्गात्रैरथ खलु विदूराश्रमतया
चिरेणागच्छन्ति त्वरितमनसोऽपि श्रमजडाः (३)॥ १९॥

राम:। कथं भगवन्तौ अरुन्धतीवशिष्ठौ, अम्बा, जनकश्च अत्रैव, कष्टं कथं खलु एते द्रष्टव्याः? [सकरुणं विलोक्य]

---

(१) श्रवणपाशमुग्धं इति पाठान्तरम्। (२) कलनव्युपरमे, कलनेऽप्युपरते इति पाठभेदौ। (३) त्वरितगतयो विश्लथजटा इति पाठान्तरम्।

अहह! तातजनकोऽपि अत्रैवायातीति वज्रेण ताडितोऽस्मि मन्दभाग्यः।

सम्बन्धस्पृहणीयताप्रमुदितैर्जुष्टे वसिष्ठादिभि-
दृष्टापत्यविवाहमङ्गलमहे (१) तत्तातयोः सङ्गतम्।
पश्यन्नौदृशमीदृशे पितृसखं वृत्ते महावैशसे
दीर्य्ये किं न सहस्रधाहमथवा रामेण किं दुष्करम्? ॥४०॥

[ नेपथ्ये ] कष्टं भोः! कष्टम्!

अनुभावमात्रसमुपस्थितश्रियं (२)
सहसैव वीक्ष्य रघुनाथमीदृशम्।
प्रथमप्रमूढजनकप्रबोधनाद्
विधुराः प्रमोहमुपयान्ति मातरः ॥ ४१ ॥

रामः। हा तात! हा मातरः! हा जनक!

जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम्।
तस्मिन्नकरुणे पापे वृथा वः करुणा मयि ॥ ४२ ॥

कुशलवौ। इत इतस्तातः।

सकरुणं परिक्रम्य निष्क्रान्ताः सर्वे।

इति कुमारप्रत्यभिज्ञानो नाम षष्ठोऽङ्कः।

---

(१) जुष्टं वसिष्ठादिभिर्दृष्टापत्यविवाहमङ्गलमहो इति पाठान्तरम्। (२) समव-स्थितश्रियमिति पाठान्तरम्।

# अथ सप्तमोऽङ्कः ।

ततः प्रविशति लक्ष्मणः ।

लक्ष्मणः । भो भो अद्य खलु भगवता वाल्मीकिना सब्रह्म-क्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्य्यगुरगनायकनिकायो जङ्गमः स्थावरश्च भूतग्रामः स्वप्रभावेण सन्निधापितः आदिष्टश्चाहमार्य्येण वत्स लक्ष्मण ! भगवता वाल्मीकिना स्वकृतिमप्सरोभिःप्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः, तद्गङ्गातीरमातोद्यस्थानमुपगम्य (१) क्रियतां समाजसन्निवेश इति । कृतश्च मर्त्त्यामर्त्त्यस्य भूतग्रामस्य समुचितस्थानसन्निवेशो मया (२) । अयन्तु,

राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः ।
वाल्मीकिगौरवादार्य्य इव एवाभिवर्त्तते ॥ १ ॥

ततः प्रविशति रामः ।

रामः । वत्स लक्ष्मण ! अपि स्थिता रङ्गप्रेक्षकाः ?

लक्ष्मणः । अथ किम् ?

रामः । इमौ पुनर्वत्सौ कुशलवौ चन्द्रकेतुसदृशीं स्थान-प्रतिपत्तिं लम्भयितव्यौ ।

---

(१) तद्भागीरथीतीरमनोज्ञस्थानमिति विद्यासागरधृतः पाठः । (२) समुचितस्थानेषु समुपवेशसङ्गः इति विद्यासागरधृतः पाठः । समुचितस्थानेषु समुपवेशनं इति च पाठान्तरम् ।

लक्ष्मणः । प्रभुस्नेहप्रत्ययात्तथैव कृतम् । इदन्तु आस्तीर्णं राजासनमुपविशतु आर्य्यः ।

राम उपविशति ।

सर्वे चोपविशन्ति ।

लक्ष्मणः । प्रस्तूयतां भोः !

प्रविश्य

सूत्रधारः । भो भो ! भगवान् भूतार्थवादी प्राचेतसः सजङ्गमस्थावरं जगदाज्ञापयति, यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं करुणाद्भुतरसञ्च किञ्चिदुपनिबद्धं, तत्र कार्य्यगौरवादवधातव्यमिति (१) ।

रामः । एतदुक्तं भवति । साक्षात्कृतधर्माणो महर्षयः तेषामृतसाराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद् व्याहन्यन्त इत्यनभिशङ्कनीयानीति ।

[ नेपथ्ये ]

हा अज्जउत्त ! हा कुमार लक्खण ! एआइणीं मन्द-भाइणीं असरणं अरण्णे आसण्णप्पसववेअणं हदासं सावदा मं अहिलसन्ति, साहं दाणिं मन्दभाइणी भाईरहीए अत्ताणं णिक्खिविस्सम् । (क)

लक्ष्मणः । [ आत्मगतम् ] । कष्टं वतान्यदेव किमपि ।

(क) हा आर्य्यपुत्र ! हा कुमार लक्ष्मण ! एकाकिनीं मन्दभागिनीं अशरणामरण्ये आसन्नप्रसववेदनां हताशां श्वापदा मामभिलषन्ति, साहमिदानीं मन्दभागिनी भागीरथ्यामात्मानं निक्षेप्स्यामि ।

(१) काव्यगौरवात् इति पाठान्तरम् ।

सूत्रधारः। विश्वम्भरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

इति निष्क्रान्तः।

रामः। देवि! क्षणमपेक्षस्व (१)।

लक्ष्मणः। आर्य्य! नाटकमिदम्।

रामः। हा देवि! दण्डकारण्यवासप्रियसखि! एष ते रामाद्दैवदुर्विपाकः।

लक्ष्मणः। आर्य्य! दृश्यतां तावत् प्रबन्धार्थः।

रामः। एष सज्जोऽस्मि वज्रमयः।

ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथ्वीगङ्गाभ्यामवलम्बिता सीता।

रामः। वत्स लक्ष्मण! असंविज्ञातमनिबन्धनं अन्धतमसं इव प्रविशामि, धारय माम्।

देव्यौ। समाश्वसिहि कल्याणि! दिष्ट्या वैदेहि! वर्द्धसे।
अन्तर्जलं प्रसूतासि रघुवंशधरौ सुतौ ॥ ३ ॥

सीता। [समाश्वस्य] दिट्ठिआ दारए पसूदम्हि, हा अज्जउत्त! (क)। [इति मूर्च्छति]

लक्ष्मणः। [पादयोर्निपत्य] आर्य्य! आर्य्य! दिष्ट्या वर्द्धामहे, कल्याणप्ररोहो रघुवंशः। [विलोक्य] हा! हा! कथं क्षुभितवाष्पोत्पीड़निर्भरः प्रमुग्ध एव आर्य्यः। [इति वीजयति]

(क) दिष्ट्या दारकौ प्रसूतास्मि, हा आर्य्यपुत्र।

---

(१) हा देवि हा देवि! लक्ष्मण अवेक्षस्व इति विद्यासागरधृतः पाठः।

पृथ्वी। वत्से ! समाश्वसिहि समाश्वसिहि।

सीता। [ आश्वस्य ] भअवदि ! का तुमं इअं अ ? (क)

पृथ्वी। इयन्ते श्वशुरकुलदेवता भागीरथी।

सीता। भअवदि ! णमो दे णमो दे। (ख)

भागी। चारित्रोपचितां कल्याणसम्पदमधिगच्छ।

लक्ष्मणः। अनुगृहीताः स्मः।

भागी। इयन्तु जननी ते वसुन्धरा (१)।

सीता। हा अम्ब ! ईदिसी अहं तुए दिट्ठा। (ग)

पृथ्वी। एहि वत्से ! एहि पुत्रि ! [ इति सीतामालिङ्ग्य मूर्च्छति ]।

लक्ष्मणः। [ सहर्षम् ] दिष्ट्या पृथ्वीभागीरथीभ्यामभ्युपन्ना आर्य्या।

रामः। [ अवलोक्य ] करुणतरं खलु एतद्वर्त्तते।

भागी। विश्वम्भरापि नाम व्यथत इति जितमपत्यस्नेहेन, यद्वा सर्वसाधारणो ह्येष मोहग्रन्थिरन्तश्चरश्चेतनावतामनुप्लवः संसारतन्तुः। वत्से वैदेहि ! देवि भूतधात्रि ! समाश्वसिहि, समाश्वसिहि।

पृथिवी। देवि ! सीतां प्रसूय कथमाश्वसिमि।

(क) भगवति ! का त्वमियञ्च ? (ख) भगवति ! नमस्ते नमस्ते। (ग) हा अम्ब ! ईदृशी अहं त्वया दृष्टा।

---

(१) इयं ते जननी वसुन्धरा इति विद्यासागरधृतः पाठः।

एकचिरं राक्षसमध्यवास
स्त्यागो, द्वितीयश्च सुदुःसहोऽस्याः (१)।

भागी। को नाम पाकाभिमुखस्य जन्तु- (२)
द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥

पृथिवी। भागीरथि! सह्यमुक्तम्। युक्तमेतद्वा रामभद्रस्य।

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः।
नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः ॥ ५ ॥

सीता। हा अज्जउत्तं सुमराविदह्मि। (क)

पृथिवी। आः कस्तवार्यपुत्रः?

सीता। [सलज्जास्रम्] जहा वा अम्बा भणादि। (ख)

रामः। अम्ब पृथ्वि! ईदृशोऽस्मि।

भागी। प्रसीद भगवति वसुन्धरे! शरीरमसि संसारस्य तत् किमसंविदानेव जामात्रे कुप्यसि।

घोरं लोके विततमयशो, या च वह्नौ विशुद्धि-
र्लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु।
इक्ष्वाकूणां कुलधनमिदं यत् समाराधनीयः
कृत्स्नो लोकस्तदतिगहनं(३) किं स वत्सः करोतु ॥६॥

(क) हा आर्य्यपुत्रं स्मारितास्मि। (ख) यथा वा अम्बा भणति।

मन्दाक्रान्ता

---

(१) सुदुःश्रवः इति पाठान्तरम्। (२) जन्तोः इति पाठान्तरम्। (३) तदतिविषमं इति पाठभेदः।

लक्ष्मणः। अव्याहतान्तःप्रकाशा हि देवता भूतेषु विशेषेण गङ्गा, तदयमञ्जलिस्ते (१)।

रामः। अम्ब! अनुवृत्तस्त्वया भगीरथगृहे प्रसादः।

पृथ्वी। देवि! नित्यं प्रसन्नासि वः किन्त्वापातदुःसह-स्नेहसंवेगमेवं ब्रवीमि (२) न पुनर्न जानामि सीतास्नेहं रामभद्रस्य।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः।
लोकोत्तरेण सत्त्वेन (३) प्रजापुण्यैश्च जीवति॥ ७॥

रामः। सकरुणा हि गुरवो गर्भरूपेषु।

सीता। [ रुदती कृताञ्जलिः। ] णेदु मं अत्तणो अङ्गेसु विलअं अम्बा। (क)

रामः। किमन्यद् ब्रवीतु।

भागी। शान्तम्! अविलीना संवत्सरसहस्रं भूयाः।

पृथ्वी। वत्से! अवेक्षणीयौ ते पुत्रकौ।

सीता। अणाधाम्हि किं एदेहिं। (ख)

रामः। हृदय! वज्रमयमसि।

भागी। कथं त्वं सनाथाप्यनाथा।

सीता। कीदिसं मम मन्दभाइणीए सणाधत्तणं (ग)।

(क) नयतु मामात्मनोऽङ्गेषु विलयमम्बा। (ख) अनाथास्मि किं एताभ्याम्। (ग) कीदृशं मम मन्दभागिन्याः सनाथत्वम्।

---

(१) तदेष ते प्रणामाञ्जलिः इति पाठान्तरं विद्यासागरेण धृतम्। (२) किन्त्वापातदुःसहः शोकावेगोऽपत्यस्य इति विद्यासागरेण धृतः पाठः। (३) धैर्य्येण इति पाठान्तरम्।

देव्यौ । जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ।
आवयोरपि यत्सङ्गात् पवित्रत्वं प्रकृष्यते ॥८॥

लक्ष्मणः । आर्य्ये ! श्रूयताम् ।

रामः । शृणोतु लोकः ।

[ नेपथ्ये कलकलः ]

रामः । अद्भुततरं किमपि ।

सीता । किंत्ति सअलं अन्तरिक्खं पज्जलदि । (क)

देव्यौ । ज्ञातम् ।

कृशाश्वः कौशिको राम इति येषां गुरुक्रमः ।
आविर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥९॥

[ नेपथ्ये ]

देवि सीते ! नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते ।
आलेख्यदर्शने देवो यदाह (१) रघुनन्दनः ॥ १० ॥

सीता । दिट्टिआ अत्थदेअदाओ परिप्फुरन्ति । (ख)

लक्ष्मणः । उक्तमासीदार्य्येण सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति ।

रामः । नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात् ।
अनुध्यातैरुपेतव्यं वत्सयोर्भद्रमस्तु वः ॥ ११ ॥

(क) किमिति सकलमन्तरीक्षं प्रज्वलति । (ख) दिष्ट्या अस्त्रदेवताः परिस्फुरन्ति ।

---

(१) यथाह इति विद्यासागरधृत. पाठः ।

क्षुभिताः कामपि दशां कुर्वन्ति मम साम्प्रतम्।
विस्मयानन्दसन्दर्भजर्ज्जराः करुणोर्मयः॥ १२॥

देव्यौ। मोदस्व वत्से! मोदस्व (१) रामभद्रतुल्यौ इदानीन्ते पुत्रकौ संवृत्तौ।

सीता। भअवदीओ! को पदाणं क्खत्तिओचिदं कम्म करिस्सदित्ति। (क)

रामः। एष। वशिष्ठगुप्तानां रघूणां वंशवर्द्धिनी।
कष्टं सीतापि सुतयोः संस्कर्त्तारं न विन्दति॥ १३॥

भार्गो। पुत्रि! किं तवानया चिन्तया, एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यामि, स एतयोः चत्रकृत्यं करिष्यति।

यथा वशिष्ठाङ्गिरमावृषी प्राचेतसस्तथा।
रघूणां जनकानाञ्च वंशयोरुभयोर्गुरुः॥ १४॥

रामः। सुविचिन्तित भगवत्या।

लक्ष्मणः। आर्य्य! सत्य विज्ञापयामि तैस्तैरुपायैर्वत्सौ कुशलवौ उत्प्रेक्षे।

एतौ हि जन्मसिद्धास्त्रावुभौ प्राचेतसान्मुनेः (२)।
वीरौ सम्प्राप्तसंस्कारौ वयसा द्वादशाब्दिकौ॥१५॥

रामः। वत्स इत्येवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि।

(क) भगवत्यौ। क एतयो क्षत्रियोचित कर्म करिष्यतीति।

(१) रमस्व वत्से इति विद्यासागरधृत पाठ। मन्यस्व वत्से इति पाठान्तरमपि दृश्यते। (२) जातौ प्राचेतसादिति, प्राप्तप्राचेतसावुभौ। चार्य्यतुल्याकृतीवीरौ वयसा द्वादशाब्दिकौ इति च पाठान्तरम्।

पृथ्वी। एहि वत्से ! पवित्रीकुरु रसातलम्।

रामः। हा प्रिये ! लोकान्तरम् गतासि।

सीता। णेदु म अत्तणो अङ्गेसु विलयं अम्बा, ण सक्कम्हि ईदिसं जीअलोअपरिवत्तं अणुभविदुम्। (क)

रामः। किमुत्तरं स्यात्।

पृथ्वी। वत्से स्तन्यत्यागं यावत्त्वन्नियोगतः पुत्रकयोरपेक्षस्व, परेण ते यथा रोचते तथा करिष्यसि।

भागी। एवं नाम।

ततो निष्क्रान्ता गङ्गापृथ्वीसीताः।

रामः। कथं विलय एव वैदेह्याः सम्पन्नः, हा देवि ! दण्डकारण्यवासप्रियसखि ! हा चारित्रदेवते ! लोकान्तरं पर्य्यवसितासि। [ इति मूर्च्छति। ]

लक्ष्मणः। भगवन् वाल्मीके ! परित्रायस्व, एष किं ते काव्यार्थः।

[ नेपथ्ये ]

अपनीयतामातोद्यकं भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः ! पश्यत, भगवता वाल्मीकिना अनुज्ञातं पवित्रमाश्चर्य्यम्।

लक्ष्मणः। [ विलोक्य ]

मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तञ्च देवर्षिभिरन्तरीक्षम्।

(क) नयतु मामात्मनोऽङ्गेषु विलयमम्बा, न शक्नोमि ईदृशं जीवलोकपरिवर्त्तमनुभवितुम्।

आश्चर्य्यमार्य्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥ १६ ॥ (१)

[ पुनर्नेपथ्ये ]

अरुन्धति ! जगद्वन्द्ये ! गङ्गापृथ्व्यौ भजस्व (२) नौ ।
अर्पितेयं तवाभ्यासे सीता पुण्यव्रता वधूः ॥ १७ ॥

लक्ष्मणः । अहो आश्चर्य्यमाश्चर्य्यम् । आर्य्य ! पश्य पश्य कष्टमद्यापि नोच्छ्वसिति आर्य्यः ।

ततः प्रविशति अरुन्धती सीता च ।

अरु । त्वरस्व वत्से वैदेहि ! मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥ १८ ॥

सीता । [ ससम्भ्रमं उपसृत्य रामं स्पृशन्ती ] समस्ससिदु अज्जउत्तो । (क)

रामः । [ समाश्वस्य सानन्दम् ] भोः किमेतत् । [दृष्ट्वा सहर्षाद्भुतम्] कथं देवी । [ सलज्जस्मितम् ] अये अम्बा अरुन्धती सर्वे च प्रहृष्यन्त ऋष्यश्रृङ्गशान्तासमेता गुरवः ।

अरु । वत्स ! एषा भगवती भगीरथगृहदेवता सुप्रसन्ना गङ्गा ।

भागी । जगत्पते रामभद्र ! स्मर्य्यतामालेख्यदर्शने मां प्रति आत्मनो वचनम् । यथा, सा त्वम्ब ! स्नुषायामरु-

(क) समाश्वसितु आर्य्यपुत्रः ।

(१) उपैति इति पाठान्तरम् । (२) जुषस्व इति पाठान्तरम् ।

न्यतीव सीतायां। शिवानुध्यानपरा भवेति, तत्रानृणास्मि जाता। (१)

अरु। इयन्ते श्वश्रूर्भगवती वसुन्धरा।

पृथिवी। उक्तञ्च पूर्वमायुष्मता वत्स्यात्यागे, (२) यथा भगवति वसुन्धरे ! श्लाघ्यां दुहितरमवेक्षस्व जानकीमिति, तदधुना कृतवचनास्मि प्रभोर्वत्सस्येति।

रामः। कथं कृतमहापराधो भगवतीभ्यामनुकम्पितः प्रणमामि वः।

अरु। भो भोः पौरजानपदाः ! भगवतीभ्यां जाह्नवीवसुन्धराभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता, पूर्वञ्च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा, सब्रह्मकैश्च देवैः संस्तुता सावित्रकुलवधूर्देवयजनसम्भवा सीतादेवी परिगृह्यत इति कथं भवन्तो मन्यन्ते।

लक्ष्मणः। एवमार्य्ययारुन्धत्या निर्भर्त्सिताः प्रजाः कृत्स्नश्च भूतग्राम आर्य्यां नमस्करोति, लोकपालाश्च सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते।

अरु। जगत्पते रामचन्द्र !

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम्।
हिरण्मय्याः प्रतिकृतेः पुण्यप्रकृतिमध्वरे॥ १९॥

---

(१) तत्रानृणास्मि इति विद्यासागरधृतः पाठः। (२) वत्सापरित्यागे इति विद्यासागरधृतः पाठः।

सीता। [स्वगतम्।] जाणादि अज्जउत्तो सीदादुक्खं पमज्जिदुं। (क)।

रामः। यथा भगवती आदिशति।

लक्ष्मणः। कृतार्थोऽस्मि।

सीता। जीविदम्हि। (ख)

लक्ष्मणः। आर्य्ये! एष निर्लज्जो लक्ष्मणः प्रणमति।

सीता। वच्छ ईदिसो चिरं जीव। (ग)

अरु। भगवन् वाल्मीके! उपनीयेतामिमौ सीतागर्भसम्भूतौ रामभद्रस्य पुत्रकौ कुशलवौ।[इति निष्क्रान्ता।]

रामलक्ष्मणौ। दिष्ट्या तथैव तत्।

सीता। [सवाष्पाकूतम्।] कहिं ते पुत्तका मे। (घ)

ततः प्रविशति वाल्मीकिः कुशलवौ च।

वाल्मीकिः। वत्सौ कुशलवौ एष रघुपतिः पिता युवयोः, लक्ष्मणः कनिष्ठतातः, सीतादेवी जननी, एष राजर्षिर्जनको मातामहः।

सीता। [सहर्षकरुणाद्भुतं विलोक्य।] कहं तादो। (ङ)

कुशलवौ। हा तात! हा अम्ब! हा मातामह!

रामः। [सहर्षमालिङ्ग्य।] ननु वत्सौ! पुण्यैः प्राप्तौ स्थः।

(क) जानाति आर्य्यपुत्रः सीतादुःखं प्रमार्ष्टुम्। (ख) जीवितास्मि! (ग) वत्स! ईदृशः चिरं जीव। (घ) कुत्र तौ पुत्रकौ मे। (ङ) कथं तातः।

सीता । एहि जाद कुश ! एहि जाद लव ! चिरस्स परिस्सजध पुणो जम्मन्तरगदं जणणिं । (क)

कुमारौ । [ तथा कृत्वा । ] धन्यौ स्वः ।

सीता । भअवं ! प्पणमामि । (ख)

वाल्मीकिः । वत्से ! ईदृश्येव चिरं भूयाः ।

सीता । अम्महे तादो, कुलगुरू, अज्जाजणो, सभत्तुआ अज्जा सन्तादेई, सलक्खणा सुप्पसण्णा अज्जउत्तचलणा समं कुशलवावि दीसन्ति, ता णिब्भरम्हि आणन्देण । (ग)

[ नेपथ्ये कलकलः ]

वाल्मीकिः । [उत्थायावलोक्य च ।] उत्खातलवणो मधुरेश्वरः प्राप्तः ।

लक्ष्मणः । सानुषङ्गाणि कल्याणानि ।

रामः । सर्वमिदमनुभवन्नपि न प्रत्येमि यदा प्रकृतिरियमभ्युदयानाम् ।

वाल्मीकिः । रामभद्र ! उच्यतां, किन्ते भूयः प्रियमुपकरोमि ।

रामः । अतः परमपि प्रियमस्ति । तथापीदमस्तु ।

(क) एहि जात कुश ! एहि जात लव ! चिरस्य परिष्वजेथां पुनः जन्मान्तरगतां जननीम् । (ख) भगवन् ! प्रणमामि । (ग) आश्चर्यं । तातः, कुलगुरुः, आर्य्याजन, सभर्तृकार्य्या शान्तादेवी, सलक्ष्मणाः सुप्रसन्ना आर्य्यपुत्रचरणाः समं कुशलवावपि दृश्यन्ते तन्निर्भरास्मि आनन्देन ।

पाप्मभ्यश्च पुनातु वर्द्धयतु च श्रेयांसि सेयं कथा (१)
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च।
तामेतां (२) परिभावयन्त्वभिनयैर्विन्यस्तरूपां (३) बुधाः
शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥२०॥

इति निष्क्रान्ताः सर्वे।

इति सम्मेलनं नाम सप्तमोऽङ्कः।

समाप्तमिदं महाकविभवभूतिविरचितमुत्तररामचरितं नाम नाटकम्।

(१) पुनाति वर्द्धयति च श्रेयांसि इति पाठान्तरम्। (२) वाल्मीकेः परिभावयन्तु इति विद्यासागरधृतः पाठः। (३) विन्यस्तरूपाः इति पाठान्तरम्।

# TITLE OF THE DRAMA.

रामस्य दाशरथेः चरितम् वृत्तम् कर्मादिकम् इति रामचरितम्। उत्तरम् दशाननिधनात् परं अयोध्यायां प्रत्यागमनात् ऊर्द्ध्वं रामचरितम् (वर्णितं) अस्मिन् नाटके इति बहुव्रीहिणा उत्तररामचरितमिति पदम् सिद्धम्। यद्वा उत्तरं रामचरितम् इति उत्तररामचरितम् कर्मधारयः। लक्षणया नाटकमित्यत्र उपचर्य्यते। अथवा उत्तररामचरितमधिकृत्य कृतं नाटकमिति "अधिकृत्य कृते ग्रन्थे" इत्यण् लुबाख्यायिकाभ्यो बहुलम् इति अणप्रत्ययस्य लुपि उत्तररामचरितम्। नाटकादेरपि सामान्यतोऽन्तर्भावादाख्यायिकासु।

भगवतो विष्णोरंशावतारस्य रामचन्द्रस्य बालचरितमवलम्ब्य कविना तत्रभवता भवभूतिना महावीरचरितं नाम नाटकमुपनिबद्धम्। तस्यैव नाटकस्य उत्तरः अंशः उत्तररामचरितम्। उत्तरचरितमिति सङ्क्षेपेणाख्यायते।

---

# NOTES.

## ओं नमो गणेशाय ।

अथ तत्रभवान् भवभूतिर्नाम महाकविः उत्तररामचरितं नाम करुणविप्रलम्भाख्य-रसप्रधानं नाटकमनवद्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तये आशीर्नमस्क्रियावस्तु-निर्देशोवापि तन्मुखं इत्यालाङ्कारिकवचनप्रामाण्यात् आशीराद्यन्यतमस्य नमस्कारस्य प्रारिप्सितार्थसाधने सामर्थ्यात् तमेव प्रस्तौति इदमिति ।

अन्वयः। पूर्व्वेभ्यः कविभ्यः नमोवाकं इदं प्रशास्महे, (यत्) आत्मनः कलां अमृतां वाचं देवतां विन्देम ॥ १ ॥

व्याख्या। पूर्व्वेभ्यः मम पूर्व्ववर्त्तिभ्यः कविभ्यः पूज्येभ्यः वाल्मीकिप्रभृतिभ्यः नमोवाकं नमः इत्यस्य वाकः उक्तिः यस्मिन् कर्म्मणि तद् यथा तथा नमोवाकं नमःशब्दोच्चारण-पूर्व्वकम्, यद्वा नमः उक्ता इति नमोवाकं, वचेः णमुल् कुत्वं छान्दसं इति तर्कवागीश-पादाः इदं वक्ष्यमाणरूपं वस्तु प्रशास्महे प्रार्थयामहे, यदित्यध्याहार्य्य व्याख्येय आत्मनः परमात्मनः विष्णोः कलां अंशभूता, कलातु षोडशोभागः इत्युक्तेः विशेषपरस्यापि कलाशब्दस्य भागमात्ररूपसामान्यार्थे पर्य्यवसानम्। अमृतां नाशरहितां नित्यां इत्यर्थ वाचं देवतां वाग्देवतां सरस्वतीं विन्देम प्राप्नुयाम, लभेमहि इति यावत्। विद्यायाः, अधिष्ठात्री देवी मयि प्रसन्ना सती ममेमं उद्यमं सफलं करोतु इति मान्यान् वाल्मीकि-व्यासप्रभृतीन् गुरून् प्रणम्य याचे इत्यर्थः सर्व्वं खल्विदं ब्रह्म इति श्रुतेः वागधिष्ठात्री देवी सरस्वती ब्रह्मणः अंशस्वरूपा। साच नित्या इत्यत्र नास्ति विप्रतिपत्तिः। शब्दरूपायाः तस्याः नित्यत्वे मीमांसकाः प्रमाणं। शब्दो नित्य इति मीमांसका आमनन्ति ।

विश्वरूपस्य ब्रह्मणः विष्णोर्व्वा विवर्त्तभेदः शब्द इति विष्णुपुराणे स्पष्टमुक्तम् तद् यथा—काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च। शब्दमूर्त्तिधरस्यैते वपु-र्विष्णोर्महात्मनः।

गुरुभ्यः इत्यत्र नमःस्वस्तीत्यादिना नमःशब्दयोगात् चतुर्थी। बहुवचनम् गौरव-द्योतनार्थमिति केचित्। वाल्मीकिव्यासप्रभृतयः बहवः पूर्व्वाचार्य्याः अभिप्रेताः इति द्योतनार्थं बहुवचनम् इत्यन्ये। वच धातोः ब्रुवो वा घञ् प्रत्ययेन भावे वाकः इति पदं सिद्धम्। नमः इत्यस्य वाकः यस्मिन् कर्म्मणि तद् यथा तथा, नमोवाकं। क्रिया-विशेषणमिदं प्रशास्महे इत्यनेन सह अन्वयः। Premchandra Tarkabagis

derives it from the root वच् with the affix णमुल् ; the form should have been नमोवाचं ; but the letter च is changed into क। It is a vedic form. The author has used it on account of his partiality for vedic usages. The root शास् in प्रशास्महे belongs to अदादि class, and is conjugated in the आत्मनेपद ; it is generally used with the उपसर्ग, आङ् ; some hold that the root शास् when it is used with आङ् and means to wish is conjugated in the आत्मनेपद (आङ् पूर्व्वयोः शास्शिंसत्योरिच्छायामात्मनेपदम्)। If however शास् be not accepted as an आत्मनेपदी root, different from the root शास् to rule ; then the form प्रशास्महे stands without any justification. The plural number in प्रशास्महे does not indicate that there are many agents of the verb. The nominative case वयम् corresponds to the "modest we" in English. The singular number in such cases implies a bit of egotism. The same remark applies to विन्देम। अत्र शक्यार्थे लिङ्। गुरूणां प्रसादेन वागदेवतालाभे शक्तिः स्यादित्यर्थः। वच्धातोः क्विप् वाच् क्विब्वचिप्रच्छीत्यादिना क्विपि असम्प्रसारणं दीर्घश्च। देव एव इति देवता स्वार्थे तल्। क्वचित् स्वार्थिकाः प्रकृते लिङ्गवचनान्यतिवर्त्तन्ते इति स्त्रीलिङ्गता। न मृता इति अमृता, यद्वा नास्ति मृतं मरणं यस्याः सा अमृता। The Greek word Logos means word. It is said in the Bible that in the beginning there was word and that word was God. This doctrine is essentially the same as laid down in this verse.

## नान्द्यन्ते सूत्रधारः।

नान्दी लक्षणम्—आशीर्व्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टभिर्व्वापदैरुत॥

इत्युक्तलक्षणायाः नान्द्याः इदं कविभ्यः पूर्व्वेभ्यः इति प्रवन्धे अनवकाशात् अत्र नान्दीशब्देन रङ्गद्वाराभिधानं पूर्व्वरङ्गस्य अङ्गमुच्यते। यदुक्तम्—यस्मादभिनयोह्यत्र प्राथम्यादवतार्य्यते। रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्। रङ्गद्वाराभिधानायाः नान्द्याः नटैरेव कर्त्तव्यतया कविना तस्याः उपनिबन्धनं न कृतम्। नटैः सम्पादितायाः

नान्द्याः अवसाने सूत्रधारः इदं प्रयोजितवान् इतः प्रभृति मया नाटकमुपादीयते इति कवेरभिप्रायः सूचितः ।

सूत्रधारः । अतिविस्तरेण अतिबाहुल्येन नान्द्याः इति शेषः अलम् नान्दीविस्तरसाध्यं किञ्चिन्नास्ति इत्यर्थः । गम्यमानसाधनक्रियापेक्षयाकरणत्वम् । विपूर्व्वात् स्तृणातेः अप् । शब्दसम्बन्धित्वात् घञः प्रतिषेधः प्रथने वावशब्दे; इति । तथाचामरः—विस्तारो विग्रहो व्यासः सतु शब्दस्य विस्तरः । सूत्रं धरति इति सूत्रधारः । कर्म्मण्यण् ।

कालप्रियनाथस्य तदाख्यस्य शिवलिङ्गभेदस्य विदर्भदेशवर्त्तिनः यात्रायां उत्सवे आर्य्याश्च ते मिश्राश्चेति आर्य्यमिश्राः तान् माननीयान् सभायामासीनान् रङ्गप्रेक्षकान् विज्ञापयामि । या धातोः त्रन् भावे बाहुलकात् । यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियामिति मेदिनी । केचित्तु कालप्रियनाथं उज्जयिनीस्थितस्य महाकालेति प्रसिद्धस्य शिवलिङ्गस्य नामान्तरं मन्यन्ते । अत्रभवन्तः माननीयाभवन्तः । अत्रभवान् तत्रभवान् पूज्ये । अयं भवान् इति सुप्सुपेति समासः । इतराभ्योऽपि दृश्यते इति प्रथमाया स्त्रप्रत्ययः । विदाङ्कुर्व्वन्तु जानन्तु । विदाङ्कुर्व्वन्त्वित्यन्यतरस्यामिति वेत्ते र्लोटि आमगुणाभावो लोटोलुक् लोड़न्तकरोत्यनुप्रयोगश्च वा निपात्यते ।

काश्यपः काश्यपगोत्रसम्भूतः श्रीकण्ठपदलाञ्छनः श्रीकण्ठोपाधिकः पदञ्च वाक्यञ्च तयोः प्रमाणं तस्य तत्त्वं तत् जानाति इति पदवाक्यप्रमाणतत्त्वज्ञः आतोऽनुपसर्गे इति कः । यद्वा पदञ्च वाक्यञ्च प्रमाणञ्च इति पदवाक्यप्रमाणानि तेषां तत्त्वं जानाति इति व्याख्यानम् । वाक्याश्रिभूतानां पदानां सुप्तिङन्तलक्षणानां । वाक्यानां तथा प्रमाणशास्त्राणाञ्च तत्त्वं स्वरूपं यः सम्यक् वेद, तथाविधः जातूकर्ण्याः पुत्रः भवभूतिर्नाम कश्चित् विद्वान् अस्ति । श्रीः भारती कण्ठे रसनाग्रे इत्यर्थः यस्य स श्रीकण्ठः । श्रीर्वेशरचनाशोभाभारतीसरलद्रुमे इति मेदिनी । श्रीकण्ठ इति पदं इति श्रीकण्ठपदं ; तत् लाञ्छनं नाम उपाधिरिति यावत् यस्य स श्रीकण्ठपदलाञ्छनः । लाञ्छनं नामचिह्नयोरिति मेदिनी । भवात् भूतिः सम्पद् यस्य स भवभूतिः । भिक्षुरूपिणा शिवेन अस्मै भूतिर्दत्ता इति वार्त्ता । "साम्बा पुनातु भवभूति पवित्रमूर्त्तिः" इति कविना रचितं श्लोकांशं श्रुत्वा सन्तुष्टेन नृपतिना अस्य भवभूतिरिति संज्ञा कृता । यमिति ।

अन्वयः । इयं देवी वाक् यं ब्राह्मणं वश्या इव अनुवर्त्तते । तत्प्रणीतं उत्तरं रामचरितं प्रयोज्यते ॥ २ ॥

इयं देवी वाक् वाग्देवी सरस्वती यं ब्राह्मणं विप्रं भवभूतिं वशं गता इति वश्या, वश आयत्ततायां तस्मात् यत्, ततः स्त्रियां टाप्, आज्ञानुवर्त्तिनी सेविका इव अनुवर्त्तते अनुगच्छति, यस्य रसनाग्रे वाणी नरीनृत्यते इत्यर्थः । तेन ब्राह्मणा भवभूतिना प्रणीतं रचितं उत्तरं रामचरितं नाम नाटकं प्रयोज्यते प्रयोगे अधिकारिष्यते अभिनेष्यते अस्माभिरिति शेषः युजेः कर्म्मणि लट् । अशेषशास्त्रविदुषी गीर्व्वाणवाणीपारावारपारीणस्य

तत्रभवतो भवभूतेः कृतिं उत्तररामचरितं अभिनीय अद्य भगवतः कालप्रियनाथस्य उत्सवे समेतान् सामाजिकान् आराधयिष्यामो वयमिति वाक्यार्थः। अत्र अनुष्टुप् वृत्तम्। स्फुटोऽत्र उपमालङ्कारः।

कार्य्यस्य अभिनयरूपस्य वशात् अनुरोधात् आयोध्यिकः अयोध्यावासी तदानीन्तनः तदानीं भवः इति तदानीन्तनः रामसमकालवर्त्ती च सन्नस्मः जातः। यतोऽस्माभिः रामचरितमभिनीयते अतोभवद्भिर्मन्तव्यम् यद् वयं तस्मिन् काले तत्र च देशे अयोध्यायां वर्त्तामहे। तदानीं तस्मिन् काले भवः इति तदानीन्तनः। तदानीं इत्यव्ययात् ख्युल् तुडागमश्च। (तनट् प्रत्ययः)। अयोध्यायां भवः इति आयोध्यिकः अध्यात्मादित्वात् ठञ्। आकृतिगणः अध्यात्मादिः। समन्तादित्यव्ययम्। सर्व्वासु दिक्षु इत्यर्थः।

यदि शब्दः अत्र यतः इत्यर्थे वर्त्तते। यस्मात् इत्यर्थः। पौलस्त्यः रावणः। पुलस्त्यस्य ऋषेः नप्ता रावणः। अपत्यार्थे अण् ऋष्यन्धकवृष्णिकुरुभ्यश्चेति अण्। पौलस्त्यस्य रावणस्य कुलं वंशः, तस्य धूमकेतुः उत्पातग्रहविशेषः। यद्वा पौलस्त्य-कुलस्य धूमकेतुः अनलः विनाशयिता इत्यर्थः। तस्य महाराजस्य रामस्य अयं अभिषेकस्य राज्याभिषेकस्य समयः कालः वर्त्तते यः कालः, रात्रिन्दिवं अहोरात्रम् व्याप्य न संहृता अविरता इत्यर्थः आनन्दनान्दी प्रमोदातिशयजन्यस्तुतिपाठगीतवादित्रादिः यस्मिन् काले सः असंहृतानन्दनान्दीकः। नद्यृतश्चेति कः तत् किमिति कस्मात् हेतोः चत्वरस्थानानि अजिरभूमयः अङ्गनभूमयः इति यावत् विश्रान्ताः गीतस्तुतिपाठादेः विरताः चारणाः वैतालिकाः स्तुतिपाठकाः येषु तानि विश्रान्तचारणानि। अस्मिन् अभिषेकमहोत्सवे संप्रवृत्ते किमर्थं मागधाः स्तुतिगीतिमङ्गलानि नाचरन्ति। चत् धातोः ष्वरच् चत्वरम्। कृ गॄ शॄ वृञ्चतिभ्यः ष्वरच्। अङ्गणं चत्वराजिरे इत्यमरः। चारणास्तु कुशीलवाः इति चामरः। चारयन्ति कीर्त्तिमिति चारणाः ण्यन्तात् चरतेः नन्द्यादित्वात् ल्युः। अभि + सिच् + घञ् = अभिषेक। महान् राजा इति महाराजः। राजाहःसखिभ्यष्टच्। आनन्दहेतुका नान्दी इति आनन्दनान्दी। शाकपार्थिवादिवत् समासः। यद्वा आनन्दस्य नान्दी इति विग्रहः। रात्रौ च दिवा च इति सप्तम्यर्थे वृत्तौ द्वन्द्वः रात्रिन्दिवम्। अचतुरादिसूत्रेण निपातितम्। यद्यपि सप्तम्यर्थे द्वन्द्वसमासः विहितः तथापि कथञ्चित् प्रयोगबलात् प्रातिपदिकार्थवृत्तित्वम्। ततश्च अत्यन्तसंयोगे द्वितीया। The word दिवा is indeclinable, and is always used in the sense of the locative, दिवा दिवसे; but in instances like दिवामन्या रात्रिः दिवा is used in the accusative case. Hence it may be held that in रात्रिन्दिवम्, the sense of the objective of duration is present. Note—स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते। कुमारसम्भवम्।

सूत्रधारस्य उक्तिरियं—भारतीवृत्तिः तथाचोक्तम्—भारती संस्कृतप्रायो वाग्-व्यापारो नटाश्रयः। तस्याश्च प्ररोचना नाम अङ्गम्। तल्लक्षणम् उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना।

नटः। भाव इति सूत्रधारस्य सम्बोधनम्। बहुमानसूचकोऽयं शब्दः। सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः। लङ्कायां यः समरः संग्रामः तत्र सुहृदः इति लङ्कासमरसुहृदः सुग्रीवविभीषणादयः। शोभनं हृदयं यस्य स सुहृत् मित्रम्। सुहृद दुर्हृदौ मित्रामित्रयोरिति निपातः। प्लवङ्गाश्च राक्षसाश्च ते प्लवङ्गराक्षसाः। प्लवेन लम्फेन गच्छन्ति ये ते प्लवङ्गाः वानराः। गमेः सुप्युपसंख्यानम् इति खच् प्रत्ययः। डिदवद् वा वाच्यः, इति टेर्लोपिप्लवङ्गः इति रूपसिद्धिः। डिद्वद्भावस्य अभावे प्लवङ्गम् इति रूपान्तरम्। रक्ष्यते हवि रेभ्यः इति रक्षांसि। रक्षधातोः असुन्। रक्षांसि एव इति राक्षसाः क्वचित् स्वार्थिकाः प्रकृतेर्लिङ्गवचनान्यतिवर्त्तन्ते इति पुंस्त्वम्। प्र + इष् (णिच्) + क्त (कर्म्मणि) = प्रेषित। इषेर्गत्यर्थत्वात् गतिबुद्धिप्रत्यवसानेत्यादिना अणिकर्त्तुः कर्म्मकारकत्वम्। (कर्म्मणि प्रथमान्त) प्लवङ्गराक्षसाः इति पदम्। गृहाः पुंसि च भूम्न्येव इति अमरः। सभाजने अरण्यवासात् चैमेण प्रत्यागतस्य रामचन्द्रस्य अभ्यर्थनार्थं इत्यर्थः उपतिष्ठन्ते ये ते सभाजनोपस्थायिनः। तिष्ठतेः णिनिः। सुप्यजातौ णिनिस्ताच्छील्ये। रामचन्द्रमभिनन्दितुं समागताः। दिशां अन्ताः इति दिगन्ताः। नाना दिगन्ताः इति नानादिगन्ताः सुप्सुपेति समासः। तेषां पावनाः पवित्रीकर्त्तारः इति नानादिगन्तपावनाः। षष्ठीसमासः। पूञोण्यन्तात् नन्द्यादित्वात् ल्युः। पावयन्ति इति पावनाः। ब्रह्माणश्च ते ऋषयश्च इति ब्रह्मर्षयः राजानश्चते ऋषयश्च इति राजर्षयः। ब्रह्मर्षयः अगस्त्यप्रमुखाः। राजर्षयः जनकप्रमुखाः। येषां आराधनाय अर्हणाय तोषणाय इत्यर्थः इयतो दिवसान् एतावन्ति दिनानि व्याप्य उत्सवः गीतवाद्यादिरूपः आसीत्। दिवसान् इति अत्यन्तसंयोगे द्वितीया। ना क्लीवे दिवसवासरौ। इदं परिमाणमेषां इति इयन्तः तान् इयतः। इदम् + वतु ( परिमाणे ) = इयत्।

अन्यच्च अपरञ्च—किञ्च अभिषेकोत्सवान्ते—

अन्वयः। वशिष्ठाधिष्ठिता देव्यः राघवमातरः अरुन्धतीं पुरस्कृत्य जामातुः यज्ञे आश्रम गताः॥ ३॥

देव्यः महाराजदशरथस्य पत्न्यः राघवस्य रामस्य मातरः कौशल्याप्रमुखाः वशिष्ठेन कुलगुरुणा अधिष्ठिताः परिचालिताः वशिष्ठनायकाः अरुन्धती वशिष्ठपत्नीं पुरस्कृत्य अग्रतः कृत्वा। पुरोऽव्ययम् इति गतिसंज्ञायां समासेक्त्वाल्यप्। जामातुः ऋष्यशृङ्गस्य यज्ञे द्वादशवार्षिके सत्र निमन्त्रिताः आश्रमं जामातृतपोवनं गताः। जामातुरिति पद काकाक्षिगोलकन्यायेन यज्ञे आश्रम च इत्युभयेन अन्वेति। यजेः नः यज्ञः। आङ्पूर्व्वात् श्राम्यतेः अधिकरणे घञ्। नोदात्तोपदेशस्य मान्तस्य अनाचमेः इति

वृद्धिप्रतिषेधः। जायां माति मिनोति मिमीते वा इति जामाता। त्वष्टृनप्तृ...... इत्यादिना मा धातोः जायोपपदात् तृण्। जायायाः अन्तलोपः।

सूत्रधारः। विभिन्नः देशः इति विदेशः तत्र भवः इति वैदेशिकः। विदेश शब्दात् ठञ् अध्यात्मादित्वात् ठञ्। अध्यात्मादिराकृतिगणः। अहं आर्यौघ्निकः सत्यम् किन्तु अत्र नगरे न वसामि, सुदूरस्थिते कुत्रचित् ग्रामादौ वसामि, अतएव विशेषं न वेद्मि।

अन्वयः। राजा दशरथः शान्तां नाम कन्यां व्यजीजनत्, अपत्यकृतिकां यां राज्ञे लोमपादाय ददौ॥ ४॥

राजा दशरथः दशसु दिक्षु रथः अप्रतिहतः यस्य स दशरथः शान्तां नाम कन्यां दुहितरं व्यजीजनत् उदपादयत्। यां दुहितरं लोमपादाय राज्ञे अङ्गदेशाधिपतये-प्रियसखाय लोमपादाय अपत्यकृतिकां दत्तिमा कन्यां ददौ ; कन्यायाः कृत्यस्य करणाय ददौ ; ननु भार्य्यात्वेन ददौ इति अपत्यकृतिकामित्यस्यार्थः। जन्धातोः णिजन्तात् लुङि रूपम् अजीजनत्। न पतन्ति पितरोऽनेन इति अपत्यं ; अपत्यस्य कृतिः करणं यस्याः सा अपत्यकृतिका। शेषाद् विभाषा इति समासान्तः कः स्त्रियां टाप्। दौहित्रस्यापि पिण्डदाने अधिकृतत्वात् दुहितुरपत्यत्वम्। अतएव अपत्यकृतिकामिति विशेषण सगच्छते।

अत्र रामायणम्—

"अपुत्रस्त्वङ्गराजो वै लोमपाद इतिश्रुतः।
स राजानं दशरथ प्रार्थयिष्यति भूमिपः॥
अनपत्योऽस्मि मे कन्यां सखे दातुं त्वमर्हसि।
शान्तां शान्तेन मनसा पुत्रार्थे वरवर्णिनीम्॥
श्रुत्वा दशरथो वाक्यं प्रकृत्या करुणात्मकः।
दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः॥
प्रतिगृह्य च तां कन्यां स राजा विगतज्वरः।
स्वपुरं यास्यति प्रीतः कृतार्थेनान्तरात्मना॥
तां कन्यामृष्यशृङ्गाय प्रदास्यति स पार्थिवः।
ऋष्यशृङ्गोऽपि च प्रीतो लब्ध्वा भार्य्यां भविष्यति।"

*Quoted from Vidyasagara's Uttaracharitam.*

विभाण्डकस्य मुनेः पुत्रः ऋष्यशृङ्गः तां शान्तां उपयेमे परिणिन्ये। ऋष्य is a white footed antelope. ऋष्यस्य शृङ्गमिव शृङ्गं यस्य सः ऋष्यशृङ्गः। उपाद् यमः स्वकरणे इति आत्मनेपदम्। तेन ऋष्यशृङ्गेण इदानीं दीर्घकालव्यापी यज्ञः समारब्धः। द्वादश वर्षाणि व्याप्य भवति इति द्वादशवार्षिकम्। तद्धितार्थ द्विगुः।

द्वौच दश च इति द्वादश ; द्वाधिकादशेतिवा द्वादश । द्वाष्टनः संख्यायामबहुव्रीह्यशीत्योः इति आत् । द्वादशवर्षशब्दात् कालात् ठञ् इति ठञ् ।

द्वादशवार्षिकमित्यत्र उत्तरपदवृद्धिश्चिन्त्या । अत्र य स्तद्धितप्रत्ययः स स्फुटमेव भविष्यत्यर्थे प्रयुक्तः । ततः "वर्षस्याभविष्यति" इत्यनेन भविष्यति अर्थे उत्तरपदस्याचामादेर्वृद्धिप्रतिषेधः—तथा चोदाहरणम्—यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये । अधिकं वापि विद्येत स सोमं पातुमर्हति । अनुशतिकादिगणे द्वादशवर्षशब्दो न पठितः । अस्य आकृतिगणत्वाभ्युपगमे द्वादशवार्षिकमिति पदं सिध्यति ।

तद्धितप्रत्ययार्थे संख्यायाः द्वादशशब्दस्य वर्षशब्देन सह यः समासः स तद्धितार्थ द्विगुः । सत्रं यज्ञः सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च इत्यमरः । समुदाने इति धातोः ष्ट्रन् सत्रम् । आङ्पूर्व्वात् रभेः कर्म्मणि क्तः आरब्धम् । तस्य जामातुः अनुरोधात् छन्दानुवर्त्तनात् हेतोः कठोरः पूर्णः गर्भः यस्याः सा कठोरगर्भा । Cf. कठोरताराधिपलाञ्छनच्छविः । माघः । ताम् जानकी अयोध्यायां रामसकाशे न्यस्य श्वशुजनः जामातुराश्रमे गतः ।

सूत्र । अनेन इति गम्यमानसाधनक्रियानुरोधात् तृतीया । राज्ञः द्वारम् इति राजद्वारम् । उपतिष्ठावः गच्छावः । उपपूर्व्वात् तिष्ठतेः सकर्म्मकात् देवपूजाद्यर्थे अवर्त्तमानात् परस्मैपदम् । स्वस्य जातिः स्वा वा जातिः इति स्वजातिः तस्याः समयः आचारः इति स्वजातिसमयः जात्यनुरूपः आचारः तेन । प्रकृत्यादिभ्यश्चोपसंख्यानमिति तृतीया । समयाः शपथाचारकालसिद्धान्तसंविदः । इत्यमरः ।

नटः । सुपरिशुद्धाम् अनवद्याम् अदुष्टाम् । उपस्थाने यत् स्तोत्रम् स्तुतिः तस्य पद्धतिः रीतिः इति उपस्थानस्तोत्रपद्धतिः । राजसमीपोगमनसमये या स्तुतिः करिष्यते सा यथा विशुद्धा लोके अविगीता च भवति तथा आवाभ्याम् यतितव्यम् । राज्ञः इति कृद्योगलक्षणा कर्मणि षष्ठी । शेषे वा । स्तु + ष्ट्रन् = स्तोत्र । पादाभ्यां हन्यते या सा पद्धतिः । हिमकाषिहतिषु च इति पदादेशः । पाद + हन् + क्तिन् । भावः माननीयः जन. ।

सूत्रधारः । मारिष, आर्य्य, माननीय इत्यर्थः । आर्य्यस्तु मारिष इत्यमरः ।

अन्वयः । सर्व्वथा व्यवहर्त्तव्यं कुतः हि अवचनीयता जनः स्त्रीणां यथा तथा वाचां साधुत्वे दुर्ज्जनः ॥ ५ ॥

सर्व्वथा सर्व्वेण प्रकारेण व्यवहर्त्तव्यम् व्यवहारः कर्त्तव्यः हि यतः अवचनीयता अनिन्द्यता कुतः कस्मात् सम्भवति । न कथमपि इति भावः । नहि निन्दाभयात् स्तुतिपाठादिरूपस्य व्यवहारस्य विलोपः कर्त्तुं शक्यते । इह जगति न केनापि निन्दा अतिक्रमितुं शक्यते लोकानां भिन्नप्रकृतिकत्वात् रुचिवैचित्र्याच्च किमपि द्रव्यं स्तोत्रादिकं वा सर्व्वेषां मनोरमं न भवति । जनो लोकः स्त्रीणां नारीणां साधुत्वे

सदाचारादिजन्यपावित्र्ये, पातिव्रत्यलक्षणे वा विषये यथा दुर्ज्जनः दोषैकदृक् तथा वाचां वाक्यानां प्रबन्धादीनाञ्च साधुत्वे प्रसादमाधुर्य्यादिगुणवत्त्वे दुर्ज्जनः खलप्रकृतिः। सद्गुणसम्पन्नानां अपि साध्वीनां चारित्रे यथा लोको दोषं कौलीनं वा उद्भावयति तथा यत्नेन रचितेषु गुणवत्तया हृदयङ्गमेषु अपि प्रबन्धादिषु मक्षिकावृत्तिर्जनो दूषणानि आपादयति। अतः निन्दा अपरिहार्य्या इति भावः व्यवपूर्व्वात् हरतेः भावे तव्य-प्रत्ययः। कृत्यीवचेर्व्वा अनीयर् प्रत्ययः वचनीयम् निन्द्यम्। न वचनीयम् इति अवचनीयम्। तस्य भावः अवचनीयता। वचेः क्विप् वाक्।

नटः। दुर्ज्जन इति पदेन लोकस्य नीचाशयत्वस्य कौलीनप्रियत्वस्य वा इयत्ता सम्यक् न प्रकाश्यते, अतएव लोकः अतिदुर्ज्जनः इति वक्तव्यम् लोकस्य अतिदुर्ज्जनत्वस्य प्रमाणमाह। देव्यामिति।

अन्वयः। यतः जनः देव्यां वैदेह्यां अपि सापवादः हि। रक्षोगृहस्थितिः मूलम्। अग्निशुद्धौ तु अनिश्चयः॥ ६॥

यस्मात् लोकः देव्यां वैदेह्यां सीतायां अपि का कथा अन्यासां नारीणां, इत्यपेरर्थः सापवादः अपवादेन निन्दया सह वर्त्तते इति सापवादः। या खलु पवित्रतायाः मूर्त्तिरिव तस्याः जानक्या श्चरित्रस्य विशुद्धौ लोकः संशयानो वर्त्तते। चारित्रसन्देहस्य मूलं कारणं रक्षसः रावणस्य गृहे स्थितिरवस्थानम्। दशकन्धरेण हृता सीता कतिपयान् मासान् तस्य अशोकवनिकायां यदुवास, तदेवावलम्ब्य दुर्ज्जनो वीभत्स-जनवादं प्रवर्त्तयति। यत्तु रावणवधात् ऊर्द्धम् सर्व्वेषां समक्षम् अग्नौ हुताशने शुद्धिः चरित्रोत्कर्षनिर्णयः अभूत् तत्र विशुद्धौ तु न निश्चयः अतत्यस्य लोकस्य न संशयनिरासः। दूरवर्त्तिनि लङ्काद्वीपे या वह्नौ विशुद्धिः अतत्स्थितोजनः तस्यां न श्रद्धत्ते। अतएव सीतायाः परिग्रहं नानुमन्यते इति भावः। वशिष्ठेन शप्तो निमिर्विदेहोऽभवत्। ततः प्रभृति तद्वंशभवानां तैरध्युषितस्य देशस्य च विदेहसंज्ञा बभूव। विदेहानामीश्वरः अयं वा इति वैदेहः जनकः तस्यापत्यं स्त्री वैदेही सीता।

सूत। किंवदन्ती जनश्रुतिः लोकवाद इति यावत् महाराजं रामं स्पृशेत् उपेयात् तस्य श्रुतिपथमियात्। ततः अतिकष्टं कृच्छ्रं स्यात्। दुःश्रवे अस्मिन् लोकवादे राज्ञः श्रवणगोचरीभूते सुमहदनिष्टं आपतेत् इति नाटकीयवस्तुवीजं उपक्षिप्तं भवति। किम + वद + झ। (झोऽन्तः)। ततः स्त्रियां ङीप् किंवदन्ती। कष् + क्त = कष्ट। कृच्छ्रगहनयोः कषः इति कृच्छ्रार्थे निष्ठायामिड्भावः। स्पृशेदिति सम्भावनायां लिङ्। अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत् इति पदत्रयं लुङि।

नटः। श्रेयः मङ्गलं विधास्यन्ति करिष्यन्ति प्रशस्य शब्दात् ईयसुन्। प्रशस्यस्य श्रादेशः। प्रशस्य + ईयस् = श्र + ईयस् = श्रेयस्। स्वस्ति विधास्यन्ति इति पाठे स

एवार्थः। स्वस्ति इत्यव्ययं मङ्गलार्थे वर्त्तते। स्वस्ति मङ्गल क्षेमं इत्यर्थः। परिवर्त्तनात् परं अपि सीतया सह पुनर्मेलनं रामस्य भविष्यति इति सूचितमनेन। स्नेहादिति।

अन्वयः। जनकः स्नेहात् सभाजयितुं एत्य अमूनि दिनानि उत्सवेन नीत्वा विदेहान् गतः। ततः विमनसः देव्याः परिसान्त्वनाय नरेन्द्रः धर्म्मासनात् वासगृहं विशति॥ ७॥

जनकः मिथिलाधिपः राजर्षिः स्नेहात् दुहितरि, जामातरि च वात्सल्याभिप्रायात् हेतोः सभाजयितुं क्षेमैणारण्यात् प्रतिनिवृत्तौ तौ प्रत्यभिनन्दितुं एत्य अयोध्यायामागत्य अमूनि एतावन्ति दिनानि वासराणि उत्सवेन अभिषेकहेतुकेन प्रमोदेन नीत्वा यापयित्वा अद्य विदेहान् स्वराजधानीं मिथिलां गतः प्रतिनिवृत्तः। ततः तस्मात् कारणात् विमनसः विच्छिन्नं मनो यस्याः सा विमनाः तस्याः पितुर्वियोगेन परिदुर्म्मनायमानायाः देव्याः सीतायाः परिसान्त्वनाय समाश्वासनाय दुःखितां देवीं आश्वासयितुं नरेन्द्रः नृपतिः रामचन्द्रः धर्म्मस्य आसन इति धर्म्मासनम् लोकव्यवहारान् प्रत्यवेक्षितुं अधिष्ठितं विचारासनम् इत्यर्थः तस्मात् तत् परित्यज्य ल्यवलोपे कर्म्मण्यधिकरणे इति पञ्चमी। वासगृहं आवासं अन्तःपुरमित्यर्थः विशति गच्छति। सभाज इत्यदन्तश्चुरादिः तस्मात् तुमुन् सभाजयितुम् संवर्द्धयितुं अभिनन्दितुमित्यर्थः। उत्सवेनेति करणे तृतीया। विदेहाः संज्ञाशब्दोऽयं पुंसि भूम्नि प्रयुज्यते। विदेहानां निवास. इति जनपदे अणो लप्। लपियुक्तिवद्व्यक्तिवचने इति पुंस्त्वं बहुवचनम् च इति प्राचां मतं निरस्यन्नाह॰भगवान् सूत्रकारः तदशिष्य संज्ञाप्रमाणत्वात्। विच्छिन्नं मनो यस्याः इति विग्रहे प्रादिभ्यो धातुजस्येति बहुव्रीहिः। यद्वा विशिष्टार्थमादायैव बहुव्रीहिनिर्व्वाहः। देव्याः इत्यत्र क्तदर्थयोगलक्षणा कर्म्मणि षष्ठी। परिपूर्व्वात् सान्त्वयतेः भावे ल्युट् परिसान्त्वनम्। तुमर्थाच्च भाववचनादिति चतुर्थी। वासस्य गृहमिति वासगृहम्। नरेषु इन्द्र इव इति नरेन्द्रः। निर्द्धारणे सप्तमीसमासः।

प्रस्तावना—आमुखम्।

सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम्।
स्वकार्य्यं प्रस्तुताक्षेपि चित्रोक्त्यायत्तदामुखम्॥

प्रस्तावना वा——इति

दशरूपके प्रस्तावनायाः लक्षणम्।

প্রথম অঙ্ক।

পূর্ব্ববর্ত্তী কবিগণের প্রতি প্রণতি উচ্চারণপূর্ব্বক প্রার্থনা করি, যেন পরমাত্মার অংশস্বরূপা নিত্যা বাগ্দেবতাকে লাভ করিতে পারি॥ ১॥

নান্দীর অবসানে ,

সূত্রধার। অতি বিস্তর বা আড়ম্বরের প্রয়োজন নাই। অদ্য ভগবান্ কালপ্রিয়-নাথের উৎসব দিনে সমবেত মাননীয় সামাজিকবর্গকে নিবেদন করিতেছি। আপনারা অবগত হউন যে কাশ্যপগোত্রসম্ভূত, শ্রীকণ্ঠোপাধিক, শব্দশাস্ত্র ও প্রমাণশাস্ত্রের তত্ত্বজ্ঞ জাতুকর্ণীতনয় ভবভূতিনামক একজন পূজনায় কবি আছেন।

বাগ্দেবী বশীকৃতনারীর ন্যায় যে ব্রাহ্মণের অনুসরণ করিয়া থাকেন, তৎপ্রণীত "উত্তর-রামচরিত" নামক নাটক আমরা অভিনয় করিব ॥ ২ ॥

অভিনয় কার্য্যের অনুরোধে আমি একজন অযোধ্যাবাসী ও তৎকালবর্ত্তী লোক হইলাম ; ( ইহা আপনারা কল্পনার সাহায্যে মনে করিবেন )।

[ চতুর্দ্দিকে অবলোকন করিয়া ] ওহে ! ওহে ! পৌলস্ত্যবংশের ধূমকেতুস্বরূপ মহারাজ রামচন্দ্রের অভিষেকোৎসবে অহোরাত্র আনন্দ ও গীতবাদ্যের বিরাম নাই। কিন্তু অদ্য চারণগণ স্তুতিগীত হইতে বিরত হইয়া প্রাঙ্গণপ্রদেশে বিশ্রাম করিতেছে কেন ?

নট। [ প্রবেশ করিয়া ] মহাশয়, লঙ্কাসমরে সাহায্যকারী প্রিয়সুহৃৎ মহাত্মা কপি-রাক্ষসদিগকে, ও সম্বর্দ্ধনার্থ সমাগত নানাদিগন্তপাবন ব্রহ্মর্ষি ও রাজর্ষিদিগকে, মহারাজ স্বস্ব গৃহে প্রেরণ করিয়াছেন। তাঁহাদিগেরই মনস্তুষ্টিসাধন ও সম্মানবিধানের জন্য এত দিন ব্যাপিয়া উৎসব চলিতেছিল।

এবং রামচন্দ্রের জননী কৌশল্যা প্রভৃতি দশরথমহিষীগণ বশিষ্ঠের নেতৃত্বে অরুন্ধতী-দেবীকে অগ্রে লইয়া জামাতার যজ্ঞে তাঁহার আশ্রমে গমন করিয়াছেন ॥ ৩ ॥

সূত্র। আমি একজন বৈদেশিক এইজন্য জিজ্ঞাসা করিতেছি জামাতাটি কে ?

নট। রাজা দশরথের শান্তা নামে এক কন্যা জন্মগ্রহণ করেন। সেই কন্যাটী দত্রিমকন্যারূপে (অঙ্গাধিপতি ) লোমপাদকে প্রদত্ত হইয়াছিল ॥ ৪ ॥

বিভাণ্ডকতনয় ঋষ্যশৃঙ্গ তাহার পাণিগ্রহণ করেন। তিনি এক্ষণে দ্বাদশবর্ষব্যাপী এক যজ্ঞ আরম্ভ করিয়াছেন। তাঁহার অনুরোধে পূর্ণগর্ভা বধূ জানকীকে ( একাকিনী ) রাখিয়া গুরুজন সেস্থানে গমন করিয়াছেন।

সূত্র। এ সকল বিষয়ে আমাদিগের কি প্রয়োজন ? আমাদিগের জাত্যনুরূপ আচার প্রতিপালন করিয়া চল রাজদ্বারে উপস্থিত হই।

নট। তাহা হইলে মহাশয়, রাজসমীপে উপস্থানের যোগ্য একটী সুপরিশুদ্ধ স্তুতি-পরিপাটী নিরূপণ করুন।

সূত্র। আর্য্য, যে কোনরূপে হউক আচার ব্যবহার করিতে হইবে।

( এজগতে ) নিন্দা হইতে পরিত্রাণপ্রাপ্তি কিরূপে সম্ভবে ? জনসাধারণ স্ত্রীলোকের সাধ্বীত্ববিষয়ে যেরূপ দোষানুসন্ধিৎসু, বাক্য ও প্রবন্ধাদির বিশুদ্ধি বিষয়ে সেইরূপ দৌর্জ্জন্য প্রকাশ করিয়া থাকে ॥ ৫ ॥

নট। এবিষয়ে লোক অতি দুর্জ্জন ইহাই বলা উচিত।

কারণ লোকে দেবী বৈদেহীরও অপবাদ ঘোষণা করিতেছে। ইহার মূল রাক্ষসগৃহে অবস্থান। অগ্নিপরীক্ষায় উঁহাদের সংশয় অপনোদিত হয় নাই ॥ ৬ ॥

সূত্র। যদি এই জনশ্রুতি মহারাজের কর্ণগোচর হয় তাহা হইলে মহা ক্লেশের বিষয় হইবে।

নট। দেবতাগণ ও ঋষিগণ সর্ব্বপ্রকারে মঙ্গল বিধান করিবেন। [ পরিক্রমণ করিয়া ] ওহে ! ওহে ! এক্ষণ মহারাজ কোন্ স্থানে অবস্থিতি করিতেছেন ? [শ্রবণ করিয়া] লোকেরা এইরূপ বলিতেছে—

রাজর্ষি জনক স্নেহবশতঃ অভিনন্দন করিবার জন্য আগমন করিয়া ঐ কয়দিন উৎসবে অতিবাহিত করিয়া অদ্য মিথিলায় প্রতিগমন করিয়াছেন ; তজ্জন্য শোকবিমনা দেবীর পরিসান্ত্বনের নিমিত্ত নৃপতি ধর্ম্মাসন পরিত্যাগ করিয়া অন্তঃপুরে প্রবেশ করিতেছেন ॥ ৭ ॥

উভয়ে নিষ্ক্রান্ত—প্রস্তাবনা।

## FIRST ACT.

Having uttered the word of salutation to poets of old, we fervently pray that we may obtain Divine speech, an immortal portion of the Supreme Soul. ( 1 ).

*After the ( introductory ) benediction.*

*Stage-manager* :—No need of prolixity. Let me respectfully inform the honourable gentlemen ( assembled ) to-day at the festival of the God Kalapriyanatha that their worships may know that there is an illustrious descendant of Kasyap's race, who is the son of Jatukarni, bears the distinctive title of Srikantha ( in whose throat the goddess of speech is present), is well versed in grammar and logic and is by name Bhavabhuti.

The play Uttararamacharita ( or the latter part of Rama's life ), written by him, a Brahman whom the Goddess of Speech follows like an enslaved woman, will be enacted on the stage. ( 2 ).

Now for the purpose of performance I have become a man of that time ( a contemporary of Rama ) and a resident of Ayodhya.

[*Looking around*]. Hallo ! As this is the time of the coronation of the great king Rama, the comet of destruction of the family of the descendants of Pulastya, when joyous festivities and benedictory songs should be continuously going on day and night, why then are the court-yards silent and the chanters and bards taking rest ?

[ *Enter an Actor* ].

*Actor*:—Honoured Sir, the high-minded Monkeys and Rakshasas, the allies of the king in the war in Lanka and the holy sages

and also the royal sages, who sanctify the different quarters of the world, came over to offer their congratulations and for whose entertainment festivities lasted for so many days, have been sent back to their respective homes by His Majesty.

And also—The queens, the mothers of the king, under the guidance of Vasistha have gone with Arundhati at their head to the hermitage of their son-in-law on the occasion of a sacrifice ( that is being held there ). (3).

*Manager* :—I am a stranger (here) and so I ask who this son-in-law is.

*Actor* :—The king Dasaratha begot a daughter by name Santa whom he gave away as an adoptive daughter to the King Lomapada. (4).

Rishyasringa, the son of Bibhandaka, married her. He has now commenced a sacrifice that will last for twelve years. In compliance with his request, the respectable superiors ( or matrons) have gone there, leaving behind the daughter-in-law, though she is far advanced in pregnancy

*Manager* : - What have we to do with this ? Come, let us go the palace-gate agreeably to the duties of our profession.

*Actor* :—Let your honour, then, think of some faultless mode of laudatory address wherewith we may approach the king.

*Manager* :—Good sir, one must conduct himself as best as he can. For,

Whence can there be absolute exemption from censure ? People are censorious or fault-finding as regards the purity of language or of any piece of composition ; just in the same way as in reference to the chastity of women. (5).

*Actor* :—They are exceedingly fault-finding and wicked, you ought to say.

Since people speak evil of even the queen, the princess of Videha or Mithila. (Her) residence in the house of the Rakshasa is the basis ( thereof ). ( They put ) no faith in the ordeal of fire. (6).

*Manager* :—If this scandalous rumour reaches the king it will be a very sad thing.

*Actor* :—The sages and the gods will do good by all means. [*Advancing*]. Ye people, where is the king now? [*Listening*]. Thus say the people :—

Janaka, who out of affection came to offer his congratulations, has gone back to-day to the land of the Videhas after having spent these days in festivity. To console the queen sad and disconsolate for that reason the king repairs to the inner apartment, having left the judgment-seat. (7).

[ *Exeunt both* ].

*End of the Prelude.*

[ ततः प्रविशति..............सीता च। आसने उपविष्टः इति आसनोपविष्टः सप्तमीसमासः ]।

रामः। गुरवः पितरः। गौरवे बहुवचनम्। गुरुस्त्रिलिङ्गां महति दुर्भरालघुनोरपि। पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि इति मेदिनी। अस्मान् विहातुं परित्यक्तुं न शक्नुवन्ति। यत्तु जनको राजर्षिर्जनकः अस्मान् परित्यज्य विदेहान् गतः तत्र निःस्नेहता न कारणम्। अस्ति तत्र अन्यः कोऽपि हेतुः येन परवान् स गतः इत्यर्थः। तमेव हेतुं वक्ति। किन्तु इति।

अन्वयः। किन्तु अनुष्ठाननित्यत्वं स्वातन्त्र्यं अपकर्षति। आहिताग्नीनां गृहस्थता प्रत्यवायैः सङ्कटा ॥ ८ ॥

किन्तु अनुष्ठानानां अनुष्ठेयकर्म्मणां त्रिःसवनादीनां नित्यत्वं प्रतिदिनं अव्यभिचारेण कर्त्तव्यता स्वातन्त्र्यं स्वेच्छया प्रवर्त्तनम् स्वैरावस्थानम् प्रवृत्त्यनुरोधेन यत्र कुत्रापि कियन्ति दिनानि व्याप्य अवस्थानं इत्यर्थः अपकर्षति प्रतिरुणद्धि, प्रतिबध्नाति इति यावत्। दुहितरि स्नेहानुरोधेन स राजर्षिः अत्र चिरयितुं नाशक्नोत्। यतस्तस्य प्रतिदिनमेव स्वे गृहे आहितेषु अग्निषु होमाः कर्त्तव्याः। तेषां अकरणे महान् दोषः स्मर्य्यते खलु। गरीयः खलु कर्त्तव्यानुष्ठानं स्नेहक्रमं वाधते इति भावः। हि यस्मात् आहिताः अग्नयो यैस्ते आहिताग्नयः पक्षे अग्न्याहिताः ( वाहिताग्न्यादिषु इति आहितशब्दस्य परनिपातः पाक्षिकः ) तेषां आहिताग्नीनां साग्निकानां गृहस्थता गृहस्थाश्रमः प्रत्यवायैः पापैः विहिताकरणजन्यपातकैः सङ्कटा सङ्कुला दुःखावस्थाना भवतीति शेषः पदे पदे प्रत्यवायस्य सम्भाव्यत्वात् साग्निकानां गृहस्थधर्म्माचरणं अनिष्टबहुलम् खलु। वैवाहिकस्य अनलस्य गृहे स्थापनं अग्न्याधानम्। अग्न्याधानं कृतवन्तः आहिताग्नयः। अनुष्ठाननित्यत्वात् इति पाठे गृहस्थता स्वातन्त्र्यं अपकर्षति इत्यन्वयः कार्य्यः। अनुष्ठाननित्यत्वात् इत्यत्र हेत्वर्थे पञ्चमी। प्रति + अव + इण् + घञ् = प्रत्यवाय। स्वः आत्मा

तन्त्रं प्रधानं यस्य स स्वतन्त्रः स्वतन्त्रस्य भावः स्वातन्त्र्यम्। गुणवचनब्राह्मणादित्वात् ष्यञ्। गृहे तिष्ठति यः सः गृहस्थः। सुपि स्थः इति कः। गृहस्थस्य भावः इति गृहस्थता। भावे तल् प्रत्ययः। आङ् पूर्व्वात् दधातेः क्तः आहितः। अप+कृष्+लट् ति अपकर्षति ; न्यूनतां आपादयति। प्रतिबध्नाति इति यावत्। अकार्क्षीत् अक्राक्षीत्, अकृक्षत् इति लुङि रूपम्। क्रक्ष्यति, कर्क्ष्यति इति लृटि रूपम्। क्रष्टा, कर्ष्टा इति लुटि रूपम्। सम्पूर्व्वात् कट धातोः अच् स्त्रियां टाप् सङ्कटा। विशेष्यनिघ्नोऽयं शब्दः। विशेष्यार्थे क्लीबोऽयं शब्दः। सङ्कटं नातु सम्बाधः गहनं कलिलं समे इत्यमरः।

सीता। बन्धव एव जनाः इति बन्धुजनाः तैः विप्रयोगाः विरहाः विच्छेदा इति यावत् इति बन्धुजनविप्रयोगाः। स्वजनवियोगाः। सन्तापं मनःक्लेशं कुर्व्वन्ति जनयन्ति इति सन्तापकारिणः। करोतेः णिनिः। क्लेशावहाः।

रामः। संसारस्य भावाः इति संसारभावाः। ससरणं संसारः, प्राण्युत्पादे संसरणम्। इत्यमरः। यद्वा संसरति अस्मिन् इति संसारः। असुष्ठितकर्म्मणां भोगाय यत्र पुनः पुनरावर्त्तनं भवति। तस्य संसारस्य भावाः अवस्थाः बन्धुजनैः वियोगाः इत्यर्थः। हृदयं चित्तं मर्म्म जीवस्थानानि च छिन्दन्ति ये ते हृदयमर्म्मच्छिदः यद्वा हृदयस्य मर्म्माणि छिन्दन्ति इति विग्रहः। सत्सूद्विषेत्यादिना क्विप्। अरुन्तुदाः नितरां मर्म्मपीडादायकाः इत्यर्थः। येभ्यः संसारभावेभ्यः वीभत्समानाः जुगुप्समानाः विरक्ताः इत्यर्थः मनीषिणः कृतधियः सर्व्वान् कामान् अभिलाषान् सन्त्यज्य विहाय अरण्ये वने विश्राम्यन्ति। संसारदुःखेभ्यः त्राणमिच्छन्तः कृतधियः वीतरागाः अरण्य आश्रयन्ते इत्यर्थः। येभ्यः इत्यत्र अपादाने पञ्चमी जुगुप्साविरामार्थानामुपसंख्यानात् अपादानत्वम्। "बधेश्चित्तविकारे" इति वार्त्तिकात् चित्तविकारेऽर्थे बधधातोः सन्। "गुपिप्रभृतयः किञ्चिन्ना निन्दाद्यर्थका एवानुदात्तेतः। एते नित्यं सन्नन्ताः। अर्थान्तरे त्वननुबन्धकाश्चुरादयः। अननुबन्धस्य केवलेऽचरितार्थत्वात् सन्नन्तात्तङ्। "गुपादिषु अनुबन्धकरणमात्मनेपदार्थम्" इति काशिका। मनसः ईषा इति मनीषा शकन्ध्वादित्वात् पररूपम्। मनीषा विद्यते येषां ते मनीषिणः।

रामः। उपचारः शब्दप्रयोगः इत्यर्थः। रामभद्र इति शब्दस्य प्रयोगः व्यवहार इत्यर्थः। तातस्य पितुर्दशरथस्य परिजनः अनुजीविजनः तस्य। कृद्योगलक्षणा कर्त्तरि षष्ठी। अभ्यस्तमनतिक्रम्य इति यथाभ्यस्तम्। अव्ययीभावः। वयोवृद्धः कञ्चुकी दशरथे वसुन्धरां पालयति कुमारं रामचन्द्रं रामभद्र इति सम्बोधनपदेन आकारयतिस्म। स एव अभ्यस्तः शब्दः मां प्रति प्रयोज्यः इति रामचन्द्रस्य आशयः। अभि+धा+भावे लोट् अभिधीयताम्।

कञ्चुकी। ऋष्यशृङ्गस्य मुनेः आश्रमात् तपोवनात् अष्टावक्रः नाम ऋषिः सम्प्राप्तः

आगत:। अष्टसु अवयवेषु वक्र: इति अष्टावक्र:। संज्ञायां दीर्घ:। अष्टन: संज्ञायाम् अष्टापदम्, अष्टावक्र:।

सीता। विलम्ब्यते। वि + लम्ब + भावे लट् = विलम्ब्यते।

राम:। त्वरितं शीघ्रम्। त्वरधातो: क्त: भावे। त्वरितम्। पक्षे तूर्णम्। कञ्चुक: अस्य अस्ति इति कञ्चुकी। A chamberlain. कञ्चुकी वारवाणोऽस्त्री इत्यमर:। Literally a servant wearing a uniform; (here a coat or cloak). He is an attendant on the women's apartments. "अन्त:पुरचरो वृद्धो विप्रोगुणगणान्वित:। सर्व्वकार्य्यार्थकुशल: कञ्चुकीत्यभिधीयते"। अन्त:पुरेत्वधिकृत: स्यादन्तर्वंशिकोजन:। सौविदल्ला कञ्चुकिन: स्थापत्या: सौविदाश्च ते। इत्यमर:।

[ তাহার পর আসনে উপবিষ্ট রামচন্দ্র ও সীতার প্রবেশ ]

রাম। দেবী, বৈদেহি, সমাশ্বস্ত হও। মাননীয় গুরুজন আমাদিগকে পরিত্যাগ করিতে পারেন না।

কিন্তু নিত্যকর্ত্তব্য অনুষ্ঠানগুলি (তাঁহাদিগের) স্বাধীনতার সঙ্কোচ বিধান করিয়া থাকে। যে হেতু আহিতাগ্নিদিগের গৃহস্থধর্ম্মাচরণ নানারূপ প্রত্যবায়হেতু সঙ্কটপূর্ণ। ॥৮॥

সীতা। আর্য্যপুত্র, ইহা আমি জানি; কিন্তু বন্ধুজনের সহিত বিয়োগ সন্তাপ উৎপাদন করিয়া থাকে।

রাম। ইহা ঠিক বটে। এই সকল সাংসারিক অবস্থা হৃদয় ও মর্ম্মাস্থানকে নির্ভিন্ন করে। এই হেতু মনীষিগণ এই সাংসারিক ভাবের প্রতি ঘৃণা পোষণ করিয়া অরণ্যে বিশ্রাম লাভ করেন।

কঞ্চুকী। [ প্রবেশ করিয়া ] রামভদ্র। [ অর্দ্ধ উচ্চারণ করিয়া সভয়ে ] মহারাজ।

রাম। [ ঈষৎ হাস্য করিয়া ] মহাশয়! পিতার পরিজনগণ আমার প্রতি রামভদ্র এইরূপ শব্দপ্রয়োগ করেন ইহাই শোভা পায়। আপনার যেরূপ বলার অভ্যাস সেইরূপই বলিবেন।

কঞ্চুকী। দেব, ঋষ্যশৃঙ্গের আশ্রম হইতে অষ্টাবক্র আসিয়াছেন।

সীতা। মহাশয়, তবে বিলম্ব করিতেছেন কেন?

রাম। শীঘ্র তাঁহাকে প্রবিষ্ট করুন।

[ কঞ্চুকী নিষ্ক্রান্ত ]

[ *Then enter Rama seated on a seat and Sita.* ]

*Rama* :—Cheer up ; ( or be consoled ), queen, daughter of the king of Videha, your venerable father cannot leave us—

But the obligatory nature of the rites to be performed ( daily) takes off (his) freedom. The observance of the duties of a house-

holder in the case of those who maintain and consecrate the sacred fire perpetually is beset with difficulties on account of ( the possibility of ) incurring sins ( of omission). (8)

*Sita* :—I know it, my husband, I know it. But partings from kinsmen do cause pangs of sorrow.

*Rama* :—It is quite true. And indeed these worldly incidents cut the very vital parts of the heart ; and the wise, disgusted with these ( painful) incidents, give up all objects of desire and take rest by resorting to the forest.

[*Enter Chamberlain.* ]

*Chamberlain* :—Ramabhadra ; [ *Half finishing, with fear.* ] Great king !

*Rama* :—[ *With a smile*]. Venerable Sir, indeed it becomes very well the attendants of my father to use this mode of address, *viz.* Ramabhadra towards me. Therefore speak just as you have been accustomed to do.

*Chamberlain* :—Astabakara has come, my lord, from the hermitage of Rishyasringa,

*Sita* :—Good Sir, why then make delay ( in entering him ) ?

*Rama* :—Introduce him quickly.

[ *Exit Chamberlain.* ]

अष्टावक्र:। वाम् युवाभ्याम् स्वस्ति क्षेमं अस्तु इति शेष:। नम:स्वस्तिस्वाहास्वधालंवषड्योगाच्च इति चतुर्थी। स्वस्ति इत्यव्ययम्। स्वस्त्याशी:क्षेमपुण्यादौ इत्यमर:।

राम:। अभिवादये नमस्करोमि। अभि + वद (णिच्) + लट् ए = अभिवादये णिचश्च इति कर्त्तृगेफले आत्मनेपदम। आस्यताम् उपविश्यताम्। आस उपवेशने इत्यस्मात भावे लोट्। प्रार्थनायां लोट्।

सीता। जामाता ऋष्यशृङ्गेण सह वर्त्तमान: इति सजामातृक:। नद्यृतश्चेति समासान्त: क: तस्य। गुरुश्चासौ जनश्चेति गुरुजन: तस्य। आर्य्याया: मान्याया: पत्युर्ज्येष्ठाभगिनी अतो मान्या इति भाव:। ऋ + ण्यत् ( स्त्रियां टाप् ) = आर्य्या।

राम:। नास्ति विघ्न: अन्तराय: ( यज्ञस्य इत्यर्थ: ) यस्य स: निर्व्विघ्न:। विहन्यते अनेन इति विघ्न:। घञर्थे क:। वि + हन् + क। सोमस्य पीथं पानं इति सोमपीथं स विद्यते अस्य इति सोमपीथी। अस्त्यर्थे इनि:। "पातृतुदिवचिरिचिसिचिभ्यस्थक" इति पिवते: थक्। पीथो रविर्घृतं पीथम्। सोमपीती इति पाठे

पीतमनेन इति पीती। इष्टादिभ्यश्चेति इनि:। सोमे पीती इति सोमपीती। क्तस्येन्-विषयस्य इति सप्तम्या समास:। आवुत्तो: भगिनीपति:। भगिनीपति रावुत्त: इत्यमर:।

अष्टा। कुलस्य इक्ष्वाकुवंशस्य गुरु: इति कुलगुरु: भगवान् षडैश्वर्य्यशाली वशिष्ठ स्त्वामिदमाह ब्रूते सम्मुखेनेति शेष:। अयं एषां अतिशयेन वशी इति वशिष्ठ:। इष्ठन् प्रत्यय:। वश आयत्ततायां। तस्मादिनि: इति वशी। ब्रुव:पञ्चानामादित: इति लटि आहादेश:।

विश्वम्भरेति। भगवती विश्वम्भरा भवतीं असूत। प्रजापतिसम: राजा जनक: ते पिता। हे नन्दिनि, त्वं तेषां पार्थिवानां वधू: असि येषां कुलेषु सविता गुरु: वयं च गुरव: इति शेष:॥ ९॥

भगवती विश्वम्भरा, देवी भूतधात्री वसुन्धरा भवतीं त्वां असूत अजनयत्। प्रजापतिना वेधसा सम: तुल्य: विधातृप्रतिम: राजा जनक: राजर्षि मैथिल: ते तव पिता। अयि नन्दिनि वत्से त्वं तेषां पार्थिवानां पृथ्वीश्वराणां वधू: स्नुषा येषां राज्ञां कुलेषु गृहेषु सविता सूर्य्य: गुरु: येषां नृपाणां वंशस्य प्रवर्त्तयिता देव: स्वयं भास्कर:, वयञ्च गुरव: वयं येषां राज्ञां उपदेष्टार: आचार्य्या:। उत्पन्ना या परिपूता, यस्याश्च श्वशुरकुलं अतिपवित्रमुन्नतञ्च तस्या: सम्बन्धे किमाशंसनीयं भवेत्, न किमपीत्यर्थ:।

विश्वं विभर्त्ति धारयति या सा विश्वम्भरा संज्ञायां भृतृवृजिधारिसहितपिदम: इति खच्। तत: स्त्रियां टाप्। अरुर्द्विषदजन्तस्य इति मुम्। नन्दयति प्रीणयति या सा नन्दिनी नन्दयते: णिनि: स्त्रियां ङीप्। तत् सम्बोधने। ग्रहादित्वात् णिनि:। कुलं जनपदे गोत्रे सजातीयगणेऽपिच भवने च तनौ क्लीवम् इति मेदिनी पृथिव्या: ईश्वरा: इति पार्थिवा:। पृथिवी शब्दादण्। पृथु + षीवन् (स्त्रियां ङीष्) = पृथिवी। सूते इति सविता। सूङ: तृच्। अस्मिन् श्लोके वसन्ततिलकं वृत्तम्। तल्लक्षणं यथा ज्ञेयं वसन्ततिलकं तभजाजगौग:।

आशास्महे प्रार्थयामहे। आङ्पूर्व्वयो: शासिशंसत्योरिच्छायामात्मनेपदम्। प्रसूयते इति प्रसव: अपत्यम् ऋदोरप् इति अप्। वीर: प्रसव: यस्या: सा वीर-प्रसवा। वीरो प्रसवो यस्या: सा वीरप्रसवा इति वा विग्रह:, प्रक्रतानुरोधात्। भूया: भवतेराशिषि लिङ्।

राम:। अनुगृहीता: अनुकम्पिता: स्म: भवाम:। अनु + ग्रह् + क्त (कर्म्मणि) = अनुगृहीत। गृह्णाति; जग्राह; अग्रहीत्।

लौकिकानामिति—लौकिकानां साधूनां वाक् अर्थं अनुवर्त्तते। आद्यानां ऋषीणां पुन: वाचं अर्थ: अनुधावति॥ १०॥

लोके प्रसिद्धा विदिता वा इति लौकिकाः तेषां लौकिकानां साधूनां सच्चरितानां महात्मनां वाक् अर्थं वस्तु अनुवर्त्तते अनुसरति। लोकव्यवहारनिष्णाताः अविद्यापथवर्त्तिनो महापुरुषाः कार्य्यकारणसम्बन्धादिकमालोच्य वस्तुगतिञ्च विमृश्य तदनुरोधात् वाचं प्रयुञ्जते। पुराणाः ऋषयस्तुनैवमित्याह—आद्यानामिति आदौ भवाः आद्याः पुराणाः ब्रह्मणो मानसपुत्राः इत्यर्थः तेषां आद्यानां ऋषीणां वशिष्ठप्रमुखानां कालत्रयदर्शिनां लोकोत्तरज्ञानसम्पन्नानां तपोधनानां पुनः किन्तु, पुनस्त्वर्थे ; वाचं अर्थः वस्तु अनुधावति अनुसरति। लोकदृष्ट्या असम्भाव्योऽपि अर्थ स्तैर्लापसैरनुज्ञातः सम्भाव्यतामेति इत्यर्थः। तेषां वाक् कदापि न विफला भवतीति भावः। Cf. नहीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम्। अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु इत्यमरः। लोक + ठञ् = लौकिक। अनु + वृत् + लट् ते = अनुवर्त्तते। लुङि, अवृतत्,अवर्त्तिष्ट। लृटि वर्त्तिष्यते ; वर्त्स्यति। आदि + यत् = आद्य। ऋष् + इन् (सर्व्वधातुभ्यः इन्, इगुपधात् कित् गुणाभावात्) ऋषिः। ऋषति, आनर्ष, आर्षीत्। पुरा भवाः इति पुराणाः। पुरा इत्यव्ययात् ट्युल्। निपातनात् न तुट्। तुडागमे पुरातनाः इतिरूपम्।

अष्टावक्रः। भूयोभूयः पुनः पुनः आभीक्ष्ण्ये द्विरुक्तिः। सन्दिष्टम् उक्तम्। आज्ञप्तमित्यर्थः। दोहम् आकर्षं इच्छाविशेषमित्यर्थः ददाति उत्पादयति इत्यर्थः इति दोहदं गर्भिणीमनोरथः अथ दोहदं इच्छा काङ्क्षा स्पृहेहा इत्यमरः। तत्र महेश्वरः गर्भिण्यिच्छायामिच्छामात्रेऽपिदोहदम्। दोहदशब्देनैव सिद्धे अर्थे विशेषार्थं गर्भशब्दः प्रयुक्तः। गर्भे लक्षणया गर्भसमये दोहदः इति गर्भदोहदः। अमरेण दोहदशब्दस्य क्लीवत्वमुक्तम्। अन्यैः पुंनपुंसकत्वमस्य अङ्गीकृतम्। Professor Max Muller was inclined to derive the word दोहद from दौर्हृद। In his opinion दोहद is a prakrita form of the word दौहृद which means pregnancy and the prakrita form has become naturalised in Sanskrit. अचिरात् अविलम्बेन, झटिति इत्यर्थः सम्पादयितव्यः पूरयितव्यः। अचिरादित्यव्ययम्।

रामः। यद् यद् दोहदम् इत्यर्थः। यद्येषा इति पाठे, शालीनत्वात् इयं सीता आत्मनः इच्छां न प्रकाशयति, यदि प्रकटयति तदा सोऽभिलाषः अस्माभिः पूर्य्यते इत्यर्थः।

अष्टा। कठोरः पूर्णः गर्भः यस्याः सा कठोरगर्भा। इति हेतोः न आनीता, अवयस्क न अस्मदीयं आश्रममासादिता। तव विनोदनम् इति त्वद्विनोदनम्। त्वच्चित्तरञ्जनम्। तस्मै इदम् इति त्वद्विनोदनार्थम्। अर्थेन सह नित्यसमासः सर्व्वलिङ्गता च। यद्वा त्वद्विनोदनमेव अर्थः प्रयोजनं यस्मिन् कर्म्मणि तद् यथा तथा इति त्वद्विनोदनार्थम्। स्थापितः अयोध्यायां रक्षितः। नानीतः इत्यर्थः। पुत्रेण

( पुत्राभ्यामिति प्रकृतानुरोधात् ) पूर्णः इति पुत्रपूर्णः पुत्रपूर्णः तनयालङ्कृतः इत्यर्थः । उत्सङ्गः क्रोड़ः यस्याः सा पुत्रपूर्णोत्सङ्गा ताम् आयुष्मतीं कल्याणिनीं द्रक्ष्यामि ईक्षिष्ये।

अष्टा । श्रूयताम् इति श्रृणोते भावे लोट् ।

जामात्रिति—वयं जामातृयज्ञेन निरुद्धाः त्वं बाल एव असि, राज्यञ्च नवम् । तस्मात् प्रजानां अनुरञ्जने युक्तः स्याः । यत् यशः वः परमं धनम् ॥ ११ ॥

वयं जामातुः ऋष्यशृङ्गस्य यज्ञेन द्वादशवार्षिकेण सत्रेण निरुद्धाः साकेतं प्रति व्याहतगतयः । न वयं अस्मात् स्थानात् प्रतिनिवर्त्तितुं शक्नुमः । अस्मद् विना त्वया एकाकिना एव राज्यं पालयितव्यम् । किन्तु त्वं बालः अपरिणतवयाः एव ; बुद्धेः परिपाकाभावात् दुर्व्बोधं नयवर्त्म कथं वेदिष्यसि इति विचिन्त्य सत्यमाकुलोऽस्मि इत्यर्थः । राज्यञ्च नवम् इदानीमेव त्वं राज्ये अभिषिक्तोऽसि न दृढ़प्रतिष्ठितोऽसि इत्यर्थः । अविमृष्यकरणे प्रकृतयो विकुर्व्वीरन् इति भावः । तस्मात् हेतोः प्रजानां प्रकृतीनां अनुरञ्जने चित्ततोषणे युक्तः अभिनिवेशवान् स्याः भवेः । सर्व्वप्रयत्नेन प्रकृतीनामनुरञ्जनं कर्त्तव्यम् । यत् यस्मात् यशः प्रजारञ्जनलब्धप्रशस्तिः वः युष्माकं इक्ष्वाकूणां परमं धनम् ईहितं वस्तु । उक्तञ्चान्यैः अपि स्वदेहात् किमुतेन्द्रियार्थात् यशोधनानां हि यशोगरीयः । प्रजानां तोषणाय तासां चित्तवृत्तिःसर्व्वथा अनुवर्त्तितव्या इतिभावः । युक्तः युक्तचित्तः इत्यर्थः । विभक्ताः भ्रातरः भुक्ताः ब्राह्मणाः इत्यादि-वदत्र उत्तरपदलोपो द्रष्टव्यः । यद्वा युक्तमिति नपुंसके भावे क्तः । तदस्यास्तीति अर्शआदित्वादच् । इन्द्रवज्रावृत्तम् । तल्लक्षणम्—स्यादिन्द्रवज्रा यदि तौ जगौ गः। नि + रुध् + (कर्म्मणि) क्त = निरुद्ध । यज् + न = यज्ञ । नु + अप् = नव । नौति, नुनाव, अनावीत् । यजति, यजते ; इयाज ईजे ; अयाक्षीत्, अयष्ट । रुणद्धि, रुन्धे ; रुरोध, रुरुधे, अरुधत्, अरौत्सीत्, अरुद्ध । अनु + रञ्ज(णिच) + ल्युट् = अनुरञ्जन । रञ्ज —रजति, रजते ; रज्यति, रज्यते ; ररञ्ज, ररञ्जे ; अराङ्क्षीत् अरङ्क्त । णिचि ; रजयति ( आखेटकेऽर्थे, मृगयार्थे ) ; रञ्जयति तोषयति इत्यर्थे ।

रामः । मित्रश्च वरुणश्च तौ मित्रावरुणौ देवताद्वन्द्वे च इत्यानङ् । मित्र-वरुणयोरपत्यं पुमान् इति मैत्रावरुणिः । अतः इञ् इति अपत्यार्थे इञ् प्रत्ययः । अत्र विष्णुपुराणम् । "प्रतिबुद्धश्चासाववनीपतिरपि प्राह, यस्मान्मामसंभाष्य अज्ञानत एव शयानस्य शापीत्सर्गमसौ दुष्टगुरुश्चकार तस्मात् तस्यापि देहः पतितो भविष्यतीति प्रतिशापं दत्त्वा देहमत्यजत् । तस्माच्छापाच्च मित्रावरुणयोस्तेजसि वशिष्ठतेजः प्रविष्टम् उर्व्वशीदर्शनादुद्भूतवीर्य्यप्रपातयोः सकाशात् वशिष्ठो देहमपरं लेभे ।" वशिष्ठस्य मैत्रावरुणिसंज्ञायाः प्रवृत्तिनिमित्तमिदम् । अवनीपति in the extract refers to निमि the ancestor of Janaka.

स्नेहमिति—लोकानां आराधनाय स्नेहं, दयां तथा सौख्यं यदिवा जानकीं अपि मुञ्चतः मे व्यथा नास्ति ॥ १२ ॥

लोकानां जनानां आराधनाय तोषणाय लोकान् आराधयितुमित्यर्थः तुमर्थाच्च भाववचनादिति चतुर्थी ; तादर्थ्ये वा ; स्नेहं प्रीत्यास्पदे जने चित्तस्य प्रवणायितम्, दयां करुणां भूतेषु अनुकम्पामित्यर्थः, तथा सौख्यं सुखप्रवाहं, आत्मनः अविच्छिन्नसुख-धारामित्यर्थः। यदिवा, जानकीं अपि प्राणेभ्योऽपि गरीयसीं सीतामपि मुञ्चतः परित्यजतः मे व्यथा सन्तापः क्लेशः नास्ति। स्नेहादीनां कथा तावदास्तां सीतायाः अपि परित्यागेन लोकान् प्रीणयितुमहमुत्सहे। सुखमेव सौख्यं स्वार्थे ष्यञ्। दय् धातोः भावे अः = दया। व्यथधातोः भिदादित्वादङ् व्यथा। व्यथते, विव्यथे, अव्यथिष्ट। व्यथमानः, व्यथितः।

सीता। राघवेषु रघुवंशीयेषु धुरन्धरः श्रेष्ठः इति राघवधुरन्धरः। सप्तमी समासः। धुरं धरति इति धुरन्धरः धरतेः खच् निपातनात् सिद्धमिदं पदम्। खच् प्रत्ययः मुमागमश्च निपात्यते। राघवाणां धूः इति विग्रहे तु राघवधुरा इति पदं स्यात्।

रामः। वि + श्रम् ( णिच् ) + कर्म्मणि लोट् विश्राम्यताम्। वा चित्तविरागे इत्यतो वा इत्यस्य अनुवर्त्तनेन, तस्य च व्यवस्थितविभाषाश्रयणात् विश्रामयति, विश्र-मयति इति रूपसिद्धिः।

अष्टावक्रः। परिक्रम्य लोकमन्तरं गत्वा। निष्क्रान्तः निर्गतः। क्रमेः कर्त्तरि क्तः।

অষ্টাবক্র। [ প্রবেশ করিয়া ] আপনাদিগের মঙ্গল হউক।

রাম। ভগবন্, আপনাকে প্রণাম করি, এই স্থানে উপবেশন করুন।

সীতা। ভগবন্, আপনাকে প্রণাম করি। জামাতৃসহিত গুরুজনের ও আর্য্যা শান্তার মঙ্গল ত ?

রাম। আমার ভগিনীপতি সোমরসপায়ী ভগবান্ ঋষ্যশৃঙ্গ ও আর্য্যা শান্তা নির্ব্বিঘ্নে আছেন ত ?

সীতা। আমাদিগকে স্মরণ করেন ত ?

অষ্টাবক্র। [ উপবেশন করিয়া ] হাঁ। দেবি, কুলগুরু বশিষ্ঠ তোমাকে এই কথা বলিয়া পাঠাইয়াছেন—

ভগবতী বিশ্বম্ভরা তোমাকে প্রসব করিয়াছেন। প্রজাপতিতুল্য রাজর্ষি জনক তোমার পিতা ; বৎসে তুমি সেই নৃপতিগণের বধূ, যাঁহাদিগের বংশের আদি গুরু সবিতা এবং আমরাও যাঁহাদিগের কুলগুরু। তোমার সম্বন্ধে অন্য আর কি আশীর্ব্বাদ করিব। কেবল ( এই আশীর্ব্বাদ করি ) যে তুমি বীরপ্রসবিনী হও ॥ ৯ ॥

রাম। অনুগৃহীত হইলাম।

লৌকিক সাধুদিগের বাক্য বিষয়ের বা ঘটনাচক্রের অনুবর্ত্তন করিয়া থাকে। কিন্তু ঘটনাসমূহ আদ্যঋষিদিগের বাক্যেরই অনুসরণ করিয়া থাকে ॥ ১০ ॥

অষ্টাবক্র। ভগবতী অরুন্ধতী, বৃদ্ধরাজ্ঞীগণ ও শান্তা ভূয়োভূয়ঃ বলিয়া পাঠাইয়াছেন যে জানকীর যে কোন গর্ভিণীমনোরথ হইবে, তাহা যেন অবিলম্বে অবশ্য সম্পাদিত হয়।

রাম। ইনি যাহা যাহা বলেন তাহা সম্পাদিত হইয়া থাকে।

অষ্টাবক্র। দেবীর ননান্দৃপতি ঋষ্যশৃঙ্গ দেবীকে বলিয়া পাঠাইয়াছেন। বৎসে, তুমি পূর্ণগর্ভা এই হেতু তোমাকে এস্থানে আনয়ন করা হয় নাই। বৎস রামচন্দ্রকেও তোমার চিত্তবিনোদনার্থে অযোধ্যায় রাখা হইয়াছে। সন্তান তোমার ক্রোড়দেশ পূর্ণ করিবে সেই অবস্থায় তোমাকে দেখিব।

রাম। [ আহ্লাদে ঈষৎ হাস্য করিয়া ] তাহাই হউক। ভগবান্ বশিষ্ঠ আমার প্রতি কোন আদেশ করেন নাই কি ?

অষ্টাবক্র। শ্রবণ করুন।

"আমরা জামাতার যজ্ঞে আবদ্ধ রহিয়াছি, তুমি বালক, রাজ্য নূতন, ( সম্প্রতি লব্ধ )। অতএব প্রজাদিগের অনুরঞ্জনার্থে মনোভিনিবেশ করিবে ; যেহেতু যশঃই তোমাদিগের পরম ধন ॥ ১১ ॥

রাম। ভগবান্ মৈত্রাবরুণি যেরূপ আদেশ করিয়াছেন। প্রজাদিগের সন্তোষ-বিধানার্থে, স্নেহ, দয়া, সুখ অথবা এমন কি জানকীকেও পরিত্যাগ করিলে আমার কোন ব্যথা বা ক্লেশ হইবে না ॥ ১২ ॥

সীতা। এই জন্যই আর্য্যপুত্র রাঘবদিগের ধুরন্ধর।

রাম। এখানে কে আছ ! ভগবান্ অষ্টাবক্রের বিশ্রামের ব্যবস্থা কর।

অষ্টাবক্র। [ উত্থান করিয়া, ও কয়েক পদ গমন করিয়া ] এই যে কুমার লক্ষ্মণ আসিতেছে। [ নিষ্ক্রান্ত ]।

[ *Enter Astavakra.* )

*Astavakra* :—May it be well with you both ?

*Rama* :—Holy Sir, I bow to you ; please, be seated here.

*Sita* :—Holy sir, I salute you, is it all well with my revered superiors ( the queen-mothers ), together with their son-in-law, as also with the honoured Santa ?

*Rama* :—Is my brother-in-law, the holy Rishyasringa, who drinks the soma-juice, faring well ; as also the revered Santa ?

*Sita* :—Do they remember us ?

*Astavakra* :—[*Taking his seat.*] Yes ; queen, the holy Vasistha, the spiritual guide of the family ( of Raghu ), says this to you ;—

The goddess Earth, who supports the universe, brought thee forth ; the king Janaka, (almost) equal to the Creator, is thy father,

and thou art, Oh my daughter, the daughter-in-law of those kings of whose race the Sun is the progenitor and ourselves the spiritual guide. What else can we pray for thee, then, than this that thou mayest have heroes as thy sons ? (9),

*Rama* :—We are highly favoured.

The speech of righteous men having secular pursuits does but follow the actual state of things ; while it is the state of things that conforms itself to the speech of the primeval saints. (10).

*Astavakra* :—The holy Arundhati, the queen-mothers, and Santa have again and again directed that whatever hankering incident to pregnancy she may have must be satisfied without delay.

*Rama* :—All that she says is being done.

*Astavakra* :- Rishyasringa, the husband of the sister-in-law of the queen, has sent this message to the queen—"As thou art, my child, in an advanced state of pregnancy, thou hast not been brought here, and the dear boy Ramabhadra, too, has been left there for thy diversion. Therefore I wish to see thee with a son on thy lap."

*Rama* :-[*With a smile of joy.*] May it be so. Has not the holy Vasistha left any orders for me ?

*Astavakra* :—Listen :—

"We are being detained here in the sacrifice of the son-in-law ; you are but a boy ; the kingdom has but recently been acquired ; therefore you should direct your attention to pleasing the people ; for, fame is but the supreme treasure of your race" (11).

*Rama* :—As the holy Maitravaruni says :—

I shall feel no pain, if I have to give up affection, mercy or kindness, the happiness of life, or (if necessary) even the daughter of Janaka, for pleasing the people. (12

*Sita* :—And hence it is that my lord is the chief of Raghu's race.

*Rama* :—Ho ! Who is there ? Let the holy Astavakra have rest.

*Astavakra* :—[*Rising up and walking a few paces*] Oh ! The Prince Lakshmana is come. [*Exit.*]

लक्ष्मणः । (प्रविश्य) चित्रं करोमि इति चित्रकरः । दिवा विभानिशीत्यादिना क्रजः टः । चित्रकरः आलेख्यविरचनपटुः पुरुषः । अस्माभिः उपदिष्टं वर्णितं आर्यस्य पूज्यस्य भवतः चरितम् कथा, विक्रमोदाहरणम् इत्यर्थः अस्यां वीथिकायां

चित्रसनाथे गृहाङ्गे, चित्रमयपङ्क्तौ अभिलिखितं अङ्कितम्। आर्य्यं तच्चित्रं विलोकयतु। वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः इति मेदिनी।

'अत्र वीथीशब्दः गृहाङ्गवचनः कस्यचिद्गृहस्य एकदेशे रामस्य चरितानि गृहभित्तौ लिखितानि। कालिदासः स्वकाव्ये रघुवंशे एवमुक्तवान्—तयोर्यथाप्रार्थित मिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु। प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन्। इमं श्लोकं मल्लिनाथः एवं व्याख्यातवान् चित्रवत्सु वनवासवृत्तान्तालेख्यवत्सु सद्मसु इति। गृहभित्तौ आलेख्यार्पणं (चित्राङ्कनमित्यर्थः) प्राचीनरीत्यनुगतम् वीथीशब्दस्य चित्रफलकरूपः अर्थः अनाकरः।

रामः। दुर्मनायमानां पितृवियोगेन अन्तप्यमानहृदयां देवीं सीतां विनोदयितुं परिसान्त्वयितुम्। कौतूहलोद्दीपनेन अस्याः शोकं निरस्य चित्तप्रसादं जनयितुमित्यर्थः। दुःखितं मनोयस्याः सा दुर्मनाः। सा इव आचरति इति दुर्मनायते। "कर्त्तुः क्यङ् सलोपश्च उपमान कर्त्तृभूतात् दुर्मनः शब्दात् आचारेऽर्थे क्यङ् प्रत्ययः। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः। स च व्यवस्थितः। ओजसोऽप्सरसो नित्यमितरेषां विभाषया।" "ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया। सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः। "इतरेषां विभाषया" इति वचनेन, दुर्मनायते दुर्मनस्यते इति रूपद्वयं सम्भवति।

दुर्मनस् + क्यङ् = दुर्मन + य = दुर्मना + य ( अकृत्सार्व्वधातुकयोरिति दीर्घः। The verbal base is दुर्मनाय as क्यङ् has an indicatory ङ, it is conjugated in the आत्मनेपद। वि + नुद + णिच् + तुमुन् = विनोदयितुम्। अस्मच्चरितं यदत्र वीथिकायां लिखितं तस्य चरितस्य कीदृशः पर्य्यन्तः। कानाम सीमा। अवधिः सीमा। अवधिस्त्ववधाने स्यात् सीम्निकाले बिले पुमानिति मेदिनी। अवधिमिति यावद्‌योगे द्वितीया। वीथीशब्दात् संज्ञायां क प्रत्ययः। केऽणः इति ह्रस्वत्वे स्त्रियां टापि वीथिका।

लक्ष्मणः। हुतं अशनं यस्य स हुताशनः अनलः। तत्र हुताशने अनले विशुद्धि चारित्रशुद्धिपरीक्षणमित्यर्थः। विशुद्धिरिति कर्त्तृपदमभवदिति क्रियापदेन गम्यमानेन अन्वेति अतएव यावद्‌योगे न द्वितीया। उपपदविभक्तेः कारकविभक्तिर्बलीयसी इति न्यायात्।

रामः। शान्तं, पापं निवारितमस्तु इत्यर्थः। शान्तमित्यव्ययम्।

शान्तोऽभियुक्तरसयोः पुंसि त्रिषु शमान्विते।
अव्ययं वारणे शान्तं इति मेदिनी॥

अन्वयः। उत्पत्तिपरिपूतायाः अस्याः पावनान्तरैः किम्; तीर्थोदकं च वह्निश्च अन्यतः शुद्धिं न अर्हतः॥ १३॥

उत्पत्त्या जन्मना परिपूता पवित्रा इति उत्पत्तिपरिपूता तस्याः जन्मनैव विशुद्धायाः

अस्याः सीतायाः अन्यानि वह्न्यादीनि पावनानि पवित्रीकरणसमर्थानि द्रव्याणि इति पावनान्तराणि मयूरव्यंसकादयश्चेति निपातनात् समासः तैः किम् किम् प्रयोजनमस्ति। न तैः किञ्चित् साध्यमस्तीत्यर्थः। गम्यमानसाधनक्रियापेक्षया करणत्वात् तृतीया। या खलु अयोनिजा जन्मनैव पवित्रा तस्याः विशुद्धिनिर्णयार्थं अन्यैः पावनद्रव्यैः किमपि प्रयोजनं नास्ति। दृष्टान्तेन इममेवार्थं द्रढयति तीर्थेति तीर्थस्य उदकं पुण्यक्षेत्रोदकं गङ्गाजलादिकं यद्वा तीर्थमेव उदकं ऋषिजुष्टाम्बु, वह्निः अनलश्च अन्यतः अन्यस्मात् पदार्थान्तरादित्यर्थः शुद्धिं न अर्हतः। न अपेक्षेते इत्यर्थः। वस्तुद्वयानुरोधेन द्विवचनम्, एकवचनमपि सम्भवति। स्वयं विशुद्धः अग्निः गङ्गाजलञ्च यथा पावित्र्यात् अन्येषां पदार्थानां विशोधकम्। अन्यः पदार्थस्तु अनयोर्विशुद्धिजनने अक्षमत्वादनावश्यकः तथा सीतायाः संसर्गात् अन्ये पवित्रतां लभन्ते स्वतःसिद्धविशुद्धेरस्याः वह्न्यादिना विशुद्धिसम्पादनप्रयासः अपार्थक एव। गङ्गाजलवह्निवदविशुद्धा सीता इति भावः। पूञः क्तः पूतः; पक्षे पवितः। तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसुच। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु इति मेदिनी। योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि इति हलायुधः।

देवानां यजनं पूजनं यस्मिन् स्थाने तत् देवयजनं तस्मात् सम्भवः उत्पत्तिः यस्याः सा देवयजनसम्भवा, यज्ञभूमिसमुत्पन्ना। व्यधिकरणो बहुव्रीहिः। यद्वा देवयजनं सम्भवः उत्पत्तिस्थानं यस्याः सा देवयजनसम्भवा। अत्र रामायणम्—

मिथिलाधिपतिर्वीरो जनको नाम धर्मवित्।
स्वकर्मण्यभिरतो न्यायतः शास्ति मेदिनीम्॥
तस्य लाङ्गलहस्तस्य कर्षतः क्षेत्रमण्डलम्।
अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता॥

जीवितं प्राणाः अवधिर्यस्य स जीवितावधिः यावज्जीवनमित्यर्थः। प्रवादः लोकवादः निन्दा इत्यर्थः। यावत्तव देहे प्राणाः स्थास्यन्ति तावदयं लोकवादश्चरिष्यति इत्यर्थः। यद्वा ते इत्यत्र शेषे षष्ठी प्रवादः इत्यनेन सम्बन्धः। जीवितं प्राणाः लोकानामिति शेषः अवधिर्यस्य स जीवितावधिः। यावदिह जगति लोकसृष्टिः तावदियं कथा भवत्सम्बन्धिनी लोके प्रचरिष्यति इत्यर्थः। प्रसीद, प्रसन्ना भव मर्षय मे दोषम्। मत्परुषोक्तिनिबन्धनोऽयं प्रवादो यत अतोऽहं त्वां क्षामये।

अन्वयः। कुलधनैः जनः अनुरञ्जनीयः कष्टम्। तत् यत् नः अशिवं उक्तं तत् ते क्षमं न हि। सुरभिणः कुसुमस्य मूर्ध्नि स्थितिः नैसर्गिकी सिद्धा, चरणैः अवताडनानि न सिद्धानीति शेषः॥ १४॥

कुलं धनं येषां ते कुलधनाः कुलक्रमागतायाः रीतेः कीर्त्तेश्च पालने नियतं निरतचित्ताः तैः अस्माभिः जनः कृत्स्न एव लोकः अनुरञ्जनीयः तोषणीयः, सर्व्वस्यैव

जनसङ्घस्य चित्तानुवर्त्तनं कर्त्तव्यम्। कष्टम्; अतिगहनत्वात् कृच्छ्रसाध्यं खलु इदं कर्म्म। कृच्छ्रगहनयोः कषः इति कृच्छ्रार्थे निष्ठायामिड़भावः। कष्टो जनः इति पाठे तु कष्टोजनः दुष्टोऽपि लोकः तोषयितव्यः इति व्याख्येयम्। तत् तस्मात् हेतोः लोकानुरञ्जनार्थं इत्यर्थः नोऽस्माकं यत् अशिवं अशुभं उक्तम् वचनम्,— प्राप्तचारित्रसन्देहा मम प्रतिमुखे स्थिता। दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढ़म्॥ तद्गच्छ त्वमनुज्ञाता यथेष्टं जनकात्मजे। एता दशदिशो भद्रे कार्य्यमस्ति न मे त्वया॥ इत्यादि वाक्यम् तत् ते तव न क्षमं न योग्यं युक्ते क्षमं शक्ते हिते त्रिषु इत्यमरः। पूर्व्वोक्तरूपस्य परुषवाक्यस्य सर्व्वथा अनर्हा असि। एतदेव समर्थयमानः दृष्टान्तमुपन्यस्यति—नैसर्गिकीति सुरभिणः सुगन्धिनः कुसुमस्य मूर्द्ध्नि शिरसि स्थितिरवस्थानं निसर्गात् स्वभावात् प्राप्ता इति नैसर्गिकी स्वाभाविकी सिद्धा लोके प्रसिद्धा खलु। चरणैः पादैः अवताडनानि अवमर्द्दनानि न नैसर्गिकाणि। लोकः सुरभि प्रसूनं सादरं शिरसि निवेशयति नतु पद्भ्यां अवस्कन्दति। प्रियार्हा खलु त्वादृशी गुणवती भार्य्या; अवधीरणायाः सर्व्वथा अयोग्या इत्यर्थः। दृष्टान्तालङ्कारः। वसन्ततिलकं वृत्तम्। लक्षणमुक्तम्। अनुपूर्व्वात् रञ्जधातोर्ण्यन्तात् अनीयर्। अनुरञ्जनीयः। उक्तमिति नपुंसके भावे क्तः। तद्योगात् नः इत्यत्र कर्त्तरि षष्ठी पाक्षिकी। क्षमते इति क्षमं पचाद्यच् इति अच्। नि+सृज्+घञ्=निसर्ग। निसर्ग+ठक्=नैसर्गिक। ततः स्त्रियां ङीप्। अव पूर्व्वात् ताड़यतेः ल्युट्=अवताड़नम्। मुह्यति अस्मिन् आहते इति मूर्द्धा। श्वन्नुक्षन् इत्यादिना मुहेः कनिन् प्रत्ययान्तो निपातः।

सीता। प्रेक्षामहे विलोकयामः। परिक्रामति—यत्र गृहभित्तौ आलेख्यानि अङ्कितानि तत्र गच्छति। आलेख्यम् चित्रम्। आङ्+लिख्+ण्यत्=आलेख्य। अत्र समुदायविवक्षया एकवचनम्।

सीता। नास्ति अन्तरं अवकाशः यस्मिन् कर्म्मणि तद् यथा तथा निरन्तरम् निरवकाशम्। निरन्तरं निविड़ं यथा तथा स्थिताः इति निरन्तरस्थिताः। घनसन्निविष्टाः। सुप्सुपेति समासः। उपस्तुवन्ति। नुवन्ति। अत्र रामायणम्—

उपतस्थुर्महार्हाणि सर्व्वाण्यस्त्राणि राघवम्।
ऊचुश्च मुदिता रामं सर्व्वे प्राञ्जलयस्तदा॥
इमे च परमोदार किङ्करास्तव राघव।
यद्यदिच्छसि भद्रन्ते तत् सर्व्वं करवाम वै॥

लक्ष्मणः। एतानि प्रयोगसंहारविभक्तमन्त्राणि जृम्भकाख्यानि आयुधानि, यानि भगवान् विश्वामित्रः कृशाश्वात् लेभे; ताड़कायाः यक्ष्याः वधे विनाशे कृते आर्थ्याय रामचन्द्राय ददौ च। जृम्भयन्ति, प्रयुक्तानि सन्ति अरीन् जृम्भापूर्व्वकं निश्चलाव-

स्थानमापादयन्ति इति जृम्भकाणि। ण्यन्तात् जृम्भधातोः ण्वुल्। तानि च अस्त्राणि चेति जृम्भकास्त्राणि।

रहस्यं मन्त्रः रहस्येन सह वर्त्तमानानि इति सरहस्यानि। रहस् + यत् = रहस्य। कुशिकस्य गोत्रापत्यं पुमान् इति कौशिकः। ऋष्यन्धकेत्यादिना अण्। विश्वस्य मित्रं इति विग्रहे विश्वामित्रः "मित्रेचर्षौ" इति पूर्व्वपदस्य दीर्घः। सञ्ज्ञा-शब्दोऽयम्। अतः पुंसि प्रयुक्तः। तं उपसंक्रान्तानि आश्रितानि। क्रमेर्गत्यर्थत्वात् कर्त्तरि क्तः। अप्रसादः प्रसादः कृतानि इति प्रसादीकृतानि। अभूततद्भावे च्विः। अस्य च्वौ इति अकारस्य ईत्वम्। प्रसादीकृतानि अनुकम्पया दत्तानि। आर्य्यस्येति सम्बन्धमात्रविवक्षया षष्ठी। जृम्भकास्त्रप्रदानं यथा रामायणे—

कामरूपं कामरुचिं मोहमावरणं तथा।
जृम्भकं सर्पनाथञ्च पन्थानवरुणौ तथा॥
कृशाश्वतनयान् राम भास्वरान् कामरूपिणः।
प्रतीच्छ मम भद्रन्ते पात्रभूतोऽसि राघव॥
बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना।
दिव्यभास्वर देहाश्च मूर्त्तिमन्तः सुखप्रदाः॥
केचिदङ्गारसदृशाः केचित् धूमोपमास्तथा।
चन्द्रार्कसदृशाः केचित् प्रह्वाञ्जलिपुटास्तथा॥
रामं प्राञ्जलयो भूत्वा ब्रुवन्मधुरभाषिणः।
इमेस्म नरशार्दूल शाधि किं करवाम ते॥

रामः। दिवि भवानि इति दिव्यानि तानि च अस्त्राणि इति दिव्यास्त्राणि।

अन्वयः। ब्रह्मादयः पुराणाः गुरवः ब्रह्महिताय परःसहस्राः शरदः तपांसि तप्त्वा स्वान्येव तपोमयानि तेजांसि एतानि अपश्यन्॥ १५॥

ब्रह्मा आदिर्येषां ते ब्रह्मादयः पुराणाः पुरातनाः गुरवः। प्रजापतयः ब्रह्मणः वेदस्य हिताय मङ्गलाय वेदरक्षार्थं वेदस्तत्त्वतपोब्रह्म इत्यमरः परःसहस्राः सहस्रादधिकाः शरदः वर्षाणि इत्यर्थः तपांसि तप्त्वा अर्जयित्वा स्वानि निजानि तपोमयानि तपः-समुद्भूतानि तेजांसि प्रभावान् एतानि अस्त्राणि जृम्भकायुधानि अपश्यन् अवालोकयन्। केनोपायेन वेदा रक्षणीयाः इति चिन्ताकुलाः ब्रह्मादयः प्रजापतयः परमं तपः तेपिरे तेषां तपसा समुद्रिक्ताः प्रभावाः अस्त्ररूपेण परिणताः। तानि अस्त्राणि दिव्यमूर्त्ति-धराणि एतानि जृम्भकाणि। सहस्रात् पराः इति परःसहस्राः राजदन्तादित्वात् परनिपातः। परात् शतसहस्रयोरिति सुडागमः पारस्करादित्वात्। परःशताद्यास्ते येषां परा संख्याः शतादिकात् इत्यमरः। तपस्शब्दात् विकारे मयट्। आयुधानि तपसो विकारः। शरदः इत्यत्र अत्यन्तसंयोगे द्वितीया। शरद् स्त्री वत्सरेऽप्यृतौ

इति मेदिनी। इन्द्रवज्रोपेन्द्रवज्रयो: सङ्करूपा उपजाति: वृत्तम्। स्यादिन्द्रवज्रा यदि तौ जगौग:। उपेन्द्रवज्रा प्रथमे लघौ सा। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता:।

राम:। प्रसूयते या सा प्रसूति: अपत्यम्। ताम् उपस्थास्यन्ति संक्रमिष्यन्ति। तव सन्तति: जृम्भकास्त्राणां प्रयोगसंहाराभिज्ञा भविष्यति। सकर्म्मकत्वात् देव-पूजाद्यर्थाभावाच्च अच तिष्ठते: उपपूर्व्वात् परस्मैपदम्। सर्व्वथा सर्व्वप्रकारेण। सर्व्व शब्दात् थाल्प्रत्यय:। अव्ययं क्रियाविशेषणञ्च।

लक्ष्मण:। मिथिलाया: वृत्तान्त: उदन्त: इति मिथिलावृत्तान्त:। हरधनुर्भङ्गसीता-परिणयादिरूप: वीथिकायामालिखित:।

सीता। अनादरेण अनास्थया हेलया इति यावत् खण्डितं भग्नं शङ्करस्य हरस्य शरासनं धनुर्येन स: अनादरखण्डितशङ्करशरासन:। शरा: अस्यन्ते क्षिप्यन्ते अनेन इति शरासनम्। असते: ल्युट्। यद्वा अस्यन्ते अनेन इति असनम्। शराणां असनमिति शरासनं धनु:। शिखण्डा: एव मुग्धं मनोहरं मुखमण्डनं यस्य स: शिखण्डमुग्धमुखमण्डन:। मुखस्य आननस्य मण्डनं भूषणं इति मुखमण्डनम् पञ्चभि: शिखण्डै: काकपक्षै: यस्य आननं शोभमानं मनोहरं च दृश्यते तथोक्त:। काकपक्ष: शिखण्डक: इत्यमर:। विस्मयेन आश्चर्य्येण स्तिमित: निश्चल: तात: पिता तेन दृश्यमाना ईक्ष्यमाणा सौम्या शान्ता सुन्दरी हारिणी च श्री: शोभा सौन्दर्य्यमित्यर्थ: यस्य स: विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्री:। विस्मयपरवश: पिता यस्य निरुपमां मधुरां देहकान्तिं निर्निमेषं विलोकयति ; यश्च लोकोत्तरेण विकसदिन्दीवरश्यामेन मधुरोज्ज्वलेन लावण्यात्मकेन शरीररामणीयकेन उपलक्षित: सर्व्वेषां मनांसि आकर्षति एवंविध: आर्य्यपुत्र: अत्र अङ्कित:। देहस्य सौभाग्यम् इति देहसौभाग्यं तेन प्रकृत्यादिभ्यश्चोपसंख्यानमिति उपलक्षणे तृतीया। यद्वा विस्मयं प्रति हेतुत्वात् हेतौ तृतीया। दलत् विसरत् नवं नीलोत्पलम् इति दलन्नवनीलोत्पलम् तदिव श्यामलं इति दलन्नवनीलोत्पलश्यामलं उपमानानि सामान्यवचनैरिति समास:। स्निग्धं प्रीत्यावहं च मसृणं अरूक्षं च शोभमानं सुन्दरम् च मांसलं स्फीतं प्रभृतमिति यावत् च तत् स्निग्धमसृणशोभमानमांसलम्। विशेषणानां कर्म्मधारयनिर्व्वाह:। दलन्नवनीलोत्पलश्यामलञ्च तत् स्निग्धमसृण-शोभमानमांसलम् च इति दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलम् तेन। देहसौभाग्येनेत्यस्य विशेषणम्। विशेषणानां कर्म्मधारयनिर्व्वाह:। मांस शब्दात् लच् प्रत्यय:। सिध्मादिगणे मांसशब्दस्य परिगणनं कर्त्तव्यम्। सुभगस्य भाव: इति सौभाग्यम्। सुभगशब्दात् ष्यञ्। हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च इत्युभयपदवृद्धि:। सौभाग्यम् माधुर्य्यं रामणीयकमित्यर्थ:। दल विसरणे इति

धातोः शतृ इत्यत्। श्रैधातोः मक् श्याम श्यामशब्दात् लच्। सिध्मादिभ्यश्चेति लच्। स्निह् धातोः क्तः स्निग्धः। पचे स्नीढ़। मस्तयते ल्युट् इति मस्तनम्। शुभधातोः शानच् शोभमानम्। स्तिम् धातोः क्तः स्तिमितः। स्तिम्यति। अम्महे इति विस्मयसूचकमव्ययम्।

लक्ष्मणः। एष तव तातः जनकानां पुरोहितः गौतमः शतानन्दश्च सम्बन्धिनो वशिष्ठादीन् अर्च्चति ॥ १६ ॥

तव तातः राजर्षिर्जनकः, जनकानां पुरोहितः पुरोधाः गौतमः गौतमस्य तनयः शतानन्दः सम्बन्धिनः यौनसम्बन्धेन सम्बद्धान् वशिष्ठादीन् अर्च्चति पूजयति सत्करोति। पुरो धीयते इति पुरोहितः। दधातेः कर्म्मणि क्तः। गौतमस्य अपत्यो पुमान् इति गौतमः। ऋष्यन्धकेत्यादिना अपत्यार्थे अण्।

रामः। जनकानां रघूणां च सम्बन्धः कस्य न प्रियः, यत्र कुशिकनन्दनः स्वयं दाता ग्रहीता च ॥ १७ ॥

जनकस्य अपत्यानि पुमांसः जनकाः, रघो अपत्यानि पुमांसः इति रघवः। लक्षणया तद्राजसंज्ञावशात् अणो लुक्। तेषां जनकानां रघूणां च सम्बन्धः यौनः विवाहबन्धनम् इत्यर्थः कस्य न प्रियः, प्रीतिकरः। अपितु सर्व्वस्यैव प्रीतिहेतुः। यत्र सम्बन्धे विषये कुशिकनन्दनः कौशिकः विश्वामित्रः स्वयमात्मना प्रकृत्यादिभ्यश्चेति तृतीया दाता दानस्य कर्त्ता, ग्रहीता ग्रहणस्य च कर्त्ता। यत्र सम्बन्धे, जामातृपक्षस्य तथा वधूपक्षस्य च इत्युभयपक्षस्य अध्यक्षः स्वयं विश्वामित्रः एतादृशः सम्बन्धः सर्व्वेषां प्रीतिमावहति। ग्रहेः तृच् ग्रहीता।

सीता। तस्मिन् काले समये कृतं गोदानमङ्गलं केशान्ताख्यं क्षत्रियाणां द्वाविंशवर्षे कर्त्तव्यं मङ्गलं येषां ते तत्कालकृतगोदानमङ्गलाः। अत्र मनुः "केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशेतु वैश्यस्य द्व्यधिके ततः"। गावः केशाः दीयन्ते छिद्यन्ते अस्मिन् इति गोदानम्। गोदानमेव मङ्गलं इति गोदानमङ्गलम्। गौर्नादित्ये वलीवर्द्दे क्रतुभेदर्षिभेदयोः। स्त्रीतु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्वाणलोमसु इति केशवः। गोदानविधिर्विवाहात् प्रागनुष्ठीयते तथा च रघौ—"अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्त्तयद्गुरुः।" गवां पशूनां दानं वितरणं इति गोदानं तद्रूपं मङ्गलं इति व्याख्यानं न मनोरमं; चत्वारः भ्रातरः गोवितरणं कृत्वा विवाहमङ्गले दीक्षिता इत्यस्य आलेख्ये समर्पणं न सुकरं न वा वैशिष्ट्यं किञ्चिदावहति। छिन्नकेशानां भ्रातॄणां चित्रं पुनः दूरादेव सुष्ठु प्रतीयते विशिष्टताञ्चार्हति। [The peculiar tonsure of their head is clearly marked in the picture.] विवाहे दीक्षिता इति विवाहदीक्षिताः। परिणयविधौ समुद्युक्ताः इत्यर्थः। दीक्षा जाता एषां इति दीक्षिताः। तारकादित्वा-

हितम्। अहो चित्रनैपुण्यं यत् स एव समयः देशश्च अधुना वर्त्तमानः सन्निहितश्च इव प्रतिभाति।

रामः। समय इति। हे सुमुखि स एष समयः वर्त्तते इव यत्र गौतमार्पितः आगृहीतकमनीयकङ्कणः तव अयं करः मूर्त्तिमान् महोत्सव इव मां समनन्दयत्॥१८॥

सुशोभनं मुखं अस्याः इति सुमुखी सुन्दरी इत्यर्थः। स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधात् इति ङीष्। हे सुमुखि यत्र समये यस्मिन् काले गौतमेन गौतमपुत्रेण शतानन्देन अर्पितः दत्तः प्रतिपादित इति यावत् मम पाणौ स्थापितः इत्यर्थः अयं आगृहीतं आमुक्तं धृतमिति यावत कमनीयं कान्तं मनोहरं कङ्कणं विवाहमङ्गलसूत्रं प्रतिसरः इति यावत् येन स आगृहीतकमनीयकङ्कणः धृतविवाहमङ्गलसूत्रः तव करः मूर्त्तिमान् शरीरी महोत्सवः प्रमोदातिशय इव मां समनन्दयत् आनन्दपरवशमकरोत् स समयः कालः वर्त्तते इव। इदानीं उपस्थित इव। चित्रमिदं दृष्ट्वा मन्ये स एव मधुरः कालोऽयम् अधुना वर्त्तते। कमनीयं कङ्कणं करभूषणं इति व्याख्यानं न समीचीनम्। विवाहविधौ मङ्गलसूत्रस्यैव अधिकारूढ़वैशिष्ट्यमुचितम्। कङ्कणं करभूषणमित्यमरः। कङ्कणो ना प्रतिसर इति रत्नकोशः। कङ्कणं करभूषायां सूत्रमण्डलयोरपि इति मेदिनी।

मूर्त्तिः शरीरम्। मूर्च्छधातोः क्तिन्। मूर्त्तिः विद्यते अस्य इति मूर्त्तिमान्। मतुप् प्रत्ययः। महान् उत्सवः इति महोत्सवः आन् महतः समानाधिकरणे इत्यादिना आकारोऽन्तादेशः। उत् पूर्व्वात् सुधातोः अप् उत्सवः। सीतायाः पाणिः रामचन्द्रस्य पाणौ निवेशितः रामस्य कमपि आनन्दातिरेकं पुपोष। अतएव आनन्दस्य कारणे करे कार्य्यस्वरूपमानन्दमारोपयन् उत्प्रेक्षते, अयं ते करः शरीरी महोत्सव इवाभूत्। स समयः वर्त्तते इव इत्यत्रापि अतीतस्य समयस्य वर्त्तमानत्वे सम्भाव्यमानत्वादुत्प्रेक्षालङ्कारः। मञ्जुभाषिणी वृत्तम्। सजसा जगौ च यदि मञ्जुभाषिणी इति लक्षणम्।

লক্ষ্মণ। [ প্রবেশ করিয়া ] আর্য্যের জয় হউক। আর্য্য, সেই চিত্রকর আমাদিগের উপদেশানুসারে আপনার চরিত এই বীথিকায় অঙ্কিত করিয়াছে। আপনি উহা অবলোকন করুন।

রাম। বৎস কিরূপে দুর্ম্মনায়মান দেবীর চিত্তবিনোদন করিতে হয় তাহা তুমি জান। কোন্ পর্য্যন্ত চিত্র অঙ্কিত হইয়াছে ?

লক্ষ্মণ। আর্য্যার অগ্নিপরীক্ষা পর্য্যন্ত।

রাম। অমঙ্গল নিবারিত হউক। ( অর্থাৎ ওরূপ বলিও না )।

যিনি (অযোনিসম্ভবা) জন্ম দ্বারাই পবিত্র, অন্য পাবন পদার্থে তাঁহার প্রয়োজন কি ? তীর্থোদক ও বহ্নিকে অন্যপদার্থ দ্বারা বিশুদ্ধ করিতে হয় না॥ ১৩॥

দেবি দেবযজনসম্ভবে, প্রসন্ন হও। তোমার সম্বন্ধে এই লোকবাদ যতদিন জীবন ধারণ করিবে ততদিন থাকিবে।

অতীব কষ্টের বিষয় এই যে কুলকীর্ত্তিরক্ষণে তৎপর (নৃপতিদিগকে) সকল লোকেরই চিত্তরঞ্জন করিতে হয়। এই হেতু তোমাকে যে অশুভ কথা বলিয়াছিলাম, তাহা তোমার যোগ্য নহে। সুরভি কুসুম মস্তকেই স্থিতিলাভ করিয়া থাকে ইহা স্বাভাবিক ও সর্ব্বত্র সুপ্রসিদ্ধ। চরণ দ্বারা অবমর্দ্দন উহার যোগ্য ( ব্যবহার ) নহে ॥ ১৪ ॥

সীতা। আর্য্যপুত্র, থাক্ ও কথা। আসুন, আপনার ( চিত্রিত ) চরিতাবলী অবলোকন করি। [ উত্থান করিয়া পাদবিক্ষেপ করিতে লাগিলেন ]।

লক্ষ্মণ। এই সেই চিত্র।

সীতা। [ যত্নের সহিত অবলোকন করিয়া ] কে ইহারা উপরিদেশে নিবিড়ভাবে অবস্থিত হইয়া যেন আর্য্যপুত্রের স্তব করিতেছেন ?

লক্ষ্মণ। দেবি এ গুলি ( প্রয়োগ সংহার ) মন্ত্র সহিত জৃম্ভকাস্ত্র। বিশ্বের মিত্র কুশিকগোত্র বিশ্বামিত্র ঋষি ভগবান্ কৃশাশ্ব হইতে এইগুলি প্রাপ্ত হন। তিনি তাড়কা-বিনাশের পর প্রসন্ন হইয়া আর্য্য রামচন্দ্রকে এইগুলি দান করিয়াছিলেন।

রাম। দেবি, এই দিব্য অস্ত্রগুলিকে বন্দনা কর।

ব্রহ্মপ্রভৃতি পুরাণ গুরুগণ বেদরক্ষার্থ সহস্রাধিক সংবৎসর তপস্যা করিয়া তাঁহাদিগের তপস্যাসম্ভূত, স্বকীয় তেজোনিচয় এই অস্ত্ররূপে পরিণত হইয়াছে দেখিয়াছিলেন ॥ ১৫ ॥

সীতা। এই অস্ত্রদেবতাদিগকে নমস্কার করি।

রাম। এক্ষণে এই অস্ত্রগুলি সর্ব্বতোভাবে তোমার সন্ততিকে আশ্রয় করিবে।

সীতা। অনুগৃহীত হইলাম।

লক্ষ্মণ। ( এক্ষণে ) মিথিলার বৃত্তান্তের ( আরম্ভ ) হইল।

সীতা। ওমা ! এ যে আর্য্যপুত্রকে এখানে অঙ্কিত করিয়াছে। নববিকসিত নীলোৎপলের ন্যায় নয়নাভিরাম, মসৃণ, সুন্দর ও প্রভূত দেহসৌন্দর্য্যে বিস্ময়পরবশ হইয়া পিতা নিশ্চল ভাবে ইঁহার মধুর ও সুন্দর কান্তি অবলোকন করিতেছেন। ইনি অনাস্থার সহিত শঙ্করের শরাসন ভগ্ন করিয়াছেন। আহা, শিখণ্ডগুলি দ্বারা মুখের কি মধুর শোভাই হইয়াছে।

লক্ষ্মণ। আর্য্যে, দেখুন, দেখুন।

ঐ আপনার পিতা ও জনকবংশীয়দিগের পুরোহিত গোতমতনয় শতানন্দ ( নূতন ) বিবাহ সম্বন্ধে সম্বন্ধ বশিষ্ঠ প্রভৃতিকে অর্চ্চনা করিতেছেন ॥ ১৬ ॥

রাম। ইহা দেখিবার বিষয় বটে।

জনকবংশীয় ও রঘুবংশীয়দিগের এই যৌন সম্বন্ধ কাহার প্রিয় নহে ? যে বিবাহে কুশিকনন্দন বিশ্বামিত্র স্বয়ং দাতা ও গ্রহীতা ॥ ১৭ ॥

সীতা। সেই সময়ে বিহিত কেশান্তসংস্কারসম্পন্ন বিবাহমঙ্গলে দীক্ষিত আপনারা চারি ভ্রাতা এই এস্থানে অঙ্কিত হইয়াছেন। ওমা, মনে হইতেছে যেন সেই দেশে ও সেই কালে বর্ত্তমান রহিয়াছি।

রাম। তাহাই বটে।

হে সুমুখি, যে সময়ে গৌতম কর্ত্তৃক অর্পিত, কমনীয় বিবাহ মঙ্গলসূত্রশোভিত, মূর্ত্তিমান্ মহোৎসবের ন্যায় তোমার এই পাণি আমাকে আনন্দিত করিয়াছিল সেই সময় যেন বর্ত্তমান রহিয়াছে ॥ ১৮ ॥

[*Enter Lakshmana*]

*Lakshmana* :—Victory to my honoured brother! Respected brother, that painter has portrayed here on this wall the incidents of your honour's life as instructed by us. Be pleased to look at it.

*Rama* :—Dear brother, you know how to divert the queen who is now disconsolate or troubled in her heart. Up to what limit or event (of the incidents of my life) does, then, the portrait refer?

*Lakshmana* :—As far as the purification of our honoured sister (the queen) in the fire.

*Rama* :—No more of it!

Of what use are other purifying things to her who is pure by birth? The holy water of sacred places (and streams) and the fire itself do not require any purification from other things. (13).

Queen, you who were sprung from sacrificial ground, pardon me; this (evil) report will last as long as your life.

It is a hard lot that all men are to be kept in good humour by those to whom the (reputation of their) family is a treasure. And therefore it was that those evil words were spoken by us which are quite unfit for you. The placing of a fragrant flower on the head, and not trampling it under foot is quite natural. (14).

*Sita* :—Let it be my husband, let it be. Come let us see the picture (of the incidents) of your life. [*Rises up and advances a few steps*].

*Lakshmana* :—Here is that portrait.

*Sita* :—[Marking with attention.] Who are these standing close to each other at the top, that seem to be praising my lord?

*Lakshmana* :—These are, queen, the Jrimbhaka weapons together with their secret charms, which were transferred by the holy Krisaswa to Viswamitra, the descendant of Kusika, and a friend of the world; and were given by him as a favour to our honoured brother after the slaying of Tadaka.

*Rama* :—Salute, my queen, these celestial weapons.

The sages of old, Brahma and others, having practised austerities for over thousands of years for the promotion and welfare of the scriptures beheld their own spiritual energies generated by their austerities as ( or in the form of ) these weapons (15).

*Sita* : – My salutations to them

*Rama* :—Now by all means they will wait upon your issue.

*Sita* :—I am ( highly ) favoured.

*Lakshmana* :—Here are the incidents of Mithila.

*Sita* :—Oh ! Wonder ! here is my husband portrayed, being marked by an amiable, lovely, glossy, beautiful and strong frame, sable as a fresh, blooming blue lotus ; his mild and graceful appearance being beheld steadfastly by my father struck with wonder, as he broke the bow of Sankara without any effort ; and his face charmingly adorned by lovely locks of hair.

*Lakshmana* :—Behold, honoured sister, behold :—

Here is your father, together with Satananda the son of Gotama and the priest of the Janaka family, paying respect to Vasistha and others who are now connubially connected with him. (16).

*Rama* :—This is worth seeing.

To whom is not agreeable the (connubial) connection between the family of Janaka and the family of Raghu, in which matter the son of Kusika himself is the donor and the receiver ? (17).

*Sita* :—Here are you four brothers, with the ceremony of tonsure just performed at the time and initiated into the rites of matrimony. Oh ! meseems that I live at that time and that very place.

*Rama* :—Just so.

It seems that it is that very moment when, Oh you of a fair face, this hand of yours wearing the beautiful and auspicious nuptial thread and offered by Gautama, delighted me like festive joy in a bodily form. (18).

लक्ष्मणः। माण्डवी श्रुतकीर्त्तिश्च जनकानुजस्य कुशध्वजस्य दुहितरौ। तयोर्माण्डवी भरतेन परिणीता, श्रुतकीर्त्तिश्च शत्रुघ्नेन। शत्रुघ्नः प्रसवक्रमेण लक्ष्मणस्य कनीयान्। अतः तस्य पत्नी वधूरिति प्रोच्यते लक्ष्मणेन।

लक्ष्मणः। [ लज्जया स्मितेन च सह वर्त्तमानं यथा यथा सलज्जास्मितम्। ]

निजपत्नीं ऊर्म्मिलामधिकृत्य प्रश्नः कृतः इति त्रपा ; सीतया नर्म्मार्थं कृतोऽयं प्रश्नः इति स्मितम् । "रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम् ।" अन्यतः विषयान्तरे सञ्चारयामि अस्याः दृष्टिं प्रेषयामि । भार्गवः भृगुकुलोत्पन्नः जमदग्नितनयः परशुरामः ।

लक्ष्मणः । आर्य्येण रामेण अयमसौ भार्गवः निर्ज्जितः इति वाक्यसमाप्तिः । वाक्ये असम्पूर्णे एव रामेण विनयप्रियेण तदाक्षिप्तम् ।

रामः । [ आक्षेपेण वाक्यस्य आच्छेदेन असमाप्ते एव अन्तरा भङ्गेन इत्यर्थः सह वर्त्तमानम् यथा तथा इति साक्षेपम ] वहुतरं प्रभूतम् इत्यर्थः । अन्यतः अन्यत् किञ्चिदित्यर्थः । इतरार्थोऽपि दृश्यते इति द्वितीयायाः तसिः ।

सीता । [ स्नेहः प्रेमः, वहुमानः आदरः ताभ्यां सह वर्त्तमानं यथा तथा सस्नेहवहुमानम् ] विनयस्य विकत्थनाभावस्य माहात्म्य' तेन हेतुना । महान् आत्मा यस्य स महात्मा । तस्य भावः माहात्म्यम् गुणवचनादित्वात् ष्यञ् ।

रामः । हन्त इति खेदे अव्ययम् । विषादे च द्विरुक्तिः—यथा च दर्पणः—

> कथितञ्च पदं पुनः ।
> विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ॥
> दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ।
> अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे ॥

जीवत्स्विति । तातपादेषु जीवत्सु ; नवे दारपरिग्रहे मातृभिः चिन्त्यमानानां नः ते दिवसा गता हि ॥ १९ ॥

तातस्य पितुः पादाः चरणाः तेषु तातपादेषु जीवत्सु, पितरि दशरथे जीवति ; नवे प्रत्यग्रे दाराणां पत्न्याः परिग्रहे स्वीकारे कृते सति ; मातृभिः अम्बाभिः कौशल्या-प्रमुखाभिः' चिन्त्यमानानां लाल्यमानानां नः अस्माकं ते अनुभूतसुखस्वाच्छन्द्यवहुलाः इत्यर्थः दिवसाः गताः हि निश्चितमेव । यदा पिता दशरथः न दिवमारूढ़ः वयञ्च कृतदाराः अयोध्यायां प्रतिनिवृत्ताः तदा जननी कौशल्या अस्माकं सुखवृद्धये कति नाम यत्नान् अकरोत् । आहोवत निरतिशयसुखवहुलाः ते दिवसाः इदानीं क्व नु गताः । न ते पुनरावर्त्तिष्यन्ते इति भावः । ते इति अत्र तच्छब्दः यच्छब्दनिराकाङ्क्षः । अनुभूतार्थ विषयत्वात् । तथाचोक्तम्—प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते इति । तातपादेषु इत्यादिषु वहुवचनं गौरवद्योतनार्थम् ।

प्रतन्विति । प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः दशनमुकुलैः (च) मुग्धालोकं मुखं दधती शिशुः इयं जानकी ललितललितैः ज्योत्स्नाप्रायैः अकृत्रिमविभ्रमैः मधुरैः अङ्गकैः मे अम्बानां कुतूहलं अकृत ॥ २० ॥

तदा तस्मिन् काले शिशुः वालिका इयं जानकी प्रतनवः सूक्ष्माश्च ते विरला अनिविड़ाश्च इति प्रतनुविरलाः तैः नातिनिविड़ैः सूक्ष्मैश्च, प्रान्तयोः आननस्य उभयोः

अन्तयो: गण्डयोरित्यर्थ: उन्मीलन्त: शोभमाना: ये मनोहरा: कुन्तला: केशा: तै: प्रान्तोन्मीलन्मनोहरकुन्तलै: गण्डयोरुपरिविलसन् मूर्द्धजै:,दशनमुकुलै:, कुन्दकोरकोपमै: शिखरिभि: शुभैश्च इति भाव: दन्तैश्च मुग्ध: रम्य: आलोक: दर्शनं यस्य तत् मुग्धालोकं रमणीयदर्शनं मुखं दधती धारयन्ती ललितललितै: सुन्दरै: सुकोमलैश्च इत्यर्थ:,ज्योत्स्नाया: चन्द्रिकाया: लचणया तद्वद्धवलस्य इत्यर्थ: प्राय: वाहुल्यं येषु तै: ज्योत्स्नाप्रायै: यद्वा प्रायेण ज्योत्स्नाकल्पै:, वच्यते चाग्रे ज्योत्स्नामयीव मृदुमुग्धमृणालकल्पा, अकृत्रिम: हावशून्य: विभ्रम: विलास:, येषां तै: अकृत्रिमविभ्रमै: निसर्गसुन्दरैरव्याजमनोहरैरिति-भाव: मधुरै: चारुभि: अङ्गकै:, चुद्रै: अवयवै: मे मम अम्वानां मातॄणां कुतूहलं आनन्द-मित्यर्थ: अकृत अजनयत्। श्लोकोऽयं इत्थमपि व्याख्यायते। प्रतनुविरलै: मनोहरकुन्तलै: प्रान्तोन्मीलत् प्रान्तयो: गण्डयो: उन्मीलत् शोभमानम् ईदृशै: कुन्तलै: समुद्भासितगण्डम्,:दशनमुकुलै: दन्तकुड्मलै: मुग्धालोकञ्च आननं दधती गतमन्यत्। पचद्वयेऽपि समुच्चयवचनस्य चकारस्य अभाव: दृश्यते। अत: केचिदित्थं व्याचचते। प्रतनव: सूक्ष्मा: चुद्रत्वात्, विरला: सान्तराला: च ते प्रतनुविरला: तै: दशनमुकुलैरित्यस्य विशेषणम्। प्रान्तयो: सृक्कणी निकषा इत्यर्थ: उन्मीलन्त: विलम्बित्वात् राजमाना: मनो-हरा: कुन्तला: येषां तै. प्रान्तोन्मीलन्मनोहरकुन्तलै: तथोक्तै: दशनमुकुलै: मुग्धालोकं मुखं दधती। शेषं पूर्व्ववत्।

हरन्ति इति हरा: पचाद्यच् मनसो हरा: इति मनोहरा:। उत्पूर्व्वात् मील धातो: शतरि रूपम् उन्मीलत्। ललितललितै: ललितप्रकारै ; प्रकारे गुणवचनस्य इति द्विर्भाव: कर्म्मधारयवदुत्तरेषु इति सुवलोप:। ललितादपि ललितानि इति केचित् आहु:। कृधातो: क्त्रि: क्त्रेर्मप् नित्यम इति मप् तत: कृत्रिमशब्द सिद्ध:। अङ्गकै: इत्यत्र स्वार्थे कप्रत्यय:। द्युत्धातो: इसिन् आदेश्च ज: इति ज्योतिस्शब्दस्य-निर्व्वचनम्। तत: ज्योत्स्नातमिस्रे त्यादिना ज्योतिष: उपधालोप: नश्च प्रत्यय:। ज्योत्स्नया तुल्यानि इति ज्योत्स्नाप्रायाणि तै:। नित्यसमास:। यद्वा प्रायेण ज्योत्स्ना इति ज्योत्स्नाप्रायाणि इति विग्रहो वा। सुप्सुपेति समास:। प्रायो मरणानशने मृत्यौवाहुल्यतुल्ययोरिति मेदिनी। दशना: मुकुला इव इति दशनमुकुला: तै:। मुकुलोऽस्त्रियामित्यमर:। हरिणीवृत्तम्। नसमरसलाग: षड्वेदैर्हयैर्हरिणीमता इति लचणम्।

लक्ष्मण:। मन्थरा कैकय्या: प्रियादासी ; अनया प्रणोदिता कैकयी भरतस्य अभिषेचनम् रामस्य च वनप्रयाणं दशरथं ययाचे।

राम:। [ नास्ति उत्तरं यस्मिन् कर्म्मणि तद् तथा तथा अनुत्तरम् न किञ्चिदुक्त्वा अन्यत: चित्रवीथिकाया: अन्यस्मिन् अंशे, अन्यं अंशं वा दर्शयन् ]।

इङ्गुदीति—सोऽयं इङ्गुदीपादपः पुरा शृङ्गवेरपुरे यत्र स्निग्धेन निषादपतिना समागम आसीत् ॥ २१ ॥

इङ्गुदीपादपः इङ्गुदीवृक्षः तापसतरुः सोऽयमत्रालिखितः पुरा वनप्रयाणसमये शृङ्गवेरपुरे यत्र तापसतरुतले स्निग्धेन स्नेहभाजनेन वयस्येन निषादानां पतिः तेन निषादपतिना निषादाधिपेन गुहकेन सह समागमः सम्मिलनं आसीत् वयस्यः स्निग्धः सवयाः इत्यमरः। ब्राह्मणात् शूद्रकन्यायां जातः निषादः उच्यते। स पारशवः इति संज्ञान्तरेणाप्यभिधीयते। तथाच मनुः ब्राह्मणाद् वैश्यकन्यायामम्बष्ठो नाम जायते। निषादः शूद्रकन्यायां यः पारशव उच्यते। पादैः मूलैः पिबति रसमाकर्षति इति पादपः। पाद + पा + क।

लक्ष्मणः। मध्यमा अम्बा जननी कैकेयी तस्याः वृत्तान्तः उदन्तः रामवनवासादि-रूपो व्यापारः। अन्तरितः प्रच्छादितः निह्नुतः। अन्तरं अन्तर्धानं करोति इति अन्तरयति। ततः कर्म्मणि क्तः।

सीता। जटायाः संयमनं बन्धनं इति जटासंयमनं तस्य वृत्तान्तः। यद्वा तदेव वृत्तान्तः इति जटासंयमनवृत्तान्तः। अत्र शृङ्गवेरपुरे रामलक्ष्मणाभ्यां जटाः बद्धाः।

लक्ष्मणः। पुत्रसंक्रान्तलक्ष्मीकैः वृद्धेक्ष्वाकुभिः यद्धृतम्, आर्य्येण तत् पुण्यं आरण्यकं व्रतम् बाल्ये धृतम् ॥ २२ ॥

पुत्रेषु तनयेषु सङ्क्रान्ता संश्रिता (पुत्रान् वा संक्रान्ता इति पुत्रसंक्रान्ता सह-सुपेति समासः) लक्ष्मीः श्रीः येषां तैः पुत्रसङ्क्रान्तलक्ष्मीकैः नद्यृतश्चेति कः। पुत्र-न्यस्तराज्यभारैः वृद्धाश्च ते इक्ष्वाकवश्चेति वृद्धेक्ष्वाकवः तैः यत् व्रतं वानप्रस्थं व्रतं धृतम् आर्य्येण अग्रजेन भ्रात्रा रामेण बाल्ये प्रथमे वयसि तत् पुण्यं पवित्रम् आरण्यकं व्रतं वैखानसं व्रतं धृतमनुष्ठितम्। पूर्व्वे इक्ष्वाकवः वार्द्धके मुनिवृत्तयः अयन्तु प्रथमे वयसि इति अहो वैचित्र्यमितिभावः। सङ्क्रान्ता इत्यत्र क्रमेर्गत्यर्थत्वात् कर्त्तरि क्तः। इक्ष्वाकोरपत्यानि पुमांसः इति इक्ष्वाकवः। लक्षणया तद्राजसंज्ञावशात् अणो लुङ्। बालस्य भावः इति बाल्यम्। बालशब्दाद् यत्। पुणाति इति पुण्यं पूञो यत् णुक्। ह्रस्वश्च इति यत् प्रत्ययः णुगागमः, पुनाते र्ह्रस्वश्च। अरण्ये निवसन्ति ये ते आरण्यकाः वानप्रस्थाः। अरण्यान्मनुष्ये इति वुञ्। तेषां आरण्यकानां इदं इति आरण्यकम्। तस्येदमित्यण्।

सीता। प्रसन्नं निर्म्मलं पुण्यं पवित्रं सलिलं यस्याः सा प्रसन्नपुण्यसलिला। भागीरथी गङ्गा। भगीरथेन आनीता अतः भागीरथी इति संज्ञा।

रामः। रघोः कुलं इति रघुकुलं तस्य देवता इति रघुकुलदेवता। ब्रह्मशाप-दग्धानां सगरसुतानां समुद्धरणात् इयं रघुकुलस्य मङ्गलविधात्री गृहदेवतेव।

तुरगेति। पुरा सगराध्वरे तुरगविचयव्यग्रान् उर्व्वीभिदः अमर्षात् कपिलमहसा

प्लुष्टान् प्रपितामहान् भगीरथः अगणिततनूपातं तपांसि तप्त्वा हे भगवति तव अग्निः स्पृष्टान् चिरात् उददीधरत् ॥ २३ ॥

पुरा पूर्व्वं सगरस्य अस्मत्पूर्व्वपुरुषस्य अध्वरे आश्वमेधिके यज्ञे तुरगस्य आश्वमेधिकस्य अश्वस्य विचये अन्वेषणे व्यग्रान् व्याकुलान् उर्व्वीं पृथिवीं भिन्दन्ति अश्वार्थं अवदारयन्ति ये ते उर्व्वीभिदः सत्सुद्विषेत्यादिना क्विप्। पृथिवीमवदार्य्य पातालं प्रति गच्छतः इत्यर्थः अमर्षात् क्रोधात् अश्वापहारकोऽयमिति कृत्वा धर्षणजन्यकोपात् हेतोः कपिलस्य महर्षेः महसा तेजसा प्लुष्टान् दग्धान् प्रपितामहान् सगरपुत्रान् षष्टिसहस्रसंख्यकान्, भगीरथः न गणितः तन्वाः शरीरस्य पातः यस्मिन् कर्म्मणि तद् यथा तथा अगणिततनूपातम् अभीष्टसिद्ध्यर्थं वर्त्तमानः शरीरनाशं अपि उपेक्षमाणः इत्यर्थः तपांसि तप्त्वा अर्ज्जयित्वा, हे भगवति तव, तपसा प्रीणितायाः इति शेषः अग्निः जलेन स्पृष्टान् परामृष्टान् पवित्रीकृतान् इत्यर्थः चिरात् महता कालेनेत्यर्थः उददीधरत्। ब्रह्मशापमुक्तान् स्वर्लोकमनयदित्यर्थः। हरिणीवृत्तम्। लक्षणमुक्तम्। गरेण विमात्रा दत्तेन विषेण सह जातः इति सगरः। अध्वानं राति स्वर्गपथं ददाति इति अध्वरः। अध्वन् + रा + क। तुर गच्छति इति तुरगः। तुर + गम् + ड। वि + चि + अच् = विचय। एरजित्यच। विचयः अन्वेषणम्। मृष् + घञ् = मर्षः। सहनम्। न मर्षः अमर्षः कोपः। मह पूजायां इति धातोः असुन्, महः तेजः। प्लुषदाहे इति धातोः कर्म्मणि क्तः प्लुष्टः। प्लोषति, प्लुष्यति, प्लुष्णाति,। अप्लोषीत्, अप्लुषत्। प्लुष्टः प्लुषितः। पितुः पितरः इति पितामहाः। पितृ + डामहच = पितामह। सगरस्य षष्टिसहस्रसंख्यकाः पुत्राः भगीरथस्य प्रपितामहाः आसन्।

Sagara had sixty thousand sons by one wife , and another named Asamanjas, by his another wife Asamanjas was very wicked and was forsaken by his father Asamanjas's son was Angsuman Angsuman had a son by name Dilipa, and Bhagiratha was the son of Dilipa.

सगरस्यासमञ्जस्तु असमञ्जादथांशुमान्।
दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः॥

स्त्रियां मूर्त्तिस्तनुस्तनूः। तन्वाः पातः इति तनूपातः। गणयतेः कर्म्मणि क्तः गणितः। न गणितः अगणितः। अगणित तनूपातः यस्मिन् कर्म्मणि तद् यथा तथा। अगणिततनूपातम्। क्रियाविशेषणमिदम्। तपांसि is the cognate accusative of तप्त्वा। The root तप् under the present circumstances will be conjugated in the आत्मनेपदम्। तपस् तपःकर्म्मकस्य इति

उत्पूर्व्वात् धारयते: लुङि रूपम् उददीधरत्। चिरादिति अव्ययम्। अपवर्गे तृतीया। महता कालेनेत्यर्थ:।

The Vishnupurana may be quoted to clear up the allusion here :—

"सगरो हयमेधमारेभे। तत्र च तत्पुत्रैरधिष्ठितमस्याश्वं कोऽप्यपहृत्य भुवो विवरं प्रविवेश। ततस्तत्तनयाश्चाश्वखुरगतिनिर्बन्धेन प्रत्येकं योजनं चख्नुः। पाताले चाश्वं परिभ्रमन्तम्, अवनिपतितनयास्ते ददृशु:। नातिदूरस्थितञ्च भगवन्तमपघने शरत्कालेऽर्कमिव तेजोभिरनवरत मूर्द्धमधश्चोर्द्ध्वं दिशश्चोद्भासयमान कपिलऋषिमपश्यन्। ततश्चोद्यतायुधा दुरात्मायमस्मदपकारी यज्ञविघातकर्त्ता हयहर्त्ता हन्यतां हन्यतामित्यधावन्। ततस्तेनापि भगवता किञ्चिदीषत्परिवर्त्तितलोचनेन विलोकिता: स्वशरीरसमुत्थेनाग्निना दह्यमाना विनेशु:"। सगरेण प्रेरित: असमञ्जपुत्र: अंशुमान् "कपिलमपगम्य भक्तिनम्रस्तथा तथा च तुष्टाव यथैन भगवानाह गच्छैन पितामहायाश्वं प्रापय वरं वृणीष्व च पुत्र पौत्रश्च ते स्वर्गाद्गङ्गामानयिष्यतीति। तदम्भसा संस्पृष्टेष्वस्थिभस्मसु एते स्वर्गमारोहयन्ति। दिलीपस्यापि भगीरथ: योऽसौ गङ्गां स्वर्गादिहानीय भागीरथीसंज्ञां चकार।"

हे अम्ब जननि सा अस्मत्कुलदेवता त्वम् स्नुषायां वध्वां सीतायां अरुन्धती वशिष्ठपत्नी इव शिवस्य मङ्गलस्य अनुध्यान चिन्तन तदेव पर प्रधान यस्या: सा शिवानुध्यानपरा मङ्गलचिन्तनरता भव। अनु + ध्यै + ल्युट्।

লক্ষ্মণ। আর্য্যা, এই আর্য্যা মাণ্ডবী, এবং এই বধূ শ্রুতকীর্ত্তি।

সীতা। বৎস, এই আর একটি কে?

লক্ষ্মণ। [ লজ্জা ও ঈষৎ হাস্যের সহিত অপবারিত ভাবে ] আর্য্যা ঊর্ম্মিলার বিষয় প্রশ্ন করিতেছেন। আচ্ছা অন্য বিষয়ে ইঁহার দৃষ্টি সঞ্চারিত করি। [ প্রকাশ্যে ] আর্য্যে অবলোকন করুন ইহা দেখিবার বিষয় বটে। এই ভগবান্ ভার্গব।

সীতা। [ ব্যস্ততার সহিত ] আমার গাত্র কম্পিত হইতেছে।

রাম। ঋষে, আপনাকে নমস্কার করি।

লক্ষ্মণ। আর্য্যে, অবলোকন করুন, ভার্গব আর্য্য কর্ত্তৃক [বাক্য অর্দ্ধ উচ্চারিত হইলে]

রাম। [ বাধা প্রদান পূর্ব্বক ] বৎস, অনেক দেখিবার বিষয় আছে; অন্য বিষয় দেখাও।

সীতা। [ স্নেহের সহিত সাদরে অবলোকন করিয়া ] আর্য্যপুত্র, এই বিনয়মাহাত্ম্য সম্যগ্ ভাবে আপনার ( চরিত্রের ) শোভা বর্দ্ধন করিতেছে।

লক্ষ্মণ। এই আমরা অযোধ্যায় প্রত্যাগত হইলাম।

রাম। [ অশ্রু বিসর্জ্জন করিয়া ] হায়, হায় ( সেই দিনের কথা ) স্মরণ করিতেছি।

তখন পিতা জীবিত ছিলেন, আমরা সবে মাত্র বিবাহ করিয়া আসিয়াছি। মাতৃগণ আমাদের সুখ স্বাচ্ছন্দ্যের বিষয় সতত চিন্তা করিতেছেন। (হায়) আমাদের সেই (সুখের) দিন অতীত হইয়াছে। আর এই জানকী—তখন ইহার মুখখানি (কুন্দ) কোরক সদৃশ দন্তগুলিদ্বারা ও সূক্ষ্ম ও বিরল, আগণ্ডলম্বী, মনোহর কুন্তলকলাপ দ্বারা অতিসুন্দর দেখাইত। ইহার অকৃত্রিমবিলাসশোভিত, জ্যোৎস্নাতুল্য কমনীয়, অতি ললিত ক্ষুদ্র ক্ষুদ্র চারু অবয়বগুলি আমার জননীদিগের (কতই) আনন্দবর্দ্ধন করিত॥ ১৯—২০॥

লক্ষ্মণ। এই মন্থরার চিত্র।

রাম। [ রাম উত্তর না দিযা অন্যদিকে দেখাইয়া ] দেবি বৈদেহি! এই সেই ইঙ্গুদীতরু, পূর্ব্বে শৃঙ্গবেরপুরে যে তরুসমীপে প্রিয়বয়স্য নিষাদপতি গুহকের সহিত সমাগম হইয়াছিল॥ ২১॥

লক্ষ্মণ। [ হাস্য করিয়া, স্বগত ] মধ্যমা জননীর আচরণের কথা আর্য্য গোপন করিলেন।

সীতা। ওমা, এযে জটাবন্ধন ব্যাপার!

লক্ষ্মণ। বৃদ্ধ ইক্ষ্বাকু নৃপতিগণ পুত্রের প্রতি রাজ্যভার সমর্পণ করিয়া চরম বয়সে যে ব্রত অবলম্বন করিতেন, আর্য্য বাল্যকালেই সেই পবিত্র বানপ্রস্থ ব্রত আচরণ করিয়াছেন॥ ২২॥

সীতা। এই যে প্রসন্নপুণ্যসলিলা ভগবতী ভাগীরথী।

রাম। দেবি, তুমি রঘুকুলের দেবতা, তোমাকে নমস্কার করি। পূর্ব্বে সগরের অশ্বমেধ যজ্ঞে যজ্ঞীয়াশ্বের অন্বেষণে ব্যগ্র হইয়া (অশ্বের নিমিত্ত) পৃথিবীখননে নিযুক্ত যে প্রপিতামহগণ (ধর্ষণাজন্য) কোপপ্রদীপ্ত কপিলতেজে ভস্মীভূত হইয়াছিলেন; হে! ভগবতি, ভগীরথ শরীরপাতের প্রতি দৃক্‌পাত না করিয়া কঠোর তপস্যা অর্জ্জনপূর্ব্বক (স্বর্গহইতে অবতারিত) আপনার পবিত্র জলস্পর্শে বহুকাল পরে তাঁহাদিগের উদ্ধারসাধন করিয়াছিলেন॥ ২৩॥

হে জননি, আপনার এই পুত্রবধূ সীতার মঙ্গলচিন্তনে, অরুন্ধতীর ন্যায়, নিরত হউন।

*Lakshmana* :—Here is your ladyship; here is our honoured sister-in-law Mandavi and here is our dear sister-in-law Srutakirti.

*Sita* :—And, my dear boy, who is this other one?

*Lakshmana* :—[*With bashfulness and a smile aside*] Ah! Her ladyship asks about Urmila. Well, I will divert her attention to something else [*Aloud*] Honoured lady, behold, it is worth seeing. Here is the holy Bhargava, (Parasurama).

*Sita* :—[ *In alarm* ] I tremble (at his name).

*Rama* :—Holy sage, my salutation to thee

*Lakshmana* :—Honoured lady, look, here the same Bhargava is by his lordship—[*when the speech was half-uttered or not finished*]

*Rama* :—[*Interrupting.*] Dear brother, there is a good deal to be seen, show something else.

*Sita* :—[*Affectionately and respectfully looking at her husband.*] My husband, very well does this great-minded modesty redound to your glory : [Literally. Very well do you shine or appear at your best on account of this high-minded modesty]

*Lakshmana* :—Here we have come to Ayodhya.

*Rama* :—[*With tears*] Alas ! I remember it, Ah ! I remember it.

When my (great) father was living, we were just newly married and our mothers were fondly taking care of us ; those days are gone. (19).

And this Janaki too—then,—a child, with a face of charming appearance on account of her bud-like teeth, and of a few fine and thin curly locks of hair dangling about (the cheeks), gave delight to my mothers by her charming and extremely delicate tiny limbs of having the brightness of moon-shine ; and possessed of an unaffected grace. (20).

*Lakshmana* :—Here is Manthara.

*Rama* :—[*Showing other scenes, without giving heed*].

Queen, Princes of Videha, this is the same ingudi tree in the town of Sringavera where formerly a meeting took place between ourselves and our dear friend, the chief of the Nishadas. (21).

*Lakshmana* :—[*Laughing to himself*]. Ah ! My honoured brother has skipped over the matter relating to our second mother.

*Sita* :—Oh ! this is the scene of (our) tying up the matted hair.

*Lakshmana* :—My honoured brother undertook in his youth the holy vow of living an anchorite's life in the woods, which the descendants of Ikshvaku in their old age practised, after having transferred their sovereignty to their sons. (22).

*Sita* :—Here is the holy stream Bhagirathi with its limpid and sacred water.

*Rama* :—Oh Goddess, the guardian deity of the race of Raghu my salutations to you.

In the days of yore, Bhagiratha, having practised austerities, reckless if his body perished (or not), caused after a long time the salvation of his great-grand-fathers, touched by your water, O holy stream,—who in the sacrifice of Sagara had been busy in searching the (sacrificial) horse, had dug the earth (therefore), and had been burnt to ashes by the fiery energy of Kapila,on account of his wrath (provoked by an insult offered to him) (23).

Mother, be you ever intent, like Arundhati, on the welfare of your daughter-in-law, Sita.

लक्ष्मण:। भरद्वाजेन मुनिना आवेदित: विज्ञापित: कथित इति यावत् श्याम इति ख्यात: कालिन्द्या: यमुनाया: तटे तीरे स्थित: इति शेष: वट: इति कालिन्दीतट-वट:। वनस्पतिर्महान् न्यग्रोधवृक्ष:। अपुष्पा: फलवन्तो ये ते वनस्पतय: स्मृता: इति मनु:। पारस्करप्रभृतीनि संज्ञायामिति निपातनात् सुट्।

राम:। [ स्पृहया औत्सुक्येन इत्यर्थ: सह वर्त्तमानं यथा तथा—सस्पृहम्—पूर्व्वानुभूतसुखस्मरणात् स्पृहा समुत्पन्ना। अग्रे च स्पृहाकारणं स्फुटीभविष्यति ]।

राम:। विपूर्व्वात् स्मृधातो: कर्म्मणि लट् विस्मर्य्यते।

अलसेति। यत्र त्वं अध्वसञ्जातखेदात् अलसलुलितमुग्धानि अशिथिलपरिरम्भै: दत्तसंवाहनानि, परिमृदितमृणालीदुर्व्वलानि अङ्गकानि मम उरसि कृत्वा निद्राम् अवाप्ता ॥ २४ ॥

यत्र यस्मिन् प्रदेशे त्वं अध्वनि पथि सञ्जात: समुत्पन्न: य: खेद: परिश्रम: स: अध्वसञ्जातखेद: तस्मात् मार्गविलङ्घनजन्यक्लेशात् हेतो: अलसानि श्रमासमर्थानि, लुलितानि क्लान्तानि, मुग्धानि मनोहराणि पेलवानि इत्यर्थ: इति अलसलुलितमुग्धानि तानि श्रमासमर्थग्लानपेलवानि, अशिथिला: निविडा गाढा इति यावत् परिरम्भा: परिष्वङ्गा: आलिङ्गनानि इति यावत् तै: अशिथिलपरिरम्भै: गाढालिङ्गनै: दत्तं संवाहनं क्लमापनोदनाय मर्द्दनं येभ्य: तानि दत्तसंवाहनानि, प्राप्तक्लमापहमर्द्दनानि तानि परिमृदिता तापादियोगात् म्लाना या मृणाली विसलता सा इव दुर्व्वलानि इति परिमृदितमृणालीदुर्व्वलानि उपमानानि सामान्यवचनैरिति समास:। परिम्लान-विसलतातान्तानि तानि अङ्गकानि तव गात्राणि मम उरसि वक्षसि कृत्वा निधाय निद्रां स्वापं अवाप्ता लब्धवती; स प्रदेश: कथं विस्मर्य्यते इति पूर्व्वेणान्वय:। मालिनीवृत्तम्। ननमयययुतेयं मालिनी भोगिलोकै:। इति लक्षणम्।

सम् + जन् + क्त (कर्त्तरि) = सञ्जात। जायते, जज्ञे, अजनि अजनिष्ट। खिद् + घञ् = खेद। खिन्दति खिद्यते, खिन्ते; चिखिदे; अखैत्सीत् अखित्त।

परि + रभ् + घञ् = परिरम्भ। रभेरशब्लिटो: इति नुम्। सम् + वह् (णिच्) + ल्युट् = संवाहन shampooing. आप + क्त (कर्त्तरि) = आप्त। गत्यर्थत्वात् कर्त्तरि क्त:। कृत्वा संस्थाप्य, निधाय इत्यर्थ:। सामान्यार्थस्य करोते: विशेषे पर्य्यवसानम्। नि + द्रा + अङ् = निद्रा। श्रथ + किरच् = शिथिल। उपधाया इत्वं रेफलोप:। प्रत्ययरेफस्य लत्वम्। अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा:।

लक्ष्मण:। विन्ध्यस्य अद्रे: अटवी अरण्यम् इति विन्ध्याटवी तस्या: मुखं द्वारं प्रारम्भ: इति विन्ध्याटवीमुखं तस्मिन् विन्ध्यारण्यप्रवेशप्रारम्भे इत्यर्थ: विराधस्य कर्त्तु: संरोध: इति विराधसंरोध: विराधाख्यमहाकायराक्षसकर्त्तृकम् अस्माकम् अपहरण-मित्यर्थ:। अट + अवि = अटवि ; कृदिकारादक्तिन: इति दीर्घ:।

अत्र रामायणम्—

तावारोप्य तत: स्कन्धं राघवौ रजनीचर:।
विराधो विनदन् घोरं जगामाभिमुखो वनम्॥

सीता। आर्य्यपुत्रस्य हस्तेन धृतं तालवृन्तं एव आतपत्रं छत्रं यस्मिन् स आर्य्य-पुत्रहस्तधृततालवृन्तातपत्र: तम्। दक्षिणम् अरण्यम् इति दक्षिणारण्यम् तत्र प्रवेश: दक्षिणारण्यप्रवेश: तस्य आरम्भ:। इति दक्षिणारण्यप्रवेशारम्भ:। तम्। प्रेक्षे इत्यस्य कर्म्मपदम्। आतपात् त्रायते यत् तत् आतपत्रम्। आतप + त्रै + क।

राम:। एतानीति। गिरिनिर्झरिणीतटेषु वैखानसाश्रिततरूणि एतानि तानि तपोवनानि, येषु आतिथेयपरमा: नीवारमुष्टिपचना: शमिन: गृहिण: गृहाणि भजन्ते॥ २५॥

गिरीणां पर्व्वतानां निर्झरिण्य: स्रोतस्विन्य: तासां तटानि तीरभूमय: तेषु गिरि-निर्झरिणीतटेषु पर्व्वतगात्रेभ्य: नि:सरद्भिर्वारिप्रवाहै: स्यन्दमानानां सरितां तीरेषु स्थितानि इति शेष: वैखानसै: वानप्रस्थै: मुनिभि: आश्रिता: गृहत्वेनावलम्बिता: तरव: वृक्षमूलानि इत्यर्थ: येषां तानि वैखानसाश्रिततरूणि ; येषां आश्रमाणां तरुमूलानि वानप्रस्थै: समाश्रितानि तानि पूर्व्वं दृष्टानि एतानि तपोवनानि, तापसानां पुण्यानि आश्रमाणि, येषु तपोवनेषु आतिथेयपरमा: आतिथेयम् अतिथि-सत्कार: परमं मुख्यं कार्य्यं येषां ते आतिथेयपरमा अतिथिसत्कारपरा यद्वा आति-थेयेषु अतिथिसत्कारनिपुणेषु परमा: श्रेष्ठा: इति आतिथेयपरमा: इति वा विग्रह: शमिन: शमवन्त: नीवाराणां तृणधान्यानाम् मुष्टि: इति नीवारमुष्टि: तस्या: पचनं येषां ते नीवारमुष्टिपचना: देहस्थितये नीवारान्नं पचन्त: गृहिण: आश्रित-गृहस्थधर्म्मा: गृहाणि भजन्ते, पर्णशाला अध्यासते इत्यर्थ:। वसन्ततिलकं वृत्तम्।

वारिप्रवाहो निर्झरो भर:। निर्झर: अस्ति आसां इति निर्झरिण्य:। वैखानसा:

-वानप्रस्थाः तृतीयाश्रमिणः। वि + खन् + ड = विख। अन् ( to live ) + असुन् = अनस्। विखास्यते अनसश्च इति विखानसाः। विखानसाः एव इति वैखानसाः।

अतति सातत्येन गच्छति इति अतिथिः। अत + इथिन् ( उणादि ) = अतिथि। यद्वा नास्ति तिथिः द्वितीया यस्य सः अतिथिः। अतिथये साधु इति आतिथेयम्। पथ्यतिथिवसतिस्वपतेर्ढञ्। श्रम् + घिनुण् = श्रमिन्। श्रमित्यष्टाभ्यो घिनुण्। मुष् + क्तिन् = मुष्टि। पच् + ल्युट् = पचन। नीवारमुष्टिपचनाः अनायासोत्पन्नतृणधान्यादिभिः शरीरस्थितिं कुर्वन्तः ; वीतभोगस्पृहा इति भावः।

लक्ष्मणः। जनस्थानस्य खरालयस्य मध्यं गच्छति इति जनस्थानमध्यगः। जनस्थानमध्यवर्त्ती। जनस्थानं खरालयः। अन्येभ्योऽपि दृश्यते इति गमेर्डः। प्रस्रवणः नाम गिरिः शैलः। सन्ततम् अविरतम् अभिष्यन्दमानैः अभिगच्छद्भिः मुहुरुपचयं व्रजद्भिः मेघैः पयोदैः मेदुरितः स्निग्धतामापादितः वर्द्धितो वा नीलिमा नीलीवर्णः इत्यर्थः यस्य सः अभिष्यन्दमानमेघमेदुरितनीलिमा। स्वभावतो नीलानि यस्य शृङ्गाणि निरन्तरं श्रयद्भिः नूतनैस्तोयवाहैः अधिकतरं नीलत्वमापादितानि इत्यर्थः।

अविरलानां निविड़सन्निवेशानां अनोकहानां वृक्षाणां निवहैः समूहैः निरन्तराणि निरवकाशानि स्निग्धानि मसृणानि दृष्टिविलोभनानि इत्यर्थः नीलपरिसराणि श्यामपर्य्यन्तानि यानि अरण्यानि काननानि तैः परिणद्धा वेष्टिता, विस्तारमापादिता वा गोदावरी ; तया मुखराः शब्दायमानाः कन्दराः गुहाः यस्य सः अविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः। नीलः श्यामः परिसरो यस्य तत् नीलपरिसरम्। पर्य्यन्तभूः परिसरः इत्यमरः। परि + सृ + अप् = परिसर। अनसः शकटस्य अकं गतिं हन्ति इति अनोकहः। अनस् + अक + हन् + ड = अनोकह = a tree. परि + नह् + क्त = परिणद्ध। परिणाहो विशालता। The green leaves of the forest on the bank seem to have mingled their colour with that of the Godavari ; hence the river seemed to have been widened as it were. Or परिणद्ध may be simply explained as "surrounded by".

मुख + र = मुखर। खमुखकुञ्जेभ्यः वक्तव्यम् इति र प्रत्ययः। मुखर means sounding ; making noise. कन्दर a cave. दरीतु कन्दरो वास्त्रीदेवखातबिले गुहा इत्यमरः। सम्—तन् + क्त = सन्तत—पक्षे सतत। अभि + स्यन्द + शानच् = अभिष्यन्दमान। अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु इति वैकल्पिकं षत्वम्। मिह सेचने इति धातोः अच् मेघः ; कुत्वं निपात्यते। मेदुरं करोति इति

मेदुरयति। तत् करोति तदाचष्टे इति णिच्। ततः कर्म्मणि क्तः = मेदुरितः। मिद + घुरच् = मेदुर। भञ्जभासमिदो घुरच्। नील + इमनिच् भावे = नीलिमन्।

रामः। स्मरसीति हे सुतनु तस्मिन् पर्व्वते लक्ष्मणेन प्रतिविहितसपर्य्यास्वस्थयोः (आवयोः) तानि अहानि स्मरसि। तत्र सुरसनीरां गोदावरीं वा स्मरसि, तदुपान्तेषु आवयोः वर्त्तनानि स्मरसि च ॥ २६ ॥

सु शोभना तनूः शरीरं यस्याः सा सुतनूः तत्सम्बोधने हे सुतनु, नदीत्वात् ह्रस्वः। तस्मिन् पर्व्वते प्रस्रवणे गिरौ लक्ष्मणेन प्रतिविहिता कृता या सपर्य्या पूजा सेवा इत्यर्थः तया स्वस्थौ सुखमापन्नौ इति प्रतिविहितसपर्य्यास्वस्थौ तयोः लक्ष्मणस्य सेवया सुखिनोरावयोः तानि अहानि दिनानि स्मरसि किम्; तत्र गिरिसन्निधौ शोभनो रसः स्वादः यस्य तत् सुरसं सुस्वादुनीरं जलं यस्याः सा सुरसनीरा ताम स्वादुतोयां गोदावरीं स्मरसि अध्येषि वा। सरसतीराम् इतिपाठे सरसं सुखसेव्यं तीरं तटं यस्याः सा सरसतीरा तामिति व्याख्यानम्। तदुपान्तेषु तस्याः गोदावर्य्याः उपान्तेषु प्रान्तेषु— तीरभूमिसन्निहितप्रदेशेषु आवयोः वर्त्तनानि अवस्थानानि च स्मरसि किम्।

सपर्पूजायां इति धातोः कण्ड्वादिभ्यो यक् इति यक्। ततः सपर्य्यधातोः भावे अ प्रत्ययः। अ प्रत्ययादिति। पूजा नमस्यापचितिः सपर्य्यार्च्चार्हणाः समाः इत्यमरः। स्वस्मिन् तिष्ठति यः सः स्वस्थः। स्वस्था च स्वस्थश्च तौ स्वस्थौ। पुमान् स्त्रिया इति पुंलिङ्गैकशेषः। मालिनी छन्दः। ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणम्।

अपिचेति—आसत्तियोगात् अविरलितकपोलं मन्दं मन्दं अक्रमेण किमपि किमपि जल्पतोः अशिथिलपरिरम्भव्यापृतैकैकदोष्णोः आवयोः अविदितगतयामा रात्रिः एव व्यरंसीत् ॥ २७ ॥

आसत्तिः आसन्नभावः अन्योन्यसंलग्नत्वमित्यर्थः तस्याः योगात् अविरलितौ अनन्तरौ परस्परसंसक्तौ कपोलौ गण्डौ यस्मिन् कर्म्मणि तद् यथा तथा अविरलितकपोलं अन्योन्यसंसक्तगण्डं यथा तथा मन्द मन्द अनुच्चस्वरं इत्यर्थः वीप्सायां द्विरुक्ति अक्रमेण क्रमं विना यथास्मृत्युपस्थितमित्यर्थः प्रकृत्यादिभ्यश्चोपसंख्यानमिति तृतीया किमपि किमपि रहस्यं किञ्चिदित्यर्थः जल्पतोः भाषमाणयोः अशिथिलः गाढः परिरम्भः आलिङ्गनं तत्र व्यापृतः निरतः एकः एकः दोः बाहुः ययोः तौ अशिथिलपरिरम्भव्यापृतैकैकदोषौ तयोः अशिथिलपरिरम्भव्यापृतैकैकदोष्णोः गाढालिङ्गनाभिरतान्योन्यभुजयोः आवयोः अविदितं अज्ञातं यथा तथा गताः यामाः प्रहराः यस्याः सा अविदितगतयामा अज्ञातातीतप्रहरा रात्रिः निशा एव व्यरंसीत् विरता प्रभाता आसीत् जल्पनं तु न निवृत्तम् इत्येवकारेण द्योत्यते। मालिनी वृत्तम्।

आङ् पूर्व्वात् सद्‌धातोः क्तिन् आसत्तिः। विरलं करोति इति विरलयति। ततः कर्म्मणि क्तः विरलितः। न विरलितः इति अविरलितः। परिपूर्व्वात् रभेर्घञ् परिरम्भः। आवयोरित्यत्र शेषे षष्ठी। व्यापृतः एकः दोः ययोः इति समासे द्विवक्तस्य एकशब्दस्य वहुव्रीहिवद्‌भावः। एकं वहुव्रीहिवत्। सुपः लोपार्थं पुम्वद्‌भावार्थश्चेदम्। एतावता एव एकशब्दस्य द्विवक्तिरप्यनुज्ञायते। नाव "नित्य-विप्सयो" रिति सूत्रस्यावकाशः; "वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सन-भर्त्सनेषु" इत्यस्यापि नोपयोगः। अत्र कर्म्मव्यतीहारः व्यज्यते। सीतायाः एकः वाहुः रामस्य आलिङ्गने उद्युक्तः रामस्यापि एकः वाहुः सीताया परिरम्भणे व्यापृतः अभूत्। व्यापृतैकैकदोष्णोः इत्यत्र दोष् शब्दस्य दोषन् इत्यादेशः पाक्षिकः असर्व्वनाम-स्थाने विभक्तौ। पक्षे व्यापृतैकैकदोषोः इति रूपम्। तथाच सूत्रम्—"पद्दन्नो-मास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस् प्रभृतिषु।"

अविदितं यथा स्यात् तथा गता यामा यस्याः, यद्‌वा अविदिताश्च ते गताः तथोक्ताः यामाः यस्याः इति विग्रहः। रात्रिरेव इत्यत्र एवकारः अन्ययोगं वारयति; तथाचोक्तम्—अयोगमन्ययोगञ्चात्यन्तायोगमेवच, व्यवच्छिनत्ति धर्म्मस्य एवकारस्त्रिधामतः॥

अत्र विरतिरूपधर्म्मस्य जल्पनरूपे अन्यस्मिन् योगं वारयति एवकारः। रात्रौ प्रभा-तायामपि जल्पनं न निवृत्तमित्यर्थः। व्यरंसीदित्यत्र व्याङ्परिभ्यो रमः इति परस्मैपदम्।

लक्ष्मणः। शूर्पवन्नखाः यस्याः सा शूर्पणखा। संज्ञाशब्दोऽयं न विग्रहमर्हति। संज्ञायां णत्वम्। पूर्व्वपदात् संज्ञायामगः इति नखशब्दस्य नकारस्य णत्वम्। शूर्पणखा रावणस्य भगिनी।

सीता। एतावत् ते दर्शनम्। इतः परं तव दर्शनं दुर्लभं भविष्यति इत्यर्थः।

रामः। विप्रयोगः विरहः तस्मात् त्रस्ता भीता इति विप्रयोगत्रस्ता तत् सम्बोधने, विप्रयोगत्रस्ते विरहभीते। चित्रमेतत्। नेयं परमार्थतः शूर्पणखा। किन्तु एतत् खलु तस्याश्चित्रम्। अतो विरहशङ्का अमूला इतिभावः।

सीता। चित्रस्थोऽपि दुर्ज्जनः असुखस्य निमित्तं भवति इत्यर्थः।

रामः। जनस्थानस्य पञ्चवट्याः वृत्तान्तः उदन्तः सीताहरणादिः वर्त्तमानः प्रत्यक्षः इव प्रतिभाति; अनुभूयते प्रतीयते इत्यर्थः।

लक्ष्मणः। अथेति। अथ पापैः रक्षोभिः कनकहरिणच्छद्मविधिना इदं तथा वृत्तम् यथा चालितमपि व्यथयति। शून्ये जनस्थाने विकलकरणैः आर्य्यचरितैः ग्रावा अपि रोदिति वज्रस्य अपि हृदयं दलति॥ २८॥

अथ अनन्तरं शूर्पणखाचित्रप्रदर्शनानन्तरं इत्यर्थः सीताहरणचित्रं निर्द्दिशन्नाह इदमिति। पापैः दुरात्मभिः क्रूरकर्म्मभिः रक्षोभिः राक्षसैः मारीचादिभिः कर्त्तृभिः

कनकस्य सुवर्णस्य हरिण: कनकहरिण: सुवर्णमयो मायामृग: स एव छद्म तस्य वा छद्म छलं कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमर: इति कनकहरिणछद्म तस्य विधि: अनुष्ठानं इति कनकहरिणछद्मविधि: तेन करणेन इदं सीताया: हरणमित्यर्थ: ,तथा वृत्तं जातं भूतमिति यावत् यथा चालितमपि विशोधितमपि प्रतिक्रान्तमपीत्यर्थ: 'व्यथयति पीडयति, चिन्त्यमानं सत् मन:पीडां जनयति इत्यर्थ:। तथाहि शून्ये देव्या जानक्या विरहिते जनस्थाने पञ्चवट्यां विकलानि विह्वलानि करणानि इन्द्रियाणि चक्षुरादीनि येषु तै: विकलकरणै:, करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपि इत्यमर:। आर्य्यस्य रामस्य चरितै: कर्म्मभि: विलपनादिभि: ग्रावा शैलोऽपि का कथा प्राणिनामिति भाव:। रोदिति अश्रु विमुञ्चति, रामस्य विलापदर्शनेन शिलोच्चया: अपि तुहिनपातमिषेण अश्रूण्यमुञ्चन्नित्यर्थ: ; वज्रस्य अपि अतिकठिनसारस्य कुलिशस्यापि हृदयं दलति स्फुटति दीर्य्यति इत्यर्थ:। अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चया: इत्यमर:। सीताविरहितस्य रामस्य सरोदनचेष्टितान्यवलोक्य काननभूमि: समदु:खा चुक्रोश इव। पाषाणोऽपि द्रवीभूत: अतिनिष्ठुरस्यापि वस्तुनोऽन्तर्हृदयं विदीर्णमिवाभवत् इत्यर्थ:। शिखरिणी वृत्तम्। रसैरुद्रैश्छिन्ना यमनसभलाग: शिखरिणी इति लक्षणम्। असम्बन्धे सम्बन्धरूपा अतिशयोक्तिरलङ्कार:। रक्षोभिरिति कर्त्तरि तृतीया उभयप्राप्तौ कर्म्मणि इति समासान्तर्गतकनकहरिणछद्म इति कर्म्मपदे षष्ठीप्रयोगात् कर्त्तृकारके तृतीया, विधिरिति कृदयोगात्। कनकहरिणच्छद्मविधिना इत्यत्र करणे तृतीया। हेतौ वा। इदं दैवदुर्विलसितं सीताहरणरूपं तथा वृत्तम् परिणतम् भूतमित्यर्थ:। रक्षोभि: इदं तथा वृत्तमाचरितमिति व्याख्यानं न सम्यक् वृतेरकर्म्मकत्वात्। छादयते: मनिन् छद्म। अस्यैव श्लोकस्य चतुर्थचरण: आर्य्यासप्तशतीकारेण गोवर्द्धनाचार्य्येण भवभूते: करुणरसवर्णने नैपुण्यमधिकृत्य प्रकारान्तरेण प्रयुक्त:।

भवभूते: सम्बन्धाद्भूधरभूरेव भारती भाति।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥

सीता। क्लान्त: क्लिष्ट: इत्यर्थ:। मदर्थं प्रभूतं क्लेशं दु:खं च अवाप्तवानसि। क्लम् + क्त ( कर्त्तरि ) = क्लान्त।

लक्ष्मण:। [ निर्व्वर्ण्य निपुणं दृष्ट्वा आकूतेन अभिप्रायेण सह वर्त्तमानं यथा तथा साकूतम् साभिप्रायम् ]

अयमिति। अयं बाष्पौघ: त्रुटित: मुक्तामणिसर: इव धाराभि: विसर्पन् जर्जरकण: धरण्यां लुठति। भराध्मातहृदय: आवेग: निरुद्ध: अपि स्फुरदधरनासापुटतया परेषाम् उन्नेय: भवति च ॥ २९ ॥

अयं ते बाष्पाणां अश्रूणां ओघ: राशि: समूह इति यावत् इति बाष्पौघ: अश्रुनिचय: त्रुटित: छिन्नबन्धन: मुक्ताप्रधान: मणिसर: मणिहार: इति मुक्तामणिसर: मौक्तिकै:

मणिभिश्च ग्रथितो हारः इव धाराभिः अविच्छिन्नप्रवाहेण धरण्यां विसर्पन् क्षित्यां पतन् जर्ज्जराः विशीर्णाः कणाः क्षुद्रांशाः शीकराः यस्य सः जर्ज्जरकणः भूसम्पर्केण विकीर्णकणः लुठति भूमिमुपश्लिष्यति। छिन्नसूत्रस्य मणिहारस्य वाष्पावदाताः मणयो यथा धाराक्रमेण भूमौ पतित्वा इतस्ततो विकीर्णा भवन्ति तथा तव शुभ्राः अश्रुबिन्दवः अच्छिन्नप्रवाहेण क्षितौ पतित्वा विशीर्णकणाः विलुठन्ति। किञ्च भरेण अतिशयेन आध्मात आपूरितं सन्तापितं वा हृदयं यस्य स भराध्मातहृदयः, यस्य आधिक्येन तव क्रत्स्नं हृदयमापूरितं तादृशः आवेगः शोकपूरः निरुद्धः निवारितः प्रकाशी-भवनोन्मुखः आभ्यन्तरेण प्रयत्नेन नियन्त्रितः सन्नपि स्फुरदधरनासापुटतया अधरश्च नासापुटश्च तयोः समाहारः इति अधरनासापुटम्। (प्राण्यङ्गत्वात्द्वन्द्वैकवद्भावः।) स्फुरत् कम्पमानं अधरनासापुटं यस्य स स्फुरदधरनासापुटः तस्य भावः तत्ता तया स्फुरदधरनासापुटतया, ओष्ठस्य नासाग्रस्य च कम्पेन परेषां अन्येषां क्रत्यानां कर्त्तरि वेति षष्ठी, उन्नेयः ऊहनीयः बोधयोग्यः इत्यर्थः भवति। नासापुटस्य ओष्ठस्य च विकम्पं दृष्ट्वा अन्ये अन्तर्निरुद्धमपि भवतः शोकावेगम् अनुमातुं शक्नुवन्ति। शिखरिणी वृत्तम्। त्रुट् धातोः अकर्म्मकात् कर्त्तरि क्तः त्रुटितः। यद्वा सकर्म्मकोऽपि अयं वर्त्तते ; तस्मात् कर्म्मणि क्तः त्रुटितः। त्रुटन्ति सर्व्वसन्देहाः क्षुभ्यन्ति ग्रन्थयो हृदि इति कविरहस्यम्। वि + सृप् + शतृ = विसर्पत्। सर्पति ; ससर्प, असार्प्सीत् अस्राप्सीत्, असृपत्। सृप्तः। धाराभिरिति करणे तृतीया। जर्ज्जधातोः अरन् जर्ज्जरः। नि + रुध् + क्त ( कर्म्मणि ) = निरुद्ध। आङ् + विज् + घञ् = आवेग। उद् + नी + यत् (कर्म्मणि) = उन्नेय। आङ् + ध्मा + क्त (कर्म्मणि) = आध्मात। ध्मा—धमति ; दध्मौ ; अध्मासीत्।

राम:। तत्कालमिति—प्रियजनविप्रयोगजन्मा तीव्रः अपि दुःखाग्निः तत्कालं प्रतिक्रतिवाञ्छया विसोढः। मनसि पुनः विपच्यमानः हृन्मर्मव्रणः इव वेदनां करोति ॥ ३० ॥

प्रियः दयितः जनः प्रियजनः सीतारूपः तेन विप्रयोगः विरहः तस्मात् जन्म उत्पत्तिर्यस्य स प्रियजनविप्रयोगजन्मा सीताविच्छेदसमुत्पन्नः, (अवज्ज्योहि बहुब्रीहि र्व्यधिकरणो जन्माद्युत्तरपद इति वामनः) तीव्रः उग्रः नितरां दुःसह इति भावः दुःखमग्निरिव इति दुःखाग्निः शोकानलः, प्रतिक्रतेः प्रतिकारस्य वैरशोधनस्य वाञ्छा इच्छा तया हेतुना विसोढः कथमपि सहनयोग्यां दशां नीतः। किन्तु अधुना मनसि चेतसि विपच्यमानः विपाकं उपेयिवान् आलोच्यमानः इत्यर्थः हृदयस्य मर्म्मणि गूढ़स्थाने रूढ़ग्रन्थिः व्रण इव वेदनां निरतिशयक्लेशं करोति उत्पादयति। विपाकं गतः हृन्मर्म्मणि सञ्जातो व्रणः यथा अरुन्तुदां पीड़ां जनयति तथा सीताहरणजनितः अवमानसञ्जातः शोकः इदानीं स्मर्य्यमाणः महतीं यातनां समुत्पादयति। तदानीन्तु

प्रतीकारेच्छया समुद्दीपितः क्रोधः शोकं निरस्य हृदयमापूरयत। शोकः निर्व्विषयीकृतः अभवदितिभावः। प्रस्रवणोन्नतम्। नवग्रामैरर्मनजरगाः प्रस्रवणीयमिति लक्षणम्।

सः कालः इति तत्कालः। तम्। अत्यन्तसयोगे द्वितीया। वि + प्र + युज् + घञ् = विप्रयोग। प्रति + कृ + क्तिन् = प्रतिकृति। वाञ्छ + भावे अ (स्त्रियां टाप्) = वाञ्छा। गुरोश्च हलः इति भावे अः। वि + सह + क्त (कर्म्मणि) = विसोढ। वि + पच् + शानच् (कर्म्मकर्त्तरि) = विपच्यमान। अस्त्रीलिङ्गः व्रणशब्दः। व्रणोऽस्त्रियामीर्म्ममरुः क्लीवे इत्यमरः। विद् + युच् (भावे) वेदना। ण्यासश्रन्थः-युच् इति सूत्रे घट्टिवन्दिविदिभ्यश्चेति वक्तव्यात् युच्। दुःखाग्निरित्येव उपमितसमासः एव युक्तः; विसोढः वेदनां करोति इत्यादीनां उपमासाधकत्वात्। तीव्रैकान्तनितान्तानि गाढवाढदृढानि चेत्यमरः। प्रीणाति इति प्रियः; प्री + क (कर्त्तरि)। इगुपधज्ञाप्रीकिरः कः।

লক্ষ্মণ। ভরদ্বাজ মুনিপ্রোক্ত, চিত্রকূটপর্ব্বতগামী পথস্থিত, যমুনাতীরবর্ত্তী, শ্যাম নামে প্রসিদ্ধ এই সেই বটবৃক্ষ।

রাম। [ সস্পৃহভাবে অবলোকন করিলেন ]

সীতা। আর্য্যপুত্র, এ প্রদেশের কথা মনে হয় কি ?

রাম। অয়ি (প্রিয়ে), কিরূপে ভুলিব ?

এই স্থলে তুমি পথশ্রমে পরিক্লান্ত, অলস ও মুগ্ধ নিজ গাত্র আমার বক্ষঃস্থলোপরি নিহিত করিয়া শয়ন করিয়াছিলে; এবং গাঢ় আলিঙ্গনে মৃদিতমৃণালীর ন্যায় দুর্ব্বল তোমার অঙ্গলতিকার সংবাহন ক্রিয়া সম্পাদিত হইলে নিদ্রিত হইয়া পড়িয়াছিলে॥ ২৪ ॥

লক্ষ্মণ। বিন্ধ্যাটবীপ্রবেশপ্রারম্ভে বিরাধ কর্ত্তৃক আমাদিগের সংরোধ এই চিত্রিত হইয়াছে।

সীতা। ইহা দেখিবার প্রয়োজন নাই। দক্ষিণারণ্যে আমার প্রবেশের সময় আর্য্যপুত্র স্বহস্তে (আতপ নিবারণের জন্য) তালবৃন্তরূপ আতপত্র ধরিয়াছিলেন সেই চিত্র অবলোকন করি।

রাম। গিরিনির্ঝরিণীর তটপ্রদেশে এই সেই তপোবনসমূহ। যে তপোবনের বৃক্ষমূল বৈখানসগণ আশ্রয় করিয়াছেন এবং যে তপোবনে শমপরায়ণ ভোগনিস্পৃহ, অতিথিসৎকারনিরত, নীবারৌদন পাককর্ত্তা, গৃহিগণ গৃহস্থজীবন অতিবাহিত করিয়া থাকেন॥ ২৫ ॥

লক্ষ্মণ। জনস্থানের মধ্যবর্ত্তী এই গিরিপ্রস্রবণ। সতত সঞ্চরমাণ মেঘরাজিতে উহার নীলিমা ঘনীভূত ও স্নিগ্ধভাব প্রাপ্ত হইয়াছে, এবং উহার কন্দরপ্রদেশ অবিরল-সন্নিবিষ্ট বৃক্ষশ্রেণী নিবন্ধন নিরন্তরস্নিগ্ধনীলপর্য্যন্তকাননভূমি পরিবেষ্টিত গোদাবরীর কল্লোল-শব্দে প্রতিনিনাদিত।

রাম। হে শোভনাঙ্গি, সেবাপরায়ণ লক্ষ্মণ আমাদিগের সুখস্বাচ্ছন্দ্য বিধানার্থ সমস্ত ব্যবস্থা করিয়া দেওয়ায় আমরা স্বস্থ হইয়া ঐ পর্ব্বতে যে দিনকতিপয় অতিবাহিত করিয়াছিলাম তাহা তোমার স্মরণ হয় কি? তত্রত্য স্বাদুতোয়া গোদাবরীর কথা স্মরণ হয় কি? এবং গোদাবরীর উপান্তভূমিতে আমরা যে অবস্থান করিতাম, তাহা মনে হয় কি? ॥ ২৬ ॥

এবং—

অত্যন্ত সন্নিকর্ষহেতু আমরা উভয়ে পরস্পরের গণ্ডে গণ্ড সংলগ্ন করিয়া যাহা কিছু চিত্তে উদিত হইতেছিল তাহাই ক্রমব্যতিরেকে ধীরে ধীরে অনুচ্চাক্ষরে গল্প করিতেছিলাম; আমাদের উভয়ের এক একটী বাহু গাঢ় আলিঙ্গনে ব্যাপৃত ছিল, এই অবস্থায় রাত্রির যামগুলি অজ্ঞাতসারে অতিবাহিত হইয়া গেল এবং রজনীই নিবৃত্ত হইল; (গল্প নিবৃত্ত হয় নাই) ॥ ২৭ ॥

লক্ষ্মণ। পঞ্চবটী প্রদেশে এই শূর্পণখা।

সীতা। হা আর্য্যপুত্র, এই পর্য্যন্ত আপনার দর্শন শেষ হইল।

রাম। অয়ি বিয়োগভীরু, এ চিত্র!

সীতা। চিত্রই হউক অথবা যাহা হউক; দুর্জ্জন অসুখোৎপাদন করিয়া থাকে।

রাম। আহা, জনস্থানের বৃত্তান্ত বর্ত্তমান ঘটনার ন্যায় প্রতীত হইতেছে।

লক্ষ্মণ। পাপাত্মা রাক্ষসেরা সুবর্ণময় হরিণের ছলনা করিয়া এমন নৃশংস আচরণ করিয়াছিল যে যদিও তাহার সম্যক্ প্রতিবিধান করা হইয়াছে তথাপি উহা (স্মরণ করিলে) যন্ত্রণা উৎপাদন করে। জানকীবিহীন শূন্য জনস্থানে আর্য্য রামচন্দ্র বিহ্বলেন্দ্রিয় হইয়া যে বিলাপ ও রোদনাদি করিয়াছিলেন, তাহাতে পাষাণও দ্রবীভূত হয়, বজ্রেরও হৃদয় বিদীর্ণ হয় ॥ ২৮ ॥

সীতা। [অশ্রু মোচন করিয়া] হে দেব, রঘুকুলানন্দ, আমার জন্য আপনি এইরূপ ক্লেশ পাইয়াছিলেন।

লক্ষ্মণ। [নিপুণভাবে রামকে অবলোকন করিয়া, সাভিপ্রায়ে] আর্য্য, এ কি?

আপনার এই অশ্রুনিচয় ছিন্নসূত্র মুক্তাময় মণিহারের ন্যায় সন্তত ধারায় ভূমিপৃষ্ঠে নিপতিত হইয়া বিকীর্ণকণ ও বিলুঠিত হইতেছে। আধিক্যবশতঃ সমস্ত হৃদয়কে পরিপূর্ণ করিয়া সমুচ্ছলিত আপনার শোকাবেগ অন্তর্নিরুদ্ধ হইলেও অধর ও নাসাপুটের কম্পবশতঃ অন্যের অনুমানযোগ্য হইতেছে ॥ ২৯ ॥

রাম। বৎস,—প্রিয়জনের বিরহজন্য অতি তীব্র ও শোকানল প্রতিকারেচ্ছায় তখন সহ্য করিয়াছিলাম; এখন মনে মনে চিন্তাবশে বিপাকপ্রাপ্ত হইয়া উহা হৃন্মর্ম্ম-প্রদেশে সঞ্জাত ব্রণের ন্যায় যাতনাপ্রদ হইয়াছে ॥ ৩০ ॥

*Lakshmana* :—Here is that Banyan tree, the king of the forest, by name Syama, which stands on the bank of the Kalindi (Jamna), and is on the side of the way leading to the mount Chitrakuta, and was spoken of by (the sage) Bharadwaja.

*Rama* :—[*Looks at it wistfully*].

*Sita* :—Does my husband remember this place?

*Rama* :—How can it be forgotten, my dear? (It is the place) where you fell asleep, after having reposed on my breast your limbs which were feeble as a withered or crushed lotus plant which were wearied, drooping and charming (at the same time) on account of the fatigue of journey, and to which shampooing was administered as a restorative by a fast and close embrace (24)

*Lakshmana* :—Here is the [scene of the] obstruction caused by Viradha at the entrance of the Vindhya forest.

*Sita* :—No good looking at it. I will see how we began to enter the southern forest, when my husband held with his own hands a palm-leaf umbrella (over my head).

*Rama* :—These are the self-same hermitages on the banks of mountain rivulets, where hermits live under the shades of trees, and where householders of a calm and quite turn of mind, devoted to doing the rites of hospitality, and living upon handfuls of wild rice, have their homes. (25).

*Lakshmana* :—Here is the mountain named Prasravana, situated in the middle of Janasthana, the azure hue of which is thickened and rendered glossy by clouds constantly dripping and moving (towards it), and the caves of which are noisy with the (roaring) Godavari which seems to have been broadened by forests having an unbroken, glossy, blue outskrit by reason of a dense multitude of trees.

*Rama* :—O you of a fair frame, do you remember those days we passed on the mountain, ourselves being comfortable on account of the service done by Lakshmana? And do you remember also the Godavari there with its sweet water? And do you recall also our wanderings about the sides of the hill (or the river)? (26).

And also,—

(Here) while we were talking on this and that thing in a low voice without any method, our cheeks pressing each other on account of a close contact, and one arm of each engaged in a fast

embrace, the night drew to its close without our noticing how its several watches passed away. (27).

*Lakshmana* :—Here is Surpanakha at Panchavati.

*Sita* :—Ah ! My husband ! Thus far (and no further) is your sight (granted to me).

*Rama* :—O you are afraid of separation ! It is but a picture.

*Sita* :—Be it as it may. A wicked person causes misery.

*Rama* :—Alas ! The incidents of Janasthan seem to be an occurrence of the present time.

*Lakshmana* :—And then the wicked Rakshasas by using the stratagem of the golden deer perpetrated such an act, which, though fully revenged, causes pain. Even a stone weeps and the heart of adamant breaks at the doings ( bewailings ) of our elder brother with his senses overwhelmed in the lonely tract of Janasthana. (28).

*Sita* :—[ With tears ] O my lord, the delight of Raghu's race, you were thus afflicted on my account.

*Lakshmana* :—[ *Marking Rama attentively and feelingly* ] Honoured brother, what is this ? This flood of tears issuing in a continuous flow rolls in broken drops on the ground like a necklace of pearls and gems with its string broken. And the agitation (of your mind) though suppressed within is capable of being perceived by others on account of the flush and quiver of your lower lip and the nostrils. (29).

*Rama* :—My dear boy, at that time the fire of grief which had its rise from the separation from my beloved one, though intense, was borne on account of the desire of revenge ; but now being thought over and over in my mind it causes anguish like a boil festering in the very core of my heart. (30)

सीता । अतिशयिता भूमिः इति अतिभूमिः आधिक्यं उत्कर्षः इत्यर्थः । तामतिभूमिं गतेन ; अतिप्रवृद्धेन ; रणरणकेन उद्वेगेन । आर्य्यपुत्रेण स्वामिना रामचन्द्रेण शून्यः विरहितः इति आर्य्यपुत्रविरहितः । तम् । शूर्पणखायाश्चित्रदर्शनेन पूर्व्वमनुभूतस्य विरहस्य वर्त्तमानतया प्रतिभानात् आत्मानं पत्या विरहितं सीता मन्यते ॥

लक्ष्मणः । अन्यतः अन्यस्मिन् विषये क्षिपामि चित्तं सञ्चारयामि । मनूना

अन्तरं अवकाशः इति मन्वन्तरम्। मन्वन्तरं व्याप्य पुराणः इति मन्वन्तरपुराणः अत्यन्तसंयोगे इति द्वितीयासमासः। यद्वा मन्वन्तरं इव पुराणः इति मन्वन्तरपुराणः। उपमानानि सामान्यवचनैरिति समासः। अन्यः मनुः इति मन्वन्तरम्। मयूरव्यंसकादित्वात् समासः। तस्मात मन्वन्तरादपि पुराणः इति मन्वन्तरपुराणः इति वीरराघवः। गृध्राणां राजा इति गृध्रराजः जटायुः। तस्य। राजाहःसखिभ्यष्टच् इति समासान्तः टच्। चरित्रमाचरणं वृत्तमिति यावत्। विक्रमः पराक्रमः शौर्य्यम्। चरित्रञ्च विक्रमश्च इति चरित्रविक्रमौ तयोः उदाहरणम् वर्णनम् चित्रणमित्यर्थः। इति चरित्रविक्रमोदाहरणम्। सीतायाः समुद्धारार्थं प्राणानपि पणीकृत्य असौ गृध्रराजः रावणेन सह युयुधे ममार च इति वृत्तान्तः आलेख्ये समर्पितः।

सीता। निर्व्यूढः निःशेषेण सविशेषं ऊढः धृतः इति निर्व्यूढः। सविशेषं निरतिशयं यथा तथा प्रदर्शितः इत्यर्थः। अपत्ये पुत्रे पुत्रस्थानीये इत्यर्थः रामे स्नेहः इति अपत्यस्नेहः। स्नुषायाः उद्धरणाय प्राणानपि समुत्सृज्य पुत्रस्नेहस्य चरमः उत्कर्षः प्रदर्शितः इत्यर्थः। नञ् + पत् + यत् = अपत्य। स्निह + घञ् = स्नेह।

रामः। कश्यपस्य गोत्रापत्यं पुमान् इति काश्यपः। काश्यपात् विनतायां समुत्पन्नस्य गरुत्मतः पुत्रोऽयं जटायुः। शकुन्तानां पक्षिणां राजा इति शकुन्तराजः। पक्षिराजः। त्वमिव दृश्यते इति त्वादृशः त्वत्तुल्यः इत्यर्थः। तदादिषु दृशेरनालोचने इति कञ् प्रत्ययः। आ सर्व्वनाम्नः इति आकारोऽन्तादेशः। तीर्थस्य पुण्यक्षेत्रतुल्यस्य तद्वत् पावनस्य इत्यर्थः। यद्वा तीर्थस्य उपाध्यायस्य हितोपदेष्टुः इत्यर्थः। सम्भवः उत्पत्तिः जन्म इत्यर्थः।

लक्ष्मणः। जनस्थानस्य पश्चवर्त्याः पश्चिमतः पश्चिमे भागे। जनस्थानपश्चिमः इति पाठे तु जनस्थानात् पश्चिमः इति विग्रहे जनस्थानपश्चिमः। दनुः नाम कबन्धः इति दनुकबन्धः। तेन अधिष्ठितः अध्युषितः इति दनुकबन्धाधिष्ठितः। कबन्धं सलिले प्रोक्तं अपमूर्द्धकलेवरे। कबन्धोऽस्त्री क्रियायुक्तापमूर्द्धकलेवरे। क्लीवं जले पुंस्युदरे वाहुरक्षोविशेषयोरितिमेदिनी। दनुर्नाम मूर्द्धहीनः उदरस्थितवदनः राक्षसविशेषः तेन अध्युषितोऽयं दण्डकारण्यस्य भूभागः प्रदेशः। चित्रकुञ्जवान् इति अस्य भूभागस्य नाम। विचित्रैः कुञ्जैः लतादिपिहितोदरस्थानैः सनाथीकृतत्वादस्य प्रदेशस्य तथाविधा संज्ञा। ऋष्यमूकः पर्व्वतविशेषः किष्किन्ध्यासन्निकृष्टे वर्त्तते। तत्र मतङ्गनामा ऋषिः यस्य शापादभीतः वाली ऋष्यमूकपर्व्वतं न कदापि प्रायात्। सिद्धा तपःसिद्धा शवरी शवरजातीया स्त्री इति सिद्धशवरी। पम्पा अभिधानं यस्य तत् पम्पाभिधानम्, पम्पाख्यम्। सरः सरोवरः ह्रदः इति यावत्। रामायणे तु शवरी इति तापस्याः नाम अभिहितम्। सा च तापसी आसीत्।

तेषां (मतङ्गशिष्याणां) गतानामद्यापि दृश्यते परिचारिणी। श्रमणी शवरी

नाम काकुत्स्थ चिरजीविनी। त्वाम्तु धर्म्मे स्थिता नित्यं सर्व्वभूतनमस्कृताम्। दृष्ट्वा देवोपमं रामं स्वर्गलोकं गमिष्यति। अत्र रामानुजः शवरी नाम शवरीत्याख्या श्रमणी तापसी।

The Rishyamuka, the Pampa etc , are still known by the same names in the neighbourhood of the modern town of Anagundi, the ancient capital of the monkey chiefs on the Tungabhadra. The lake Pampa is regarded the same as the river Pennair.

सीता। अमर्षः क्रोधः धीरत्वं धैर्य्यञ्च इति अमर्षधीरत्वे विसृष्टे परित्यक्ते अमर्षधीरत्वे यस्मिन् कर्म्मणि तद् यथा तथा विसृष्टामर्षधीरत्वम्। शोकावेगस्य उच्छलितत्वात् कोपं धैर्य्यं च विहाय इत्यर्थः। प्रमुक्तः कण्ठः यस्मिन् कर्म्मणि तद् यथा तथा प्रमुक्तकण्ठम्। उच्चैः इत्यर्थः। क्रियाविशेषणमिदं द्वयम्। रुदितं इति रुद्धातोः भावे क्तः।

रामः। रमणीयम् चित्ताकर्षकम्, मनोहरमिति यावत्।

एतस्मिन्निति। एतस्मिन् मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदरुदण्डपुण्डरीकाः कुवलयिनः भुवः विभागाः वाष्पाम्भः परिपतनोद्गमान्तराले संदृष्टाः मयेति शेषः ॥३१॥

एतस्मिन् पम्पासरसि मदेन हर्षेण तारुण्यादिजन्यविकारविशेषेण वा कलानां अव्यक्तमधुरध्वनीनां मल्लिकाक्षाणां राजहंसविशेषाणां राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिता मलिनैर्मल्लिकाक्षास्ते धार्त्तराष्ट्राः सितेतरैरित्यमरः—पक्षैः गरुद्भिः व्याधूता कम्पिताः अतएव स्फुरन्तः चञ्चलाः उरवः दीर्घाः दण्डाः नालानि येषां तानि मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डानि, तथोक्तानि पुण्डरीकाणि श्वेतपद्मानि येषु ते मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीका, कुवलयानि इन्दीवराणि नीलपद्मानि इत्यर्थः वाहुल्येन सन्ति येषु ते कुवलयिनः भुवः धरित्र्याः विभागाः खण्डाः वाष्पाम्भसां अश्रूणां परिपतनं उपचयवशात् गौरवेण भुविपतनं, उद्गमः पुनः पक्ष्मराजिषु आविर्भावः इति वाष्पाम्भःपरिपतनोद्गमौ तयोः अन्तराले अवकाशे मया दृष्टाः अवलोकिताः। त्वद्विरहेण दूयमानहृदयः निरन्तरमेव अश्रूणि अमुञ्चम्। सञ्चितानां अश्रूणां पक्ष्मस्य पतनं पुनश्च पक्ष्मपङ्क्तौ उदयः इत्यनयोः मध्ये स्वल्पोऽपि यो दर्शनावकाशः मया लब्धः तस्मिन् पम्पासरसः कमलकह्लारादिजलजपुष्पैरलङ्कृताः विभागाः अवलोकिताः। केचित्तु शोकमिममित्यमपि व्याचक्षते मलिनचरणचञ्चूनां राजहंसविशेषाणां पक्षपवनैरुत्कम्पितश्वेतपद्मैरलङ्कृता अपि पम्पायाः विभागाः मुहुरुपचीयमानाश्रुसम्भारैः कलुषितदृष्टित्वाद् रामेण ईषद्धूसरवर्णाः अतएव इन्दीवरैः शोभमाना इव अदृश्यन्त इति। प्रक्षर्षिणीवृत्तम्। लक्षणमुक्तम्। मल्लिका

इव अक्षिणी येषां ते मञ्जिकाक्षाः । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् इति षच्प्रत्ययः। आङ्पूर्व्वात् धूञ कम्पने इति धातोः कर्म्मणि क्तः आधूतः ।

धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च ॥

वाष्प एव अम्भः इति वाष्पाम्भः । वाष्पशब्देनैव सिद्धे अम्भःशब्दग्रहणम् सामान्यविशेषभावदर्शनार्थम् । चूततरुवद् अपौनरुक्त्यम्।

लक्ष्मणः । हनूमान् शरादीनाञ्चेति संज्ञायां दीर्घः ।

सीता । चिरं निर्व्विसः खिन्नः क्लेशमुपभुञ्जानः इत्यर्थः यः जीवलोकः मनुष्यगणः इत्यर्थः तस्य प्रत्युद्धरणं क्लेशविमोचनं इति चिरनिर्व्विसजीवलोकप्रत्युद्धरणम् । तेन गुरुकं उपकारी इति सुप्सुपेति समासः । उपकर्त्तुं शीलमस्य इति उपकारी । उपकरोतेः णिनिः । हेतुतृतीयया अपि समासः इष्यते । चिरनिर्व्विसस्य रावणस्य दौःशील्येन चिरक्लिष्टस्य जीवलोकस्य जगतः प्रत्युद्धरणेन, रावणनिधनस्य प्रधानहेतुत्वात् विशल्यीकरणेन गुरुकोपकारी इत्यपि व्याख्यानं समीचीनम् । महान् अनुभावः तेजोविशेषः यस्य स महानुभावः । अनुगतो भावः इति अनुभावः । मरुतः पवनस्य अपत्यं पुमान् इति मारुतिः । बाह्वादिभ्यश्चेति इञ् । आकृतिगणः बाह्वादिः ।

रामः । दिष्ट्येति—सोऽयं महाबाहुः अञ्जनानन्दवर्द्धनः दिष्ट्या लब्धः इति शेषः । यस्य वीर्य्येण वयश्च कृतिनः भुवनानि च कृतीनि ॥ ३२ ॥

महाबाहुः दीर्घबाहुः पराक्रमशाली इत्यर्थः सोऽयं अञ्जनायाः आनन्दस्य वर्द्धनः आञ्जनेयः हनूमान् दिष्ट्या भाग्येन आसादितः इत्यर्थः । यस्य हनूमतः वीर्य्येण शक्त्या वयं कृतिनः कृतकार्य्याः सिद्धमनोरथाः भुवनानि जगन्ति च कृतीनि ; कण्टकोद्धारात् जगन्ति अपि सफलकामानि जातानि । दिष्ट्या इति तृतीयान्तप्रतिरूपकमव्ययम् । वीरस्य कर्म्म भावो वा वीर्य्यम् । वीरशब्दात् यत्प्रत्ययः ।

সীতা। হায়, হায়, আমিও অত্যারূঢ় মনঃক্ষোভবশতঃ আমাকে আর্যাপুত্র হইতে বিযুক্ত মনে করিতেছি।

লক্ষ্মণ। [ আত্মগত ] ইহাঁদিগের চিত্ত অন্যবিষয়ে সঞ্চারিত করি। [চিত্র অবলোকন করিয়া প্রকাশ্যে ] মন্বন্তরপুরাণ, পূজার্হ পিতৃস্থানীয় গৃধ্ররাজ জটায়ুর চরিত্র ও শৌর্য্যের উদাহরণ এস্থানে চিত্রিত হইয়াছে।

সীতা। হায়, তাত, আপনি অপত্যস্নেহের পরাকাষ্ঠা প্রদর্শন করিয়াছেন।

রাম। হায়, তাত, কশ্যপকুলোৎপন্ন পক্ষিরাজ, তীর্থসদৃশপাবন, ভবাদৃশ সাধুর আর কোথায় পুনরুৎপত্তি হইবে ?

লক্ষ্মণ। জনস্থানের পশ্চিমে স্থিত, চিত্রকুঞ্জবান্ নামে প্রসিদ্ধ, এই দণ্ডকারণ্যভাগ যথায় দনুনামক কবন্ধ বাস করিত। ঋষ্যমূক পর্ব্বতে মহাভাগ মতঙ্গমুনির এই আশ্রমমণ্ডল। এই শ্রমণানাম্নী সিদ্ধশবরী। এই সেই প্রসিদ্ধ পম্পাসরোবর।

সীতা। আর্য্যপুত্র এইস্থানে অমর্ষ ও ধৈর্য্য বিসর্জ্জনপুর্ব্বক উচ্চৈঃস্বরে রোদন করিয়াছিলেন।

রাম। দেবি, এই সরোবর অতি রমণীয়। মদমত্ত মল্লিকাক্ষ পক্ষীর পক্ষপবনে উৎকম্পিত, চঞ্চলনাল শ্বেতপদ্মসমূহোপশোভিত ও কুবলয়ালঙ্কৃত এই সরোবরের অংশ-গুলিকে আমি অশ্রুপ্রবাহের পতন ও পুনরুদ্‌গমনের অন্তরালে(অস্পষ্ট ও একাকারভাবে) অবলোকন করিয়াছিলাম ॥ ৩১ ॥

লক্ষ্মণ। এই আর্য্য হনুমান্।

সীতা। এই সেই মহানুভব মারুতি, যিনি চিরদুঃখিত জীবলোকের সমুদ্ধার সম্পাদন করিয়া মহোপকারসাধন করিয়াছেন।

রাম। সৌভাগ্যক্রমে এই মহাবাহু অঞ্জনানন্দনের সাক্ষাৎলাভ করিয়াছিলাম। ইহার প্রভাবে আমরা কৃতার্থতালাভ করিয়াছি, জগৎও কৃতার্থ হইয়াছে ॥ ৩২ ॥

*Sita*:—Oh ! woe ! On account of my anxiety having reached its culmination, I too think myself bereaved of my lord.

*Lakshmana*:—[*Within himself.*] Well, I will divert their attention to something else. [*Looking at the picture, aloud*] Here is the delineation of the conduct and the valorous deeds of father Jatayu, king of the vultures, who was as old as the period or age of a Manu.

*Sita* :—Alas ! Father ! your paternal affection has been fully shown.

*Rama* :—Alas, father, descendant of Kasyapa, king of the birds, where again will be born a great and holy saint like yourself ?

*Lakshmana* :—Here is the tract of the forest of Dandaka lying to the west of Panchavati, which was inhabited by the headless monster Danu, and which is known as Chitrakunjaban. This is the hermitage of the sage Matanga on the hill of Rishyamuka ; here is the Sabara woman of high ascetic powers, Sramana by name ; this is the lake, named Pampa.

*Sita*.—Here my lord wept aloud, having given up all patience and resentment.

*Rama* :—Queen, this is a delightful lake. Here I saw in the intervals between the rising and falling of tears the tracts abounding in blue lotuses and also covered with white lotuses,the long stems of

which were waving, being shaken by the wings of the Mallikaksha birds cackling sweetly on account of hilarity. (31)

*Lakshmana.*—This is the honoured Hanuman.

*Sita* :—This is the same, large hearted Hanuman, the son of the wind-god, a great benefactor by the rescue of the world sunk into despair and grief for a long period

*Rama* :—Luckily this is the same hero of powerful arms who adds to the joy of Anjana, and by whose valour we and all the world too have been successful (32).

सीता। कुसुमानि जातानि अस्य इति कुसुमित:। तथोक्त: य: कदम्बतरु: स कुसुमितकदम्बतरु: तत्र ताण्डविता: नृत्यन्त. बर्हिण मयूरा: यत्र स कुसुमितकदम्बतरु-ताण्डवितबर्हिण:। किं नामधेयं यस्य स किन्नामधेय: किमाख्य:। अनुभाव: तेजो-विशेष: तस्य सौभाग्य रामणीयक इति अनुभावसौभाग्य तदेव इति अनुभावसौभाग्य-मात्रं मयूरव्यंसकादयश्चेति समास:। तत्र परिशेष अवशिष्टं यस्या: सा अनुभाव-सौभाग्यमात्रपरिशेषा। तथोक्ता धूसरा भस्मौ विलुठनात रेणुगरिष्ठता श्री: शोभा यस्य स: अनुभावसौभाग्यमात्रपरिशेषधूसरश्री: मूर्च्छन्मज्जाविलोपमापद्यमान:, प्रकम्पितेन उदश्रुनेत्रेण त्वया अवलम्बित: धृत: आर्य्यपुत्र. रामचन्द्र आलिखित: अङ्कित:। यत्र ईदृगवस्थ: आर्य्यपुत्रश्चित्रित: तस्य गिरे किमभिधानम्। वर्षासु कदम्बपुष्पोदयात् मयूराणां नृत्यदर्शनाच्च द्विगुणीकृतप्रियाविरहदु:ख रामचन्द्र: असह्यतया शोकस्य हृतचैतन्य: धरणीपृष्ठे पतित: लक्ष्मणेन शोकदीनवदनेन धृत.। दु:खेन रामस्य श्री प्रायेण विलुप्ता, केवलं अनुभावविशेषेण स एवायमिति उन्नेतुं शक्य आसीत्। कुसुम-शब्दादितच तारकादित्वादितच्। ताण्डव उद्धतनृत्य कुर्व्वन्ति इति ताण्डवयन्ति। तत् करोति तदाचष्टे इति णिच्। तत: कर्त्तरि क्त। अकर्म्मकत्वात्। यद्वा ताण्डव शब्दादितच्। तारकादित्वादितच। बर्हं पिच्छं विद्यते एषा इति बर्हिण: मयूरा:। मयूरोबर्हिणो बर्ही इत्यमर:। फलबर्हाभ्यामिनच इति इनच् प्रत्यय: मत्वर्थीय:। पिच्छाबर्हे नपुंसके इत्यमर:। अनुगतो भाव. इति अनुभाव: प्रादिसमास:। सुभगस्य भाव: इति सौभाग्यम्। सुभग + ष्यञ्। हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च इत्युभयपदवृद्धि:। धूधातो: सर: औणादिक: धूसर:। कृधूमदिभ्य: कित् इति गुणाभाव:।

लक्ष्मण:। सोयमिति—ककुभसुरभि. माल्यवान् नाम स: अय शैल:, यस्मिन् नील: स्निग्ध: नूतन: तोयवाह: शिखर श्रयति ॥ ३३ ॥

ककुभै: अर्ज्जुनपुष्पै:, नदीसर्जोवीरतरुरिन्द्रद्रु. ककुभोऽर्ज्जुन: इत्यमर: सुरभि: सुगन्धी. माल्यवान् नाम. स: अयं शैल: अद्रि: यस्मिन् अद्रौ नील: सम्भृतसलिलत्वात्

कृष्णवर्णः स्निग्धः मसृणः इत्यर्थः नूतनः तोयं वहति इति तोयवाहः पयोदः कर्म्मण्यण् इति अण्, शिखरं शृङ्गं श्रयति अवलम्बते। यस्य अद्रेः शृङ्गं निरन्तरं सम्भृतसलिलैर्मौलैः पयोदैः आवृतं भवति सोऽय माल्यवान् नाम पर्व्वतः।

रामः। वत्स, एतस्मात् विरम, विरम अतः परं न क्षमः अस्मि। स मे जानकीविप्रयोगः पुनः प्रत्यावृत्त इव ॥ ३४ ॥

हे वत्स लक्ष्मण, एतस्मात् माल्यवद्वर्णनात् विरम, विरम, निवर्त्तताम्। दैन्ये द्विरुक्तिः। अतः पर न क्षमः न शक्तः अस्मि। नाहं अनुभूतपूर्व्वाणां शोकसन्दीपनानां एषां वर्णनं श्रोतुं समर्थः। सः पूर्व्वं अनुभूतः मे मम जानक्या सीतया विप्रयोगः विरहः पुनः भूयः प्रत्यावृत्तः प्रत्यागतः इव। मन्ये स एव नितरां दुःसहः सीतावियोगशोकः पुनरागतो नवीभूतः मम अन्तर्हृदय भृशं दुनोति।

इममेव माल्यवन्तमधिकृत्य तत्रभवता कालिदासेनोक्तम्। यथा—

एतद्गिरेर्माल्यवत पुरस्तात् प्रादुर्भवत्यम्बरलेखि शृङ्गम्।
नव पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं विसृष्टम्॥
गन्धश्च धाराहतपल्वलानां कादम्बमर्द्धोद्गतकेसरञ्च।
स्निग्धाश्च केकाः शिखिनां वभूवुर्यस्मिन्नसह्यानि विना त्वया मे॥

अत्र श्लोके मन्दाक्रान्ता वृत्तम्। लक्षणं यथा—मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ तौ गुरु चेत्॥ उत्प्रेक्षालङ्कारः। व्याङ्परिभ्यो रमः इति परस्मैपदम्। वि + प्र + युज् + घञ् = विप्रयोग।

लक्ष्मणः। असंख्यातानि असंख्यानि। उत्तरोत्तराणि उत्तरेभ्यः उत्तराणि इति उत्तरोत्तराणि; क्रमेण वृद्धिं गतानि। कर्म्मसु वीरोचितेषु अवदानेषु आश्चर्य्याणि विस्मयावहाणि युद्धानि इत्यर्थः। परिश्रान्ता चित्रदर्शनेन क्लान्तिं गता। श्रमेः क्तः कर्त्तरि। विश्राम्यताम् विपूर्व्वात् श्रमे र्णिचि कर्म्मणि लोट्। "वा चित्तविरागे" इत्यतो वा इत्यनुवर्त्त्य, व्यवस्थितविभाषाश्रयणात् विश्रामयति, संक्रामयति इत्यादिरूपसिद्धिरिति तत्त्वबोधिनीकारः। आङपूर्व्वात् चरेर्यत् चरेराङि चा गुरौ एतोऽपवादेन यत्। आश्चर्य्यमनित्ये इति अद्भुतेऽर्थे सुट्।

सीता। प्रत्युत्पन्नः दोहदः मनोरथः यस्याः मा प्रत्युत्पन्नदोहदा। तस्याः मे विज्ञाप्य किञ्चिन्निवेदनीयमस्ति।

This speech of Sita furnishes a clue to revealing some of the dramatic purposes served by the picture scene. By rousing the curiosity of Sita to take a trip to the hermitages of anchorites, the picture-scene smoothes the way to Sita's banishment.

वि + ज्ञापि (ज्ञा + णिच्) + यत् (भावे) = विज्ञाप्यम्।

सीता। जाने मन्ये। अनुपसर्गाज्ज्ञ: इति कर्त्रभिप्राये आत्मनेपदम्। प्रसन्ना: निर्म्मला उद्वेगहेतुरहिता: राक्षसादिहिंस्रजन्तुशून्या: इति भाव: गम्भीराश्च तरुशैला-दीनां निवेशात् हृदये कमपि लोकोत्तरं प्रशान्तं भक्तिपूतञ्च भावं उन्मेषयन्त्य: इत्यर्थ: वनराजय: कान्तारश्रेणय: तासु विहरिष्ये विचरिष्यामि पवित्र: पावन: सौम्य: सुभग: सुखकर: इत्यर्थ:। शिशिर: शीतल: अवगाह: स्नानं यस्यां सा पवित्रसौम्यशिशिराव-गाहा। ताम्। अवगाहिष्ये। भागीरथ्यां स्नास्यामि।

प्र + सद् + क्त = प्रसन्न। सु + मन् = सोम। सोमात् ष्यण्। सोम + ष्यण् सोम: देवता अस्य इति सौम्य:। गमेरीरन्। गम्भीर: गभीरगम्भीरौ। गमेर्भ: पक्षे नुम्च।

राम:। न स्खलित: इति अस्खलित:। यद्वा नास्ति स्खलितं पाषाणादि-प्रतिबन्धो यस्मिन् स: अस्खलित अतएव सुख: सुखकर: सम्पात: गति: यस्य स: अस्खलितसुखसम्पात:। तम्। उपस्थापय सज्जीकुरु। स्खलति; चस्खाल; अस्खालीत्। सुखं करोति इति सुखयति। सुखशब्दात् णिच्। सुखयति इति सुख:। पचाद्यजिति अच्। सम् + पत् + घञ् = सम्पात।

The adjective of the car indicates the solicitude of Rama regarding Sita, having in view the advanced stage of her pregnancy

राम:। कठिनं निष्ठुरं हृदयं यस्या: सा कठिनहृदया। मया विरहिता त्वं गमिष्यसि, अहं एकाकी गृहे स्थास्यामि इति चिन्तयितुमपि यत: शक्नोषि अत: नूनं तव हृदयम् निष्ठुरम्।

राम:। वातस्य अयनं मार्ग: इति वातायनम्। गवाक्ष:। तस्य उपकण्ठे समीपे। संविष्टौ शयानौ। मुहूर्त्तमिति अत्यन्तसंयोगे द्वितीया। वा + क्त (कर्त्तरि) = वात। इण + ल्युट् (करणे) = अयन। सम् + विश + क्त (कर्त्तरि) = संविष्ट। कण्ठस्य समीपे इति उपकण्ठे। सामीप्ये अव्ययीभाव:। उपकण्ठम्। तृतीया सप्तम्योरन्यतरस्यामिति सप्तम्यां पाक्षिक रूपम्।

परिश्रमेण चित्रदर्शनजन्येन क्लमेन जनिता तया निद्रया अपह्रिये अभिभूता विलुप्त-चैतन्या भवामि इत्यर्थ:। अपह्रिये इति हरते: कर्म्मणि लट्।

সীতা। বৎস, যে পর্ব্বতে কুসুমশোভিতকদম্বতরুশাখায় ময়ূর উদ্ধত নৃত্য করিতেছে এবং যেখানে অনুভাবমাত্রাবশিষ্ট ধূলিধূসরিত শরীরশ্রী আর্য্যপুত্র ক্ষণকাল হতচৈতন্যাবস্থায় তরুতলে পতিত, তুমি সাশ্রুনেত্রে উঁহাকে ধরিয়া রহিয়াছ এইরূপ চিত্র অঙ্কিত হইয়াছে, এই পর্ব্বতের নাম কি ?

লক্ষ্মণ। অর্জ্জুনপুষ্পের সৌরভে সুবাসিত এই মাল্যবান্ পর্ব্বত। নীলবর্ণ, স্নিগ্ধ নবজলধরপটল ইহার শিখরদেশ আশ্রয় করিয়া থাকে॥ ৩৩॥

রাম। বৎস, মাল্যবান্ পর্ব্বতের বর্ণনা হইতে নিবৃত্ত হও, নিবৃত্ত হও। আমি আর সহ্য করিতে পারিতেছি না। পূর্ব্বানুভূত জানকীবিরহ যেন পুনর্ব্বার প্রত্যাগত হইতেছে॥ ৩৪॥

লক্ষ্মণ। ইহার পর আর্য্য রামচন্দ্রের ও মান্যাস্পদ কপিবর্গ ও রাক্ষসদিগের অসংখ্য, উত্তরোত্তর বর্দ্ধমান, অদ্ভুত (লোমহর্ষণ) যুদ্ধের চিত্র অঙ্কিত হইয়াছে। ইনি পরিশ্রান্ত হইয়াছেন। অতএব নিবেদন করি যে ইনি বিশ্রাম করুন।

সীতা। আর্য্যপুত্র, এই চিত্রদর্শন করিয়া আমার একটি অভিলাষ উৎপন্ন হইয়াছে। আমি কিছু নিবেদন করিতে ইচ্ছা করি।

রামচন্দ্র। আদেশ কর।

সীতা। আমার ইচ্ছা হয় যে পুনর্ব্বার প্রসন্নগম্ভীর কাননশ্রেণীতে পরিভ্রমণ করিব, এবং শীতল সুভগসলিলা ভাগীরথীতে অবগাহন করিব।

রাম। বৎস লক্ষ্মণ।

লক্ষ্মণ। আমি (আদেশ পালনার্থ) এই উপস্থিত আছি।

রাম। সম্প্রতি গুরুগণ আদেশ করিয়া পাঠাইয়াছেন যে ইঁহার মনোরথ অবিলম্বে পূর্ণ করিতে হইবে। অতএব পাষাণাদি প্রতিবন্ধরহিত সুখসম্পাত রথ সজ্জিত কর।

সীতা। আর্য্যপুত্র, আপনাকেও সেখানে যাইতে হইবে।

রাম। অয়ি কঠিনহৃদয়ে, ইহাও বলিতে হইবে।

সীতা। তাহা হইলে, ইহা আমার অতীব প্রিয়।

লক্ষ্মণ। আর্য্য যেরূপ আদেশ করেন। [নিষ্ক্রান্ত]।

রাম। প্রিয়ে এস, আমরা উভয়ে এই বাতায়নের সমীপে ক্ষণকাল শয়ন করি।

সীতা। তাহাই হউক। আমি পরিশ্রমহেতু নিদ্রায় অভিভূত হইয়া পড়িতেছি।

*Sita* :—My dear brother, what is the name of the mountain, in which peacocks are wildly dancing on blooming Kadamba trees, and where under a tree my husband has been drawn as in a fainting fit for a while and supported by you weeping aloud,—his beauty is pale, dusty and almost gone, the only remains being his majesty and (natural) grace ?

*Lakshmana* :—This is the mountain Malayban by name, fragrant with the flowers of the Kakubha trees, to the peak of which clings a dark, blue, glossy and fresh cloud. (33).

*Rama* :—Stop, my dear brother, stop from (describing) it I cannot bear it any more. That (painful) separation from the daughter of Janaka seems to have returned again. (34).

*Lakshmana* :—Hereafter are drawn the numberless heroic and wondrous exploits successively achieved by our honoured brother and by the noble monkeys and Rakshasas. My honoured sister is tired. I pray therefore that she may take rest.

*Sita* :—My husband, I have a request to make, a certain liking or desire having arisen in my mind.

*Rama* :— (My dear), please order (me to do your wishes).

*Sita* :—I think that I shall wander again in those quiet and solemn lines of forests, and shall bathe in the holy Ganges with its sanctifying, delightful and cool waters.

*Rama* :—My dear brother, Lakshmana !

*Lakshmana* :—Here I am

*Rama* :—Just now our superiors have sent word that her wishes ncident to pregnancy should be fufilled without delay. Therefore make ready a car that glides smoothly and agreeably without jolting.

*Sita* :—My husband, you too will have to go there.

*Rama* :—O you hard-hearted one, does this require to be told?

*Sita* :—Then it is very agreeable to me.

*Lakshmana* :—As my honoured brother commands. [*Exit.*]

*Rama* :—Let us, my dear, sleep here for a while near this window.

*Sita* :—Let it be so. I am indeed being overpowered ( and carried away) by sleep brought on by fatigue.

रामः। तेन शयनाय शयितुम् ; शयनार्थमित्यर्थः मां निरन्तरं गाढ़ं यथा तथा अवलम्बस्व आलिङ्ग इत्यर्थः।

जीवयन्निति—ससाध्वसश्रमखेदविन्दुः ऐन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः जीवयन् इव बाहु अधिकण्ठं अर्प्यताम् ॥ ३५ ॥

साध सम्यक् अस्यति विक्षिपति चित्तं यत् तत् साध्वसं भयं श्रमः चित्रदर्शनजन्यः खेदः इति साध्वसश्रमौ ताभ्यां ये खेदविन्दवः घर्म्मोदविन्दवः तैः सह वर्त्तते इति ससाध्वसश्रमखेदविन्दुः, पूर्व्वमनुभूतानां वनवासवृत्तान्तानां चित्रदर्शनेन उद्वेगभीतिपरिश्रमादिवशादुद्गतेन खेदाम्भःपृषतनिचयेन आकीर्णः अयं ते बाहुः, इन्दोरिमे इति ऐन्दवाः तैः मयूखैः चन्द्रपादैः चुम्बितः स्पृष्टः अतएव स्यन्दी जललवान् क्षरन् यश्चन्द्रमणीनां चन्द्रकान्तमणीनां .हारः उरोभूषणम् तस्य विभ्रमः सादृश्यं यस्य सं

ऐन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः चन्द्रकिरणसंस्पर्शात्प्रस्रुतजलबिन्दुनिचितचन्द्रकान्तमणिघटितहारसदृशः जीवयन् इव, एकपदे तापशान्तिसुखोदयात् उच्छ्वासयन् इव अय ते बाहुः सुभगस्पर्शः इति भावः अधिकण्ठम्, मम कण्ठे अर्प्यताम् न्यस्यताम् गाढालिङ्गनाय सुभगस्पर्शस्ते बाहुर्ममकण्ठे स्थाप्यताम् इत्यर्थः।

अधिकण्ठम् कण्ठे इति विभक्त्यर्थे अव्ययीभावः। अर्प्यताम् इति ऋच्छतेः ण्यन्तात् कर्म्मणि लोट्। प्रार्थनायां लोट्। इन्दोरिमे इति ऐन्दवाः। इन्दुशब्दादण्। इन्दुमयूखचुम्बित इत्यनेनैव इष्टसिद्धौ ऐन्दवमयूखचुम्बित इति कथनं प्रियतद्धितत्वद्योतकम् यथाह भगवान् भाष्यकारः प्रियतद्धिताहि दाक्षिणात्याः। चुम्बित इति शब्दस्य अर्थः अर्थान्तरे संक्रमितः। स्पृष्टः इत्यर्थः। माङः ऊखः मयच् इति मयूखः। किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः। स्यन्दू स्रवणे इति धातो र्ग्रहादित्वात् णिनिः स्यन्दी। यद्वा स्यन्दः स्रवणं विद्यते यस्य स स्यन्दी। मत्वर्थीयः इनिः। चन्द्रकान्तो मणिश्चन्द्रकिरणस्पर्शेन जलबिन्दून् स्रवति इति प्रसिद्धिः। साधु + अस + अच् = साध्वस्।

[ तथा कारयन् सीतया सीतां वा इतिशेषः हृक्रोरन्यतरस्यामिति अणिकर्त्तुः पाक्षिकं कर्म्मत्वम्। सीतायाः बाहुं स्वकण्ठे स्थापयन् ]

विनिश्चेतुमिति। हे प्रिये एतत् सुखम् इति वा दुःखमिति वा प्रमोहः वा निद्रा वा, किमु विषविसर्पः किमु मदः इति विनिश्चेतुं न शक्ये। तव स्पर्शे स्पर्शे परिमूढेन्द्रियगणः विकारः मम चैतन्यं भ्रमयति समुन्मीलयति च ॥ ३६ ॥

अयि प्रिये तव गात्रसंश्लेषेण मम कापि अनिर्व्वाच्या अवस्था समुत्पन्ना ; सर्व्वाण्येव मम इन्द्रियाणि लोकोत्तराह्लादेन विवशानि सञ्जातानि ;किञ्च मम बुद्धिरपि आनन्दातिरेकात् तथा मूढ़तां गता यथाहं आत्मनः दशां सम्यक् अवधारयितुं प्रकाशयितुञ्चासमर्थोऽस्मि। किमहं सुखमनुभवामि उत दुःखम् , किमहमिदानी जाग्रदेव ब्रह्मानन्दसहोदरं सर्व्वातिशायिनमाह्लाद मथवा निद्रितः सुषुप्तिसुखमनुभवामि , किं मे शरीरे कुतोऽपि निमित्तात् विषसञ्चारादथवा आसवादेः सेवनात् ईदृशी विह्वलता जाता इत्यहं नावधारयितु शक्नोमि। यदा यदाहं तव गात्रं स्पृशामि तदा तदैव कोऽपि समुच्छलदानन्दसन्दोहपूरः प्रादुर्भूय मम आन्तरं तत्त्वमाप्लावयति हरति च क्षणात्मम संज्ञां क्षणात प्रत्यानयति च ताम्। सर्व्वथा आनन्दपरवशः विह्वलतां गतोऽस्मीति भावः। अस्मिन् श्लोके शिखरिणी वृत्तम्। रसैरुद्रैश्छिन्नायमनसभलागः शिखरिणी। "शक विभाषितोऽमर्षणे" विभाषित इत्युभयपदीत्यर्थः इति भट्टी—शक्नोति, शक्यते हरिं द्रष्टुं भक्तः। लटि उत्तमपुरुषैकवचने शक्ये इति पदम्। शक्यः इति पाठे प्रमोहः मदः इत्यनुसरेणान्वयः। वि + निस् + चि + तुमुन् = विनिश्चेतुम्। प्र + मुह + घञ् = प्रमोह। प्रमोहः मूढ़ावस्था ; संज्ञाविलोपः। विषस्य विसर्पः सञ्चारः इति विष-

विसर्पः। वि + सृप् + घञ् = विसर्पः। स्पर्शे स्पर्शे इति वीप्सायां द्विरुक्तिः। भावे सप्तमी। इन्द्रियाणां चक्षुरादीनां गणः इति इन्द्रियगणः। परिमूढः विह्वलः इन्द्रियगणः येन यस्मात् वा इति परिमूढेन्द्रियगणः। बहुव्रीहिः। विकारश्चेतसोऽन्यथाभावः। चितीसंज्ञाने इति धातोः भावे युच चेतना। चेतना एव इति चैतन्यम् स्वार्थे ष्यञ् क्वचित् स्वार्थिकाः प्रकृतेः लिङ्गवचनान्यतिवर्त्तन्ते इति क्लीबत्वम्। भ्रमे र्णिचि मितां ह्रस्वः इति भ्रमयति। उत्पूर्व्वात् मील्धातोः णिचि लटि रूपम् उन्मीलयति।

सीता। स्थिरः अविचलितः कालात्ययेऽपि अपरिवृत्तः एकरूपः इत्यर्थः प्रसादः मयि अनुग्रहः येषां ते स्थिरप्रसादाः। मयि नित्यमेव नितरां प्रसन्ना यूयमित्यर्थः। एतदेव मे परमं सौभाग्यम्। अतोऽधिक न किञ्चित् प्रार्थनीयं वर्त्तते स्त्रीणामिति भावः।

रामः। म्लानस्येति—हे सरोरुहाक्षि, म्लानस्य जीवकुसुमस्य विकाशनानि सन्तर्पणानि सकलेन्द्रियमोहनानि कर्णामृतानि मनसः रसायनानि च एतानि ते सुवचनानि ॥ ३७ ॥

सरसि कासारे रोहति जायते यत् तत् सरोरुहम् कमलम्, रोहतेः इगुपधालक्षण. कः। सरोरुहम् इव अक्षिणी नयने यस्याः सा सरोरुहाक्षी बहुव्रीहौ सक्थ्यक्ष्णः स्वाङ्गात् षच् षिद्गौरादिभ्यश्चेति ङीष्। तत् सम्बोधने हे सरोरुहाक्षि कमलदलायतनयने, म्लानस्य प्रतिकूलसंसारभावरूपैः मरुवातैः विशोषमापन्नस्य जीवःएव कुसुम प्रसूनं तस्य जीवकुसुमस्य प्राणप्रसूनस्य विकाशनानि प्रस्फोटनानि हर्षणानि आह्लादनानि इति तात्पर्य्यम्। सन्तर्पयन्तीति सन्तर्पणानि माधुर्य्यवशात् प्रीत्युत्पादनानि, सकलानां सर्व्वेषामेव न केवलं श्रोत्रयोरितिभावः इन्द्रियाणां चक्षुरादीनां मोहनानि, आनन्दोत्पादनेन विह्वलतासाधनानि, कर्णयोः श्रवणयोः अमृतानि सुधाधारानिषेकवत् सुखसञ्जननानि इत्यर्थः मनसः दुःखभाराक्रान्तस्य चित्तस्य इत्यर्थः रसायनानि अवसादनाशकानि वीर्य्यवन्ति भेषजानि इत्यर्थः इति रूपकालङ्कारः। शृङ्गारादौ विषेवीर्य्ये गुणे रागे द्रवे रसः। रसस्य वीर्य्यस्य अयनम् आगमः एभ्यः इति रसायनानि। रसायनं विषेऽपि स्यात् जराव्याधिभिदौषधे इति मेदिनी। एतानि ते तव सुवचनानि श्रुतिसुभगानि वाक्यानि। वसन्ततिलकम् वृत्तम। म्लै + क्त = म्लान। म्लायति ; मम्लौ ; अम्लासीत्। वि + काश् ( णिच् ) + ल्युट्। अथवा काश + करणे ल्युट् विकाशन। सम् + तृप् (णिच्) + ल्युट् = सन्तर्पण। मुह (णिच्) + ल्युट् = मोहन।

[शयनाय शयितुम् तुमर्थाच्च भाववचनादिति चतुर्थी—निरूपयति अन्विष्यति शयनयोग्य स्थानमुपधानादिकञ्च इत्यर्थः।]

राम:। अयि इति कोमलामन्त्रणे अव्ययम्। शयनार्थमुपधानान्तरेण प्रयोजनं नास्ति।

आविवाहेति। आ विवाहसमयात् गृहे शैशवे, यौवने, तदनु पुन: वने यौवने स्वापहेतु: अन्यया अनुपाश्रित: एष रामबाहु: ते उपधानम् ॥ ३८ ॥

विवाहस्य परिणयस्य समयात् कालात् आ आरभ्य इत्यर्थ: गृहे शैशवे बाल्ये यौवने तारुण्ये च, तदनु तदनन्तरम् पुन: वने अरण्यवाससमये स्वापस्य निद्राया: हेतु: उपकरणभूत:, अन्यया नार्य्या अनुपाश्रित: उपधानत्वेन नावलम्बित: एष: रामबाहु: अयं ममभुज: ते तव उपधानम् उच्छीर्षकम्। उच्छीर्षकमुपधानं धीरैरुपबर्हमाख्यातम्। इति हलायुध:। विवाहकालादारभ्य गृहे अरण्ये च यो मे बाहुस्तव उपधानमभूत् तमेवावलम्ब्य इदानीं यथेष्टं निद्रासुखमनुभूयतामित्यर्थ:। विवाहसमयादिति पञ्चम्यपाङ्परिभिरिति पञ्चमी। समासस्य विभाषितत्वात् असमास: पाक्षिक समासपक्षे आविवाहसमयमिति पदम्। तदिति अनुयोगात् द्वितीया। कर्म्मप्रवचनीयत्वात्। स्वप् + घञ् = स्वाप। स्वपिति, सुष्वाप, अस्वाप्सीत्। सुप्त:। स्वापस्य हेतु: इति स्वापहेतु:। उप + धा + ल्युट् = उपधान। युवन् + अण = यौवन।

सीता। नाटयन्ती अभिनयन्ती।

राम:। प्रियं वचन यस्या: सा प्रियवचना। वा प्रियस्य इति सूत्रेण पक्षे वचनप्रिया इति रूपम्।

इयमिति। इयं गेहे लक्ष्मी:, इयं नयनयो: अमृतवर्त्ति: असौ अस्या: स्पर्श: वपुषि बहुल: चन्दनरस:। अयं कण्ठे (अर्पित इति शेष:) बाहु: शिशिरमसृण: मौक्तिकसर:। अस्या: किं न प्रेय: यदि पुन: असह्य: विरह: न स्यादितिशेष: ॥३९॥

इयं सीता गेहे गृहे लक्ष्मी: गृहस्य सौभाग्याधिष्ठात्री देवता ; इय मे नयनयो: नेत्रयो: अमृतवर्त्ति: अमृतनिस्यन्दिनी वर्त्ति:। नेत्राभिस्यन्दरोगाभिभूतस्य अञ्जनवर्त्तिर्यथा आप्यायनी, तथा इयं नेत्रगोचरीभूता दृशोरमृताञ्जननिषेकं कुरुते। अस्या: असौ अनुभूयमान: इत्यर्थ: स्पर्श: वपुषि देहे बहल: प्रभूत: चन्दनरस: मलयजजलसेकेन यथा निदाघतप्तस्य देहस्य तापशान्ति: सुखोदयश्च, तथा अस्या: स्पर्शेन मम गात्रेषु कापि निर्वृति: समुत्पद्यते। कण्ठे मम स्कन्धे निहित: अयम् अस्या: बाहु-र्भुज: शिशिरश्चासौ मसृणश्चेति शिशिरमसृण: विशेषणयो: कर्म्मधारयनिर्व्वाह: शीतलश्लक्ष्ण: मौक्तिकसर: मुक्तामयो हार:। मुक्तानिर्म्मितोहार: यथा शीतलत्वात् मसृणत्वाच्च सुखस्पर्श: कोमलत्वात् सुखशीतलत्वाच्च अस्या: भुजोऽपि तादृक् सुभगस्पर्श:। अस्या: सीताया: सम्बन्धि किं वस्तु न प्रेय: प्रियतरम्, पुन: किन्तु पुनस्त्वर्थे यदि असह्य: सोढ़ुमशक्य: विरह: वियोग: न स्यादिति शेष:। अस्या: सम्बन्धी

वियोगः एव परमदुःसह इतरत् सर्व्वन्तु सुखहेतुत्वान्नितरां प्रियम्। अत श्लोके शिखरिणीवृत्तम्। अलङ्कारश्च रूपकम्। अनुरूपो भावः—

मय ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिकादृशी।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता॥

गो गणेशो गन्धर्व्वो वा ईहः ईप्सितो यत्र तत् गेहम्। गृहं गेहोदवसितं वेश्म सद्म निकेतनमित्यमरः। अमृतस्य वर्त्तिः इति अमृतवर्त्तिः। नयनयोरिति विषयाधिकरणे सप्तमी। यद्वा शेषे षष्ठी। मुक्ता एव इति मौक्तिकम्। स्वार्थे ठक्। मौक्तिकस्य सरः हारयष्टिः इत्यर्थः इति मौक्तिकसरः। प्रियशब्दादीयसुन-प्रत्ययेन प्रेयःशब्दः सिद्धः। न सह्यः इति असह्यः। शकिसहोश्चेति सहधातोः कर्म्मणि यत् सह्यः।

प्रतीहारी। आसन्नः समीपवर्त्ती समीपचारी विश्वासभाजनमित्यर्थः परिचारकः सेवकः। चरतेः ण्वुल् चारकः।

रामः। शुद्धान्ते अन्तःपुरे चरति इति शुद्धान्तचारी। अन्तःपुरेऽपि अप्रतिरुद्ध-गमनः। शुद्धेन अम्यते गम्यते यत्र इति शुद्धान्तः। अमधातोः अधिकरणे क्तः। स्त्र्यागारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च इत्यमरः। पुरे निवसन्ति ये ते पौराः। जनानां पदम् इति जनपदः। नाड्यपजनोपपदानि व्रणाङ्ग-पदानि इति पुंस्त्वम्। जनपदेभ्यः आगताः इति जानपदाः। पौराश्च जानपदाश्च इति पौरजानपदाः तान्। अपसर्पितुम् गूढं यथा स्यात् तथा चरितुम् प्रच्छन्नं तेषां भावान् परिज्ञातुमित्यर्थः। यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः। चारश्च गूढपुरुषः इत्यमरः। प्रयुक्तः व्यापारितः नियुक्तः इत्यर्थः। युजेः कर्म्मणि क्तः।

दुर्मुखः। अचिन्तनीयम् अतर्कितोपपन्नमित्यर्थः ; मनसा चिन्तयितुं कल्पयितु मपि अशक्यम्। जनानाम् अपवाद इति जनापवादः लोकवादः तम्। कौलीनम् इत्यर्थः। देवस्य इति सम्बन्धविवक्षया षष्ठी। नियोगः अधिकारः। यदर्थं प्रभुणा नियुक्तोऽस्मि तत् कार्य्यं खलु ईदृशम् अप्रीतिकरमित्याशयः। मन्दः भागः भाग्यं यस्य स मन्दभागः दुर्भाग्यः तस्य।

রাম। তবে শয়ন করিবার জন্য আমাকে গাঢ়ভাবে আলিঙ্গন কর। ভয় ও শ্রম-জনিত ঘর্ম্মবিন্দু পরিব্যাপ্ত, অতএব ইন্দুকিরণস্পর্শে প্রস্রুতজলবিন্দুনিচিতচন্দ্রকান্তমণি-নির্ম্মিতহারসদৃশ তোমার এই বাহু আমার কণ্ঠে অর্পণ কর ; ( এবং তৎস্পর্শে আমার শরীরে ) যেন সঞ্জীবনশক্তি সঞ্চারিত হউক ॥ ৩৫ ॥

[ সেইরূপ করাইয়া, আনন্দের সহিত ] প্রিয়ে, একি ! আমি সুখ অনুভব করিতেছি কি দুঃখ অনুভব করিতেছি ; আমি প্রমুগ্ধ কি নিদ্রিত, আমার শরীরে বিষসঞ্চার হইতেছে অথবা মদ্যপানজনিত মত্ততা আবির্ভূত হইতেছে ইহা আমি নির্ণয়

করিতে পারিতেছি না। যখনই তোমার গাত্রস্পর্শ হইতেছে তখনই ইন্দ্রিয়সমূহের বিহ্বলতা উৎপাদন করিয়া কি এক অদ্ভুত বিকার আমার চৈতন্য বিলুপ্ত করিতেছে, এবং চেতনাশক্তি প্রবুদ্ধ করিতেছে ॥ ৩৬ ॥

সীতা। [ হাস্য করিয়া ] আমার প্রতি আপনার অনুগ্রহ চিরকালই একরূপ। ইহা অপেক্ষা অধিক কি প্রার্থনীয় হইতে পারে ?

রাম। হে সরোরুহাক্ষি ! তোমার এই বাক্যগুলি পরিম্লান জীবকুসুমের বিকাশ-সম্পাদনকারী, সমস্ত ইন্দ্রিয়বর্গের পরিমোহন, ও তৃপ্তিসাধক, এবং কর্ণবিবরে সুধাধারা-বর্ষী ও অবসাদপ্রাপ্ত চিত্তের পক্ষে রসায়নতুল্য ॥ ৩৭ ॥

সীতা। প্রিয়ংবদ, আমি শয়ন করিব।

[ শয়ন করিবার জন্য ইতস্ততঃ অন্বেষণ করিতে লাগিলেন ]

রাম। অয়ি প্রিয়ে, অন্বেষণ করিবার কি আছে ? বিবাহসময় হইতে আরম্ভ করিয়া শৈশবে গৃহে তৎপশ্চাৎ যৌবনে অরণ্যবাসসময়ে ( তোমার ) নিদ্রার উপকরণ-ভূত, অন্যনারীকর্তৃক অনাশ্রিত এই রামবাহু তোমার উপাধান রহিয়াছে ॥ ৩৮ ॥

সীতা। [ নিদ্রার অভিনয় করিয়া ] হাঁ, আর্য্যপুত্র ইহা আছে বটে ; ইহা আছে বটে। [ নিদ্রিত হইলেন ]

রাম। প্রিয়বাদিনী আমার বক্ষের উপরিই নিদ্রিত হইয়া পড়িলেন ? [যত্নপূর্ব্বক অবলোকন করিয়া সস্নেহে ]

ইনি গৃহে লক্ষ্মীস্বরূপা, ইনি নেত্রযুগলের অমৃতবর্ত্তি ইঁহার এই স্পর্শ দেহে প্রভূত চন্দনরসসেকতুল্য ; মদীয়কণ্ঠে নিহিত ইঁহার এই বাহু শিশিরমসৃণ মুক্তাহারসদৃশ। ইঁহার সম্বন্ধীয় কোন্ বস্তু প্রিয়তর নহে যদি অসহ্য বিরহ না ঘটে।

প্রতিহারী। [ প্রবেশ করিয়া ] দেব আসিয়াছে।

রাম। অহে, কে আসিয়াছে ?

প্রতিহারী। প্রভুর আসন্নপরিচারক দুর্মুখ।

রাম। [ স্বগত ] দুর্মুখ অন্তঃপুরে আগমন করিয়া থাকে। আমি তাহাকে পুরবাসী ও জনপদবাসীদিগের কার্য্যাদির অনুসন্ধান জন্য গূঢ়চর নিযুক্ত করিয়াছি। [ প্রকাশ্যে ] সে আসিতে পারে।

[প্রতিহারী নিষ্ক্রান্ত ]

দুর্মুখ। [ প্রবেশ করিয়া ] হায় ! কিরূপে সীতাদেবী সম্বন্ধীয় এই অচিন্তনীয় জনাপবাদ প্রভুর সমীপে নিবেদন করিব। অথবা এই হতভাগ্য এইরূপ কার্য্যের জন্যই নিযুক্ত হইয়াছে।

*Rama* :—Then in order to lie down here, catch hold of me very closely.

Let your arm suffused with drops of sweat due to anxiety and fatigue, (and therefore) resembling a necklace of moon-gems

issuing out particles of water being kissed by the lunar rays, be placed round my neck and infuse new life, as it were, into me. (35).

[*Helping her to do so, with rapture.*] My love, what is this ?

I can not ascertain whether it is pleasure or pain, whether it is stupor or sleep, whether a poison runs (through my veins), or intoxication (spreads its influence). At every touch of yours, an excitement or emotion stupefying all my senses bewilders my consciousness and revives it again. (36).

*Sita* :—[*Laughing*]. You are ever constant in your love for me. What else can be wished for ?

*Rama* :—O lotus-eyed one, these words of yours make the withered flower of life blow, enrapture all the senses, impart joy, and are like nectar to the ears, and serve as a tonic or elixir to the heart. (37).

*Sita* :—You speak of flattering or complimentary words. I will lie down.

[*Looks round, seeking something to rest her head upon.*]

*Rama* :—My dear, what is it you are seeking for ?

This arm of Rama has ever since the time of your marriage been a pillow to you, bringing on sweet repose or sleep to you at home in your childhood, and thereafter in the forest in your youth, and not leaned on by any other woman. (38).

*Sita* :—[*Simulating sleepiness*]. It is so, my husband, it is so [*Sleeps.*]

*Rama* :—How now, she, a speaker of agreeable words, has fallen asleep on my bosom ?

[*Marking her attentively, with affection.*]

She is the goddess of grace in my house ; she is like a pencil or brush of ambrosia to my eyes ; this touch of her is like a massive sandal paste to the body ; this arm of hers on my neck is just like a cool and smooth string of pearls. What there is belonging to her which is not sweet, provided that there be no unbearable separation from her ? (39).

[*Enter wardress*].

*Wardress.*—My lord, here is come.

*Rama* :—Oh, who ?

*Wardress.*—It is Durmukha, the personal attendant of your majesty

*Rama* :—[*To himself.*] Durmukha, the attendant of the female apartments ! He was employed by me to act as a spy upon the people of the town as well as the villages. [*Aloud*]. Let him come.

[*Wardress exit, enter Durmukha.*]

*Durmukha.*—[*To himself*]. Alas ! How shall I report to his majesty this unthought of scandal of the queen Sita ? Or such is my duty, an unfortunate fellow that I am.

सीता। [ उत्कटः विलापादिप्रयोजकः इत्यर्थः स्वप्नः यस्याः सा उत्स्वप्ना सा इव आचरति इति उत्स्वप्नायते। कर्त्तुःक्यङ् सलोपश्च इति उपमानभूतात् क ॰॰त् क्यङ्प्रत्ययः। ततः उत्स्वप्नाय इति नामधातोः लटिरूपम् उत्स्वप्नायते ]।

रामः। रणरणक उद्वेगं दातुं शीलमस्याः इति रणरणकदायिनी। उत्कण्ठाजननी। ददातेः ताच्छील्ये णिनिः। चित्रस्य दर्शनात् शूर्पणखायाश्चित्रं विलोक्य हा आर्य्यपुत्र एतावत्ते दर्शनमिति या विरहस्य विच्छेदस्य भावना चिन्ता विरहशङ्का देव्याः हृदये समुदिता अभवत् सा इदानीं स्वप्ने अपि अस्याः उत्कण्ठां तज्जनितविलापादिकञ्च समुत्पादयति।

आयल्लकमुत्कण्ठा स्यादुत्कलिकारतिश्च रणरणकम्।
शीतसुक्यं हृल्लेखः—इति हलायुधः॥
पुंनपुंसकोऽयं शब्दः तथाच पुंसिप्रयोगः—
उत्कण्ठा सन्तापो रणरणको जागरस्तनोस्तनुता।
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा॥
इति सरस्वतीकण्ठाभरणम्।

अव्युत्पन्नोऽयं शब्दः। रणशब्दस्य कथञ्चित् विलाङ्गीकारेण व्याकर्त्तुं शक्यते।

[ स्नेहेन आदरेण इत्यर्थः सह इति सस्नेहम् अस्याः सीतायाः अङ्कमुदरमिति वीरराघवः तस्यैव प्रसङ्गत्वात् दृष्टेराकर्षकत्वम् वक्ष्यते चाग्रे मयैवादौ करतलपरामर्शकलया इति...परामृशन् स्पृशन् ]।

अद्वैतमिति। यत् सुखदुःखयोः अद्वैतं सर्व्वासु अवस्थासु अनुगुणम्, यत्र हृदयस्य

विश्रामः, जरसा यस्मिन् रसः अहार्य्यः ; कालेन आवरणात्ययात् यत् परिणते स्नेहसारे स्थितम्, तत् एकं भद्रं सुमानुषस्य कथमपि हि प्राप्यते ॥ ४० ॥

यत् प्रेम सुखञ्च दुःखञ्च इति सुखदुःखे विप्रतिषद्धं चानधिकरणवाचि इति समाहारस्य विभाषितत्वात् पक्षे इतरेतरद्वन्द्वः तयोः सुखदुःखयोः सुखे दुःखेच अद्वैतम् तुल्यरूपम् विकृतिं न गच्छति इत्यर्थः द्वि द्वित्वमित्यर्थः द्वेयकयोरितिवत् त्वप्रत्ययस्य गतार्थत्वात् न प्रयोगः इतम् प्राप्तम् इति द्वीतम् द्वीतस्य कर्म्म भावो वा इति द्वैतम् अण्प्रत्ययः ; नास्ति द्वैतं द्विरूपत्वं यस्मिन् तत् अद्वैतम्। यच्च सर्व्वासु अवस्थासु दशान्तरेषु अनुगुणम् अनुकूलम्, तेषु तेषु प्रतिकूलेषु दशान्तरेषु आपतितेषु अपि यत् प्रेम कदापि प्रतिकूलतां न भजति ; यत्र यस्मिन् प्रेम्णि हृदयस्य विश्रामः संसारवर्त्मनि सुलभैः शोकमोहादिभिर्व्याकुलं हृदयं निरतिशयविश्रम्भबहुलं यत् प्रेम आस्थाय दुःखविरामं लभते इत्यर्थः।

[विश्रामः इति अपाणिनीयम् नोदात्तोपदेशस्य मान्तस्य अनाचमेरिति घञि वृद्धिप्रतिषेधात् इति आहुः, तत्रेत्थं समाधत्ते तत्त्वबोधिनीकारः—"वा चित्तविरागे" इति सूत्रस्थितस्य वा इत्यस्य मितां ह्रस्वः इति सूत्रे अनुवृत्त्या, तस्य च व्यवस्थितविभाषासमाश्रयणात् विश्रामयति, विश्रमयति इति रूपसिद्धिः, ततः विश्रामि इति धातोः "एरच्" इति अच्प्रत्ययेन विश्राम इति रूपम् नतु घञ्प्रत्ययान्तोऽयं शब्दः इति]। जरसा वार्द्धक्येन यस्मिन् प्रेम्णि रसः रतिरित्यर्थः अहार्य्यः हर्त्तुं न शक्यः, वार्द्धकेऽपि यस्य प्रेम्णः अत्ययो नहश्यते इत्यर्थः। कालेन कालक्रमेण आवरणस्य लज्जारूपप्रतिबन्धकादेः अत्ययात् अपगमात्, यत् परिणते परिपाकम् उपेयुषि स्नेहसारे प्रगाढ़े अनुरागे अन्योन्यादर्शनासहिष्णुत्वलक्षणे स्थितम् परिनिष्ठितम्। [ वरण विवाहः अत्ययोदेहनाशः तयोः समाहारः इति वरणात्ययं तस्मात् आ इति आवरणात्ययात् इतिपदद्वयम्—विवाहादारभ्य मरणपर्य्यन्तं व्यापिना इत्यर्थः कालेन दीर्घसहवासेन इत्यर्थः यत् परिणते स्नेहसारे स्थितमिति केचिद्व्याचक्षते ]॥ तत् तादृशं एकं मुख्यं श्रेष्ठमिति यावत् भद्रमकपटं सुमानुषस्य सज्जनस्य प्रेम कथमपि कृच्छ्रेणहि प्राप्यते लभ्यते। तादृशं प्रेम प्रायेण जगति दुर्लभम् इति भावः।

रामः। उपलब्धम्—ज्ञातम्।

दुर्मुखः। उपस्तुवन्ति प्रशंसन्ति। राज्ञः रामस्य पालनगुणेन वयं दशरथे मन्दोत्कण्ठाः कृताः इति पौरा व्याहरन्ति। दशरथस्य इति अधीगर्थदयेशां कर्म्मणि इति शेषत्वविवक्षायां षष्ठी।

रामः। अर्थस्य गुणरूपस्य वादः कथनम् इति अर्थवादः गुणानुवादः प्रशंसा इत्यर्थः। अर्थवादः प्रशंसा च स्तोत्रमीड़ास्तुतिर्नुतिः इति हलायुधः॥

प्रतिविधीयते प्रतिक्रियते॥

रामः । वाक् एव वज्रः इति वाग्वज्रः । तीव्रः प्रचण्डः संवेगः पतनवेगः यस्य स तीव्रसंवेगः दुःसहाभिघातः इत्यर्थः ।

रामः । हा हेति ।—हा हा धिक्, वैदेह्याः यत् परगृहवासदूषणम् अद्भुतैः उपायैः प्रशमितं, तत् एतत् दैवदुर्विपाकात् आलर्कं विषमिव पुनरपि सर्व्वतः प्रसृतम् ॥ ४१ ॥

हा इति खेदे अव्ययम्, दैन्ये द्विरुक्तिः । अहो कष्टम् वैदेह्याः सीतायाः यत् परस्य शत्रोः रावणस्य गृहे वासेन दशमासान् व्याप्य अवस्थानात् दूषणं दोषः अद्भुतैः अलौकिकैः विस्मयावहैः उपायैः अग्निपरीक्षणरूपैः प्रशमितं निवारितम्, असहायायाः शत्रुगृहे अवस्थानजन्य यत् कौलीनं प्रादुर्भूतं तत् अग्निपरीक्षया चारित्रोत्कर्षख्यापनेन उच्छिन्नमभूत् । तत् एतत् दूषणं लोकवादः दैवस्य दुर्भाग्यस्य दुर्विपाकात् प्रतिकूलपरिणामात् अलर्कस्य इदम् इति आलर्कं मत्तकुक्कुरसम्बन्धि विषम् इव पुनरपि भूयोऽपि सर्व्वतः समन्तात् प्रसृतम् बहुलीभूतम् । यथा प्रमत्त-सारमेयदंशनजन्य विष दैवैः उपायैः प्रशमं नीतं दुर्भाग्यवशात् कालान्तरेऽपि पुनरपि सर्व्वगात्रेषु विसर्पति, तद्वत् सीतायाः विषवद् दुर्व्विषहयन्त्रणा कौलीनं कथमपि अग्निपरीक्षया प्रशमं नीतम् पुनरपि मदीयनियतिदुर्विलासात् सर्व्वेषु पौरेषु व्याप्तिं गतम् । प्रहर्षिणीवृत्तम् म्नाजाभिर्मनजरगाः प्रहर्षिणीयम् । उपमालङ्कारः । अलर्को धवलार्के स्याद् योगोन्मादितकुक्कुरे इति मेदिनी । अलर्क + अण् — आलर्क । दुष् (णिच्) — दूषि + ल्युट् = दूषण । अदिभुवो डुतच् इति अद्भुतः । अद् इति आश्चर्य्ये अव्ययम् । दुर् + वि + पच् + घञ् = दुर्विपाक । प्र + सृप् + क्त (गत्यर्थत्वात् कर्त्तरि) = प्रसृप्त । सर्पति ; ससर्प ; असार्प्सीत्, असाप्सीत्, असृपत् । प्र + शम् (णिच्) + क्त (कर्म्मणि) = प्रशमित, (पक्षे प्रशान्त । भागएव इति भाग्यम् । स्वार्थे ष्यञ् स्वार्थिकाः प्रकृतेर्लिङ्गवचनान्यतिवर्त्तन्ते इति क्लीवत्वम्, [विमृश्य चिन्तयित्वा सकरुणम् सशोकम् सखेदमित्यर्थः ] ।

सतामिति । केनापि कार्य्येण लोकस्य आराधनम् सतां व्रतम् । तातेन मां प्राणांश्च मुञ्चता यत् पूजितम् ॥ ४२ ॥

केनापि कार्य्येण येन केनापि उपायेन, निरपराधायाः सीतायाः परित्यागेन अपि इति भावः लोकस्य जनस्य प्रकृतिवर्गस्य आराधन तोषणं सतां साधूनां व्रतम् अवश्यं करणीयं कर्म्म इत्यर्थः । तातेन पित्रा दशरथेन मां प्राणान् स्वजीवनञ्च मुञ्चता परित्यजता यत् लोकाराधनं व्रतं पूजितम् सत्कृतम् पालितमित्यर्थः । कैकेयीप्रीत्यर्थं निरागसमपि माम् अरण्ये प्रेषयन् तत्फलेन असूंश्च त्यजन् पिता यद्व्रतमुद्यापितवान् अहमपि लोकानां प्रीतये निरपराधामपि सीतामरण्ये विसृज्य तदेवानुचरिष्यामि ॥

कृ + ण्यत् = कार्य्य। कार्य्येणेति करणे तृतीया। लोकस्य इति कृद्योगलक्षणा कर्म्मणि षष्ठी। सतामिति शेषे षष्ठी। इदानीमेव कुलगुरुणा वशिष्ठेन लोकाना-मनुरञ्जनार्थमादिष्टोऽस्मि। अत: सीतापरित्याग एव मया कर्त्तव्य:।

यदिति। लोकश्रेष्ठै: सावित्रै: भूमिपालै: यत् साधु शुद्धं चरित्रं दीपितम्। मत्सम्बन्धात् चेदस्मिन् कश्मला किंवदन्ती स्यात्, हन्त अधन्यं माम् धिक॥ ४३॥

लोकेषु भुवनेषु श्रेष्ठै: प्रशस्यतमै: सावित्रै: सवितृवंशसम्भूतै: भूमिपालै: नृपतिभि: यत् साधु सत् शुद्ध विमलं निष्कलङ्कमिति यावत् चरित्रं वंशगत: कर्म्मसन्तान:प्रकृतीनां रञ्जनेन प्रशमिताशेषोपसर्गं भुव: पालनमित्यर्थ: दीपितं उज्ज्वलीकृतम् उत्कर्ष-नीतमित्यर्थ: मम सम्बन्धात् अन्वयात् योगादिति यावत् चेत् यदि अस्मिन् तस्मिन्; इदमद:शब्दौ तच्छब्दसमानार्थतया यच्छब्दनिराकाङ्क्षत्वप्रतिपत्तये कविभि: प्रयुज्येते; प्रजारञ्जनात्मके भूपालनकर्म्मणि कश्मला कुत्सिता मलिनेति यावत् किंवदन्ती लोकवाद: स्यात् जायेत, हन्त इति खेदे अव्ययम्, आहोवत अधन्यम् अकृतपुण्य दुर्भाग्य मां धिक्। शोच्योऽस्मि। शालिनी वृत्तम्। मात्तौ गौ चेच्छालिनी वेद-लोकैरिति लक्षणम्॥ धनं लब्धा इति धन्य: न धन्य: इति अधन्य:। धनगणा-ल्लब्धा इति यत्प्रत्यय:। सवितुरपत्यानि पुमांस: इति सावित्रा:। सवितृ + अण्। सू + तृच् = सवितृ। भूमिं पालयन्ति ये ते भूमिपाला: कर्म्मण्यण् इति अण्। भूमि + पालि + अण् = भूमिपाल। पा to protect in the causative form becomes पालि। चर + इत्र = चरित्र। अर्त्ति लू धू सू खन सह चर: इत्र:। प्रशस्य + इष्ठन् = श्रेष्ठ। प्रशस्यस्य श्रादेश:। दीप् + (णिच्) + क्त (कर्म्मणि) = दीपित। किम् + वद् + झच् (तत: स्त्रियां ङीप्) = किंवदन्ती; अनादिवार्त्ता स्यैतिह्यं किंवदन्ती जनश्रुति: इति हलायुध:। कश्मलं मलिन म्लानं मलीमसमुदा-हृतमिति हलायुध:। But Amara does not sanction the use of the word as an adjective. In his dictionary it appears as a noun and in a different senseमूर्च्छातु मोह: कश्मलम्—Cf. कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्। Gita. कश् + कल (उणादि) कश्मल, कुटिकशिकौतिभ्य: प्रत्ययस्य मुट्च। देवा: इज्यन्ते अस्मिन् इति देवयजनं तस्मात् सम्भव: उत्पत्ति र्यस्या: सा देवयजनसम्भवा यज्ञभूमिसमुत्पन्ना। वसूनि धारयति या सा वसुन्धरा पृथिवी संज्ञायां भृतृवृजिधारिसहितपिदम: इति खच्। खचि ह्रस्व: इति ह्रस्व:। पवित्रं करोति इति पवित्रयति, तत् करोति तदाचष्टे इति णिच्। तत: कर्म्मणि क्त:। स्त्रियां पवित्रिता। स्वस्या: जन्म इति स्वजन्म वृत्तिमात्रे सर्व्वनाम्न: इति पुम्वद्भाव:। स्वजन्म एव अनुग्रह: इति स्वजन्मानुग्रह: तेन पवित्रिता वसुन्धरा यया सा स्वजन्मानु-ग्रहपवित्रितवसुन्धरा। या भुवि जन्मपरिग्रहं कृत्वा स्वसंसर्गेण वसुधां पावितवती।

पू + इत्र = पवित्र। निमिः विदेहः जनकश्च तौ निमिजनकौ तयोः ( प्रधानपुरुषयोः ) वंशस्य नन्दिनी आनन्दविधात्री इति निमिजनकवंशनन्दिनी। पावकः अनलश्च वशिष्ठश्च अरुन्धती च ताः पावकवशिष्ठारुन्धत्यः ताभिः प्रशस्तं शीलं चरित्रं इति पावकवशिष्ठारुन्धतीप्रशस्तशीलम्। तेन शालते शोभते या सा पावकवशिष्ठारुन्धतीप्रशस्तशीलशालिनी। ताच्छील्ये णिनिः। प्र + शन्स + क्त (कर्म्मणि) प्रशस्त = praised. राममयं रामात्मकं रामसर्व्वस्वमित्यर्थः जीवितं प्राणाः यस्याः सा राममयजीविता प्रिया चासौ सखी चेति प्रियसखी। महत् अरण्यम् इति महारण्यम्। तत्र वास इति महारण्यवासः तत्र प्रियसखी इति महारण्यवासप्रियसखी। सप्तम्याः अलुक्पक्षे महारण्येवासप्रियसखी इति पदं स्यात् प्रियं प्रीतिकरं स्तोकं अल्पञ्च वदितुं शीलं यस्याः सा प्रियस्तोकवादिनी। ताच्छील्ये णिनिः। ईदृशः एवम्विधः भीषणः इत्यर्थः परिणामः दशाविपाकः। एवं ईदृशौ विधा प्रकारो यस्याः सा एवम्विधा तस्याः। परि + नम् + घञ् = परिणाम। उपसर्गादसमासेऽपि णोपदेशस्य इति णत्वम्।

त्वयेति। त्वया जगन्ति पुण्यानि, जनोक्तयः त्वयि अपुण्याः। त्वया लोकाः नाथवन्तः त्वम् अनाथा विपत्स्यसे ॥ ४४ ॥

त्वया करणेन जगन्ति भुवनानि पुण्यानि पवित्राणि जातानि गम्यमानक्रियानुरोधात् त्वयेति करणे तृतीया। यद्वा हेतौ तृतीया। किन्तु जनानां लोकानां उक्तयः जल्पनानि त्वयि विषये अपुण्याः अपवित्राः वीभत्सा इत्यर्थः। लोकाः जनाः त्वया राज्ञा नाथवन्तः सहायवन्तः त्वयेति अभेदे तृतीया धान्येन धनवानिवत्। त्वम् मया त्यक्ता अनाथा अशरणा विपत्स्यसे विपदमुपैष्यसि इत्यर्थः।

पुञो यत् णुक् ह्रस्वश्च इति पू + यत्, णुक् is the augment and the long vowel of पू is shortened : and thus पुण्य is obtained. वि + पद + लृट् स्यसे = विपत्स्यसे will die.

नूतनः अभिनवः। प्रत्यग्रोऽभिनवोनव्योनवीनो नूतनोनवः। नूत्नश्च—इत्यमरः। नव एव इति नूतनः स्वार्थे तनप् नूनादेशश्च।

दुर्मुखः। अग्निना परिशुद्धा इति अग्निपरिशुद्धा। तस्याः। रघोः कुलम् इति रघुकुलम्। तस्य सन्तान इति रघुकुलसन्तान गर्भे स्थितः पवित्रः रघुकुलसन्तानः यस्याः सा गर्भस्थितपवित्ररघुकुलसन्ताना। तस्याः। दुष्टाः जनाः इति दुर्ज्जनाः तेषां वचनम् इति दुर्ज्जनवचनं तस्मात् तदुपश्रुत्य इत्यर्थः इति ल्यब्लोपे कर्म्मण्यधिकरणे इति पञ्चमी। न आर्य्यम् इति अनार्य्यं गर्हितम् असाधुजनोचितमित्यर्थः। क्रियाविशेषणमिदम्। ऋ + ण्यत् = आर्य्य। अधि + अव + सो + क्त (भावे) = अध्यवसित। अध्यवसितम् चेष्टितम्।

राम:। इक्ष्वाकुवंश इति। इक्ष्वाकुवंश: प्रजानाम् अभिमत:। दैवात् वचनीयबीजं जातञ्च। विशुद्धिकाले यच्च अद्भुतं कर्म्म अतिदूरवृत्तं तत् क: हि प्रत्येतु ॥४५॥

इक्ष्वाको: वंश: प्रजानां प्रकृतीनां अभिमत: प्रिय: लोका: इक्ष्वाकुकुलोत्पन्नेषु राजसु चिरमनुरक्ता:। दैवात् दुर्भाग्यवशात् तत्र राजवंशे वचनीयस्य निन्दाया: बीजं किञ्चित् निमित्तं जातं समुत्पन्नम्। विशुद्धे: सीतायाश्चरित्रपरीक्षणस्य काले समये यत् अद्भुतं विचित्रं लोकातिगं कर्म्म समिद्धे वह्नौ पतिताया: सीताया: केशाग्रमपि न दग्धम् तया धृतं पुष्पदामापि न विशुष्कम् इति आश्चर्य्यं संवृत्तम्, अतिदूरे लङ्काद्वीपे वृत्तं जातं तत् क: इहस्थ: प्रत्येतु सत्यत्वेन मन्यताम्। न कोऽपि तत्र विश्वासं स्थापयेदित्यर्थ:। अर्हे लिङर्थे लोट्। लिङर्थश्च प्रवर्त्तना। प्रजायन्ते इति प्रजा: प्र + जन् + ड। उपसर्गे च संज्ञायामिति ड:। प्रजानामिति कर्त्तरि षष्ठी। क्तस्य च वर्त्तमाने इति कर्त्तरि षष्ठी। अभिमत इत्यत्र मतिबुद्धिपूजार्थेभ्यश्च इति वर्त्तमाने क्त। अत्र पूजार्थ:।

राम:। अतिबीभत्सं घृणितं कर्म्म यस्य स: अतिबीभत्सकर्म्मा जुगुप्सिताचरण:। नॄन् लोकान् शसति हिनस्ति इति नृशंस: निष्ठुर:। शंसतेरच्। वर्धेश्चित्तविकारे इति सन्। नित्यं सन्नन्तोऽयं। मानवधदानशानभ्यो दीर्घश्चाभ्यासस्य इति दीर्घत्वम्। बीभत्स धातो: कर्त्तरि अच् इति बीभत्सम्।

शैशवादिति। शैशवात् प्रभृति पोषितां सौहृदात् अपृथगाश्रयाम् इमां प्रियां सौनिक: गृहशकुन्तिकाम् इव छद्मना मृत्यवे परिददामि ॥ ४६ ॥

शैशवात् बाल्यात् प्रभृति आरभ्य इत्यर्थ: कार्त्तिक्या: प्रभृति इति भाष्यप्रयोगात् प्रभृतिशब्दयोगे पञ्चमी। पोषितां यत्नत: पालितां सुहृदयस्य भाव: इति सौहृदम् हृदयस्य हृल्लेखयदण्लासेषु इति हृदादेश:। सौहृददौर्हृदशब्दौ अणि हृद्भावादिति वामन:, हृद्भृतस्य तु अण् विधाने हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च इत्युभयपदवृद्धि: इति मल्लिनाथ:। सौहृदात् प्रीत्यतिरेकात न पृथक् भिन्न: आश्रय: अवलम्बनं यस्या: ताम् अपृथगाश्रयां मदेकशरणामित्यर्थ: अपृथगाशयामिति पाठे तु अपृथक् अभिन्न: आशय: अभिप्राय: यस्या: ताम् इति विग्रह: अभिप्रायश्छन्द: आशय: इत्यमर:। मयि नितरां विश्वस्तामित्यर्थ:। इमां प्रियां प्राणेभ्योपि गरीयसीं दयितां सौनिक: वैतंसिक: वैतंसिक: सौनिक: स्यात् कौटिको मांसविक्रयी इति अभिधानरत्नमाला। गृहशकुन्तिकां गृहपालितां पक्षिणीमिव छद्मना छलेन दोहदव्याजेन इत्यर्थ: मृत्यवे परिददामि अस्या: विनाशं साधयामि इत्यर्थ:। पोषिताम् अपृथगाश्रयामिति विशेषणद्वयं शकुन्तिकायामपि योज्यम्। यथा कश्चित् मांसविक्रयी यत्नत: पालितां नितरां विश्वस्तामपि पक्षिणीं धनलोभात् केनचिच्छलेन निहत्य विक्रीणीते, तथाहमपि यशोलोभात् बाल्यादेव पालितां मयि बद्धभावां इमाम् ऋजुहृदयां प्रियां दोहदच्छलेन

निहन्तुमुद्यतोऽस्मि । अहो मे नैष्ठुर्य्यं विश्वासघातकता च इति भावः । उपमालङ्कारः । रथोद्धता वृत्तम् । रात्परैर्नरलगैं रथोद्धता इति लक्षणम् । सूनास्याद्‌घातंनस्थानमिति हलायुधः । सूना आजीवो यस्य सः सौनिकः । सूना + ठक् । छादि + मनिन् = छद्मन् । कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः । छद्मना इति करणे तृतीया । शक् + उन्ति ( उणादि ) = शकुन्ति । शकुन्ति + कन् स्त्रियां टाप् = शकुन्तिका । शकेरुनोन्तोन्त्युनयः । शकुनः शकुन्तः शकुन्तिः शकुनिः । शकुन्ति-पक्षिशकुनिशकुन्तशकुनद्विजाः इत्यमरः । अस्पर्शनीयः स्प्रष्टुं मयोग्यः स्पृशः अनीयर । नैष्ठुर्य्यात् विश्वासघाताच्च पातकी अहम् सर्व्वथा सीतादेव्याः गात्रं स्प्रष्टुं न अर्हामि इत्यर्थः । पातयति इति पातकं पातयतेः ण्वुल् । पातकं विद्यते यस्य स पातकी । पातक + इनि । स्वैरं शनैः शनैः इत्यर्थः स्वैरः स्वच्छन्दमन्दयोरिति मेदिनी । स्वादीरेरिणोः इति वृद्धिरेकादेशः । उद् + नम् ( णिच ) + ल्यप् उन्नमय्य । मितां ह्रस्वः इति ह्रस्वः । अनुपसर्गात् नमेर्णिचि नमयति, नामयति इति पदद्वयं भवति । आङ् + कृष् + शतृ = आकर्षत् । कर्षति, चकर्ष, अकार्क्षीत, अक्राक्षीत्, अक्रक्षत् । क्रष्टः । दुष् णिच् + लट् मि = दूषयामि । शि + असुन् = शिरस् । शयतेः स्वाङ्गे शिरः किच्च ।

अपूर्व्वेति । अयि मुग्धे अपूर्व्वकर्म्मचाण्डालं माम् विमुञ्च । चन्दनभ्रान्त्या दुर्व्विपाकं विषद्रुमं श्रिता असि ॥ ४७ ॥

अयि मुग्धे सरले अपूर्व्वेण अदृष्टचरेण कर्म्मणा चाण्डालः चाण्डालतुल्यः क्रूरः इत्यर्थः तथोक्तं मां विमुञ्च परिहर । नाहं तव योग्यः । त्वं चन्दनभ्रान्त्या चन्दनतरुभ्रमेण दुष्टः विपाकः परिणामः यस्य तं दुर्व्विपाकं विषद्रुमं विषवृक्षं श्रिता आश्रितवती असि । यस्य समाश्रयणेन तीव्रया विषज्वालया मरणमापतति तादृशं विषवृक्षं यथा काचित् घनसारोऽयमिति मत्वा आश्रयति तथा त्वमपि सहजप्रेमकरुणार्द्रहृदयोऽयमिति मत्वा अतिनृशंसं मामाश्रयत्वेनोपेता असि । अत्र दृष्टान्तः अलङ्कारः । विषपरिणामी द्रुमः इति विषद्रुमः । शाकपार्थिवादिवत् समासः । द्रुः शाखा विद्यते अस्य इति द्रुमः । चन्दनस्य भ्रान्तिः इति चन्दनभ्रान्तिः तया । प्रकृत्यादिभ्यश्चोपसंख्यानमिति तृतीया । भ्रम् + क्तिन् = भ्रान्ति । चण्ड + आलञ् = चाण्डाल । पतिचण्डिभ्यामालञ् ।

সীতা । [ উৎকট স্বপ্নদর্শন করিয়া নিদ্রিতাবস্থায় বিলাপ করিতেছেন ] হা আর্য্যপুত্র, হে সৌম্য, আপনি কোথায় ?

রাম । আহা ! চিত্রদর্শন করিয়া দেবীর হৃদয়ে যে ক্লেশদায়িনী বিরহভাবনা হইয়াছিল তাহাই স্বপ্নেও ( এইরূপ ) উদ্বেগের কারণ হইয়াছে ।

[ সস্নেহে অতি মৃদুভাবে সীতার গাত্রসংবাহন করিতে করিতে ]

যে প্রেম সুখে ও দুঃখে একরূপ, সকল অবস্থায় অনুগুণ, যাহা অবলম্বন করিয়া (সাংসারিক দুঃখরাশি নিপীড়িত) হৃদয় বিশ্রামসুখ লাভ করে ; বার্দ্ধকেও যাহার মাধুর্য্য অপহৃত বা বিলুপ্ত হয় না এবং কালের আবর্ত্তনে লজ্জাদি প্রতিবন্ধকের অত্যয়ে যাহা পরিপাকপ্রাপ্ত স্নেহসারে পরিণত হয় সেই শ্রেষ্ঠ, অকপট সজ্জনের প্রেম কোনরূপে ( বহুপুণ্যবলে ) প্রাপ্ত হওয়া যায় ॥ ৪০ ॥

দুর্ম্মুখ। [ সমীপে গমন করিয়া ] মহারাজের জয় হউক।

রাম। যাহা জানিতে পারিয়াছ তাহা বল।

দুর্ম্মুখ। পুরবাসী ও জনপদবাসীরা "রামভদ্র আমাদিগকে মহারাজ দশরথের কথা বিস্মরণ করাইয়াছেন" এই বলিয়া আপনার সুখ্যাতি ও প্রশংসা করিয়া থাকে।

রাম। এ ত স্তুতিবাক্য ; আমার কোন দোষের বিষয় জানিয়া থাকত বল, যে তাহার প্রতিবিধান করা যাইতে পারে।

দুর্ম্মুখ [ অশ্রুমোচন করিয়া ] মহারাজ শ্রবণ করুন। [ কর্ণে ] প্রজারা এইরূপ এইরূপ বলিয়া থাকে।

রাম। অহহ, এ যে দুঃসহবেগে নিপতিত বাগ্‌বজ্র। [ মূর্চ্ছিত হইয়া পড়িলেন ]।

দুর্ম্মুখ। মহারাজ, আশ্বস্ত হউন।

রাম। [ আশ্বস্ত হইয়া ] আহা ধিক্ ধিক্ ! শত্রুগৃহে নিবাসহেতু ( চরিত্রভ্রংশ-শঙ্কারূপ ) বৈদেহীর যে অপবাদ অদ্ভুত উপায়ে নিবারিত হইয়াছিল, সেই অপবাদ দৈবদুর্ব্বিপাকবশতঃ ক্ষিপ্তকুক্কুরের বিষের ন্যায় পুনর্ব্বার সর্ব্বত্র পরিব্যাপ্ত হইয়া পড়িয়াছে ॥ ৪১ ॥

হতভাগ্য আমি এ বিষয়ে কি করিব। [ চিন্তা করিয়া শোকাকুলভাবে ] অথবা অন্য আর কি করিব।

যে কোন কর্ম্মদ্বারা লোকদিগের চিত্তরঞ্জন করাই সাধুদিগের ব্রত। পিতা আমাকে ও ( এমন কি ) জীবন পরিত্যাগ করিয়াও যে ব্রতের আরাধনা করিয়াছেন ॥ ৪২ ॥

সম্প্রতি ভগবান্ বশিষ্ঠও প্রজারঞ্জনের জন্য আদেশ করিয়া পাঠাইয়াছেন।

অপিচ—লোকশ্রেষ্ঠ, সবিতৃবংশসম্ভূত ভূমিপালগণ যে নিষ্কলঙ্ক, পবিত্র সাধু ব্রত সমুজ্জ্বল করিয়া গিয়াছেন, আমার সংসর্গবশতঃ সেই ব্রতে যদি মলিন লোকবাদের সম্পর্ক ঘটে তাহা হইলে হায়, আমি নিতান্ত দুর্ভাগ্য, আমাকে ধিক্ ॥ ৪৩ ॥

হা দেবি, দেবযজনভূমিসম্ভূতে, নিমি জনকের বংশনন্দিনি, রামময়জীবিতে, মহারণ্য-বাসপ্রিয়সখি, প্রিয়স্তোকবাদিনি, বহ্নি, বশিষ্ঠ ও অরুন্ধতী তোমার চরিত্রের প্রশংসা করিয়া থাকেন, তুমি জন্মপরিগ্রহরূপ অনুগ্রহ প্রকাশ করিয়া বসুন্ধরাকে পবিত্র করিয়াছ। ঈদৃশ পুণ্যশীলা তোমারও ভাগ্যের এইরূপ পরিণাম ! তোমা দ্বারা জগৎ পবিত্র হইয়াছে ; কিন্তু লোকে তোমার সম্বন্ধে কুৎসিত জল্পনা করিতেছে। তোমাদ্বারা লোকে সহায়সম্পন্ন ; কিন্তু তুমি অসাহায্যাবস্থায় বিপন্ন হইবে ॥ ৪৪ ॥

[ দুর্মুখের প্রতি ] দুর্মুখ, লক্ষ্মণকে বল, "তোমার নূতন রাজা রাম এইরূপ আদেশ করিতেছেন"। [ কর্ণে ] এইরূপ এইরূপ বলিবে।

দুর্মুখ। যিনি অগ্নিদ্বারা বিশোধিত, যাঁহার গর্ভে পবিত্র রঘুকুলের সন্তান রহিয়াছে, সেই দেবীর প্রতি দুর্জ্জনের বাক্য শুনিয়া মহারাজ এরূপ অনার্য্য বিধানে কৃতসঙ্কল্প হইলেন কেন ?

রাম। অনিষ্ট নিবারিত হউক। পুরবাসী ও জনপদবাসীরা দুর্জ্জন কেন হইবে ?

ইক্ষ্বাকুবংশ প্রজাদিগের অভিমত। দুর্ভাগ্যবশতঃ তাহাতে নিন্দার বীজ উৎপন্ন হইয়াছে। অগ্নিপরীক্ষার সময় যে অদ্ভুত ব্যাপার ঘটিয়াছিল, অতিদূরের সেই ঘটনায় এস্থানের কে বিশ্বাস করিতে পারে ? ॥ ৪৫ ॥

অতএব যাও।

দুর্মুখ। হায় দেবী। [ নিষ্ক্রান্ত ]

রাম। হা কষ্ট ! আমি অতি নৃশংস হইয়া পড়িলাম ; আমার আচরণও অতি-ঘৃণিত এবং জঘন্য হইয়া উঠিল।

বাল্যকাল হইতে যে প্রিয়াকে পোষণ করিয়াছি, সৌহার্দ্দহেতু যিনি আমা ভিন্ন অন্য কোন আশ্রয় জানেন না, আমি তাঁহাকে ছলপূর্ব্বক মৃত্যুর হস্তে সমর্পণ করিতে উদ্যত হইয়াছি। আমার এই কার্য্য, গৃহপালিত পক্ষিণীকে ছলপূর্ব্বক বধ করিতে উদ্যত মাংসবিক্রয়ীর কার্য্যের ন্যায় ॥ ৪৬ ॥

আমি স্পর্শের অযোগ্য পাতকী, কেন দেবীকে দূষিত করিতেছি। [ সীতার মস্তক ধীরে ধীরে উঠাইয়া বাহু সরাইয়া লইয়া ] হে সরলে, অভূতপূর্ব্ব কর্ম্মের অনুষ্ঠান করিয়া আমি চণ্ডাল হইয়াছি। আমাকে পরিত্যাগ কর। তুমি চন্দনতরুভ্রমে দুর্ব্বিপাক বিষবৃক্ষ আশ্রয় করিয়াছিলে ॥ ৪৭ ॥

*Sita* :—[ *Talks in her sleep* ] Alas ! my husband, you good one, where are you ?

*Rama* :—Ah ! This is the same uneasy thought of separation occasioned by beholding the picture, that troubles the queen in her sleep.

[ *Affectionately passes his hands over her body* .]

Scarcely (or with great difficulty) can be attained that artless love of a worthy and noble soul, which is the same in happiness or misery, which adapts itself to all conditions, which is the resting place of the heart, the charm of which is not taken off by old age, and which becomes a deep and mature affection, on account of the veil of mutual reserve being removed by the laps of time. (40).

*Durmukha* :—[*Approaching*] Victory to your Majesty.

*Rama* :—Tell me what you have learnt or known.

*Durmukha* :—The townsfolk and the country people praise your Majesty, saying that they have been caused to forget the great King Dasaratha by Ramabhadra.

*Rama* :—This is but a compliment or praise. Speak of some fault or defect, so that it might be rectified or removed.

*Durmukha* ; —[*With tears.*] May your Majesty listen. [*Whispers into his ears*] so and so.

*Rama* :—Oh ! This thunderbolt of words has a sharp and terrible fall ! [*Faints*].

*Durmukha* : —Be consoled, my lord.

*Rama* :—[ *Recovering.*] Alas ! Alas ! O Fie ! The very same scandal of the princess of Videha on account of her living in another's house, which was checked or repressed by wonderful means, has from an evil turn of fate, again spread everywhere like the poison of mad dog's bite. (41).

What can I do in this matter, a wretch that I am ? [*Reflecting piteously* ] or what else is to be done ?

To satisfy the people by any means is the aim or duty of good and pious (rulers) ; which was honoured by my father by forsaking me and his own life. (42).

And the holy sage Vasistha has even now sent words to the same effect.

And also—

If through connection with me a dirty or foul infamy arises in respect of that pure and noble character which was brightened and made resplendent by the kings of the Solar race, the best among men, then, alas ! fie upon me, a miserable wretch. (43).

Alas ! Queen, sprung from sacrificial ground, you who have sanctified the Earth by the favour of taking your birth in her, you who are the joy of the race of Nimi and Janaka, you who are graced with virtues praised by Fire, Vasistha and Arundhati, to whom Rama was the sole or all-engrossing object of her life, who were my beloved and dear companion in my exile in the forest, who are in the habit of talking moderately and agreeably, how has such a fate been ordained for you,so noble and graced as you are ?

The worlds have been hallowed by you ; but unhallowed are the gossips of the people regarding you. The people have found a protector in you ; but you will perish unprotected ( or helpless). (44).

[*To Durmukha*] Durmukha, tell Lakshmana :—"your new King Rama, commands you thus"—[*whispers into his ears.*] So and so.

*Durmukha* :—Why has your Majesty, hearing the remarks of mischievous men, come now to this wrong and unjust decision regarding the Queen who was tested in the ordeal of fire, and in whose womb is a pure progeny, the perpetuator of the race of Raghu.

*Rama* :—Tut ! Heaven forbid it ! How can the people of the town and the villages be mischievous or wicked ?

The race of Ikshwaku is dear to the people. Unfortunately a cause of infamy has taken place. Who could believe in the miraculous occurrence in a far off distant place which happened at the time of purification ? (45).

Go, therefore.

*Durmukha* :—Alas ! Queen ! [*Exit*].

*Rama* :—Alas ! oh woe ! I have become a cruel fellow, the perpetrator of an abominable and foul act.

I am going to hand over to death under a pretext my beloved wife who has been brought up by me from her childhood, and who on account of affection has no other resort or refuge than myself, just like a butcher killing a domesticated bird. (46).

Why then should I, a sinner, not fit to be touched, defile the queen (by my touch) ? [*Gently raising the head of Sita withdraws his arm.*]

O you simple and guileless one, leave me who have become a felon or *chandal* by his strange and unprecedented conduct ; you have resorted to a deadly poisonous tree taking it for a Sandal tree. (47).

हन्त इति खेदे अव्ययम्। जीवानां प्राणिनां लोकः जगत् इति जीवलोकः इदं भुवनयं प्राणिसनाथं विपर्यासं वैपरीत्यं प्राप्तम् ; न पुनः रमणीयम् ; किन्तु सम्यक्

विपरिवर्त्तितम् दुःसहापारदुःखानामायतनमिव जातम्। जीवितेन प्राणसन्धारणेन प्रयोजनं रामस्य पर्य्यवसितम् अवसानं गतम्; समाप्तिमागतम्। सीताविरहितस्य रामस्य जीवितेन किमपि प्रयोजनं नास्ति। इदं जगत् सीताविरहितस्य मे सम्बन्धे शून्यं प्राणिशून्यं जीर्णं भग्नप्रायं वृक्षलतादिहीनं अरण्यं वनमिव निष्फलावस्थानं जातम्। संसारोऽयं सारहीनः अरमणीयः सञ्जातः शरीरं कष्टप्रायं क्लेशबहुलं जातम्। कष्टानां क्लेशानां प्रायो वाहुल्यम् यत्र तत् कष्टप्रायम्। नास्ति शरणं रक्षिता यस्य सः अशरणः असहायः अहं भवामि। का गतिः कः उपायः खलु परित्राणाय भवेत्।

वि + परि + अस् + क्त ( कर्म्मणि ) = विपर्य्यस्त। अस्यति; आस; आस्थत्। परि + अव + सो + क्त (कर्त्तरि) = पर्य्यवसित। स्यति; ससौ; असात्; असासीत्। जॄ + क्त ( कर्त्तरि ) = जीर्ण। जीर्य्यति; जजार अजारीत्। संसरति आवर्त्तते अस्मिन् इति संसारः। सम् + सृ + घञ्। सरति कालान्तरं गच्छति इति सारः। सृ + घञ् ( कर्त्तरि )। सृ स्थिरे। सारो बले दृढांशे च।

दुःखेति। दुःखसंवेदनाय एव रामे चैतन्यम् आहितम्। मर्म्मोपघातिभिः स्थिरैः प्राणैः वज्रकीलायितम् ॥ ४८ ॥

दुःखस्य क्लेशस्य संवेदनमनुभवः तस्मै एव केवलं दुःखं अनुभवितुं रामे दुर्भाग्ये मयि चैतन्यं संज्ञा आहितम् आरोपितं निवेशितमिति यावत् विधात्रा इति शेषः। सुखदुःखानुभवः चेतनस्य धर्म्मः चैतन्यविशिष्टस्य मम तु केवलदुःखानुभवः इति मत्सृष्टौ विधातुः वैलक्षण्यं लक्ष्यते। मर्म्माणि हृदयादिजीवस्थानानि उपघ्नन्ति व्यथयन्ति इत्यर्थः ये तैः मर्म्मोपघातिभिः हन्तेः ताच्छील्ये णिनिः अरुन्तुदैः स्थिरैः दृढैः कठिनैरिति यावत् देहं परित्यज्य गन्तुमसमर्थैरित्यर्थः प्राणैः असुभिः वज्रकीलायितं वज्रकीलैः पाषाणशङ्कुभिरिव आचरितम्। यथा सुदृढाः पाषाणघटितशङ्कवः मर्म्मस्थाने निखलं सूताः अनिर्व्वाच्यां वेदनां जनयन्ति, तथा इमे प्राणाः एवम्बिधायामपि दशायां अनुत्क्रामन्तः कामपि व्यथां कुर्व्वन्ति इति तात्पर्य्यम्। उपमालङ्कारः।

सम् + विद + ल्युट् संवेदन। यद्वा सम् + विद (णिच) + ल्युट्। संवेदनाय = संवेदयितुं अनुभावयितुमित्यर्थः। विधात्रा चैतन्यं आहितम्। आङ् + धा + क्त (कर्म्मणि) = आहित। वज्रकीला इव आचरन्ति इति वज्रकीलायन्ते कर्त्तुः क्यङ्, सलोपश्च इति उपमानभूतात् कर्त्तुः आचरणार्थे क्यङ्, अकृत्सार्व्वधातुकयोरिति दीर्घः। ततः वज्रकीलाय इति नामधातोः भावे क्तः। Properly speaking मर्म्मोपघातिभिः is an ' adjective of वज्रकीलैः; the construction of the sentence is स्थिरैः प्राणैः मर्म्मोपघातिभिः वज्रकीलैः इव आचरितम्।

But in the course of the process of reducing वज्रकीलै: to a nominal verb, the adjective मर्म्मोपघातिभि: has been transferred to प्राणै: which is identified with वज्रकीलै:। Hence it is an instance of transferred epithet.

अम्ब इति सम्बोधने अम्बार्थनद्योर्ह्रस्व: इति ह्रस्व:। भूतानां धात्री धारणकर्त्री पोषणकर्त्री च इति भूतधात्री पृथिवी। भूतधात्री रत्नगर्भा जगती सागराम्बरा इत्यमर:। प्रियश्चासौ सखाचेति प्रियसख: राजाह:सखिभ्यष्टच् इति टच्। त्रिजटा अशोकवनिकायां सीताया: परिरक्षणार्थं रावणेन नियुक्तानां चेटीनामन्यतमा। सा च सीतायां स्नेहपरायणा आसीत् इति तामाह्वयति राम: सखि त्रिजटे इति। मुषिता: वञ्चिता: परिभूता: तिरस्कृता:। यां सीतां यूयं यत्नेन अरक्षत, सेदानीं मूढ़ेन दुरात्मना मया विनाशं नीयते इति युष्माकं यत्न: निष्फलीकृत:। रामहतक: इत्यत्र कुत्सितानि कुत्सनै: इति समास: विशेष्यस्य पूर्व्वनिपातार्थमयमारम्भ इति काशिका। कुत्सितो राम: इत्यर्थ: तेषां वशिष्ठप्रमुखानां आह्वाने आकारणे को नाम अहम्। सर्व्वथा अयोग्योऽस्मि तेषां नामकीर्त्तने इत्यर्थ:। नामेति कुत्सायां। नामप्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने इत्यमर:।

तेहीति। महात्मान: ते कृतघ्नेन दुरात्मना मया गृहीतनामान: पाप्मना स्पृश्यन्ते इव इति मन्ये ॥ ४९ ॥

महान् आत्मा स्वभावो येषां ते महात्मान: पुण्यस्वभावा: ते वशिष्ठप्रमुखा: कृतं हन्ति इति कृतघ्न: मूलविभुजादित्वात् क:, तेन कृतघ्नेन अकृतज्ञेन कृतोपकारविध्वंसकेन इति यावत् दुरात्मना क्रूरेण मया गृहीतं नाम येषां ते गृहीतनामान:। उच्चार्य्यमाणनामाक्षरा: पाप्मना स्पृश्यन्ते संसृज्यन्ते इव इति मन्ये। पापस्वभावस्य मे कण्ठनि:सृतपापपङ्किलशब्देन सह तेषां नामाक्षराणां संसर्गात् तेषामपि पापसंस्पर्श: इति प्रौढ़ोक्त्या सम्भाव्यते। उत्प्रेक्षालङ्कार:। अत्र मन्ये, इव इति शब्दद्वयं उत्प्रेक्षाद्योतकम्। एकेनैव इष्टसिद्धौ द्वितीयस्य आनर्थक्यम्। तथापि वक्तु: शोकाभिभूतत्वं व्यञ्जयितुमनर्थकमपि द्वितीयं पदं प्रयुक्तं कविना इति सम्भावयाम:।

विश्रम्भादिति। निर्घृण: य: अहम् विश्रम्भात् उरसि निपत्य लब्धनिद्रां गृहस्य शोभाम् आतङ्कस्फुरितकठोरगर्भगुर्व्वीं प्रियगृहिणीं उन्मुच्य क्रव्याद्भ्य: बलिमिव क्षिपामि ॥ ५० ॥

नास्ति घृणा करुणा यस्य स निर्घृण: निष्ठुर: जुगुप्साकरुणे घृणे इत्यमर:। य: अहं विश्रम्भात् विश्वासातिशयात्, अयं मे प्राणान्सं विधास्यति इति स्वप्नेऽपि चिन्तयितु मशक्तत्वान्मम्ययजीवितत्वादित्यर्थ: उरसि मम वक्षसि निपत्य शयित्वा लब्धा निद्रा यया ताम् लब्धनिद्रां प्रसुप्ताम् गृहस्य शोभाम् लक्ष्मीम् आतङ्केन भयेन उद्वेगेन वा स्फुरित:

स्फुरितः कठोरः पूर्णः यो गर्भः तेन गुर्व्वीं भारवती अलसगमना, ताम् आतङ्कस्फुरित-कठोरगर्भगुर्व्वीम् पूर्णगर्भाम् हिंस्रेभ्यः पलाय्य आत्मत्राणे असमर्थामितिभावः प्रियां वल्लभां गृहिणीं पत्नीं उन्मुच्य विहाय क्रव्यं आममांसं अदन्ति ये ते क्रव्यादः तेभ्यः राक्षसादिभ्यः बलिम् उपहारमिव क्षिपामि उपनयामि। निर्ज्जनेऽरण्ये इमाम् असहायां प्राप्य हिंस्राः श्वापदा राक्षसादयो वा शकलीकृत्य भक्षयिष्यन्ति ; अस्याः त्वगस्थ्यादीनि इतस्ततो विक्षिप्तानि भविष्यन्ति इति उत्प्रेक्ष्य क्षिपामि इति पदं प्रयुक्तम्। प्रहर्षिणीवृत्तम्। वि + श्रनभ् + घञ् = विश्रम्भ। विश्रम्भते। शोभेति निपातनात्। शुभ्धातोः भिदादित्वादङ्, भिदादेराकृतिगणत्वात्। ङित्वेऽपि गुणः निपात्यते इति वामनः। शोभयति इति शोभा। ण्यन्तात् शुभेः कर्त्तरि अच् स्त्रियां टाप इति केचित्। आतङ्क इत्यत्र तङ्कधातोः बाहुलकात् घञ्। क्रव्यं अदन्ति इति क्रव्यादः। "क्रव्ये च" इति क्रव्योपपदात् अदेः विट्। "अदोऽनन्ने" इत्यनेनैव सिद्धे वचनमण्बाधनार्थम् कथं तर्हि क्रव्यादोऽस्रप आसुर इति पक्वमांसशब्दे उपपदेऽण् उपपदस्य क्रव्यादेशः पृषोदरादित्वात् इति सिद्धान्तकौमुदी। क्रव्याद्भ्यः इत्यत्र सम्प्रदाने चतुर्थी। बलिर्दैत्य-भेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्रीतु जरया श्लथचर्म्मणि। गृहदारु-प्रभेदे च जठरावयवेऽपि च इति मेदिनी।

पश्चिमः अन्तिमः। पश्चात् शब्दात् डिमन् प्रत्ययः। रामस्य इति शेषे षष्ठी। शिरसा इत्यनेन सम्बन्धः। शिरसा इति कर्त्तरि तृतीया। उभयप्राप्तौ कर्म्मणि इति कर्त्तरि निषेधात्। पादौ पङ्कजे इव इति पादपङ्कजे। तयोः कर्म्मभूतयोः स्पर्श इति पादपङ्कजस्पर्शः। पङ्क + जन् + ड = पङ्कज।

[ नेपथ्ये यवनिकान्तराले ] अब्रह्मण्यम् इति सम्भ्रमे विरक्तिः। ब्रह्मणे ब्राह्मणाय हितम् इति ब्रह्मण्यम्। सर्व्वथा अवध्यमित्यर्थः तन्न भवति इति अब्रह्मण्यम्। अवध्यः ब्राह्मणः हन्यते त्रायतां भोः इति अब्रह्मण्यशब्दस्य अर्थः। अब्रह्मण्यमवध्योक्तौ इत्यमरः।

ऋषीणामिति। यमुनातीरवासिनाम् उग्रतपसां ऋषीणां स्तोमः लवणत्रासितः त्रातारं त्वाम् उपस्थितः॥ ५१॥

यमुनायाः कलिन्दकन्यायाः तीरे तटे वसन्ति ये ते यमुनातीरवासिनः तेषां कालिन्द्युपकूलवास्तव्यानां उग्रं कठोरं तपः, येषां ते उग्रतपसः तेषां तपोनिरतानां सर्व्वथा रक्षणार्हाणामितिभावः। ऋषीणां मुनीनां स्तोमः समूहः स्तोमः स्तोत्रेऽध्वरे वृन्दे इत्यमरः। लवणेन मधुदैत्यात्मजेन रावणस्य भागिनेयेन त्रासितः भीषितः त्रातारं रक्षितारं शरण्यमिति यावत त्वाम् उपस्थितः प्राप्तः। तपसः प्रत्यूहमाचरतो लवणाद्भीताः तद्वधमभीप्सवो मुनयो भवत्सकाशमागताः इत्यर्थः।

त्रस् ( णिच् ) + क्त ( कर्म्मणि ) = त्रासित। स्तु + मन् = स्तोम। त्रै + तृच्,

= त्रातृ। द्वितीयाया एकवचने त्रातारम्। उप + स्था + क्त (कर्त्तरि) = उपस्थित। उपसर्गवशात् सकर्म्मकत्वम्। त्वामिति अस्य कर्म्मपदम्।

राम:। अद्यापि उन्मूलितेऽपि लोककण्टके रावणे इत्यर्थ:। अत्र रामस्य धीरोदात्तनायकस्य गर्व्व: विमर्षेण छन्नोऽपि किञ्चित् स्फुटतां गत:। राक्षसेभ्य: त्रास: इति राक्षसत्रास:। पञ्चमीतत्पुरुष:। कुम्भीनसी रावणस्य भगिनी मधुना या हृता राक्षसधर्म्मेण ऊढ़ा च। कुम्भी इव नासिका अस्या: इति कुम्भीनसी। पद्दन्नोमा-सित्यादिना नासिकाया: नसादेश: स्त्रियां ङीप् च निपात्यते। यद्वा अङ्गनासिकाया: नसादेश: संज्ञायां नसंचास्थूलादिति नासिकाया: स्थाने नस इत्यादेश: अच् च। तत: स्त्रियां ङीप्। अथवा संज्ञाशब्दोऽयं विग्रहं नार्हति। कुम्भी फलविशेष:। श्रीपर्णिका कुमुदिका कुम्भी कैटर्य्यकट्फलौ इत्यमर:। यद्वा कुम्भी उखा स्थाली। इत्यर्थ:। स्त्रियामुखाकट्फलयो: पृश्निकायाञ्च पाटलौ इति मेदिनी। कुम्भीनस्या: पुत्र: तस्य कुम्भीनसीपुत्रस्य लवणस्य समुन्मूलनाय उच्छेदाय लवणं उन्मूलयितु-मित्यर्थ: उन्मूलयते: ल्युट्। कतिचित् कियन्ति। किम् + डति = कति। बहु-वचनान्तोऽयं शब्द:। डतिश्च इति षट्संज्ञायां षड्भ्यो लुक् इति जस्शसो: लुक्। एवं गता एतदवस्था मया अरण्ये त्यक्ता इत्यर्थ: भविष्यसि जीविष्यसि। श्लाघ्यां श्लाघामर्हति या सा श्लाघ्या ताम्। श्लाघाशब्दात् यत्। यद्वा श्लाघ्धातो: ण्यत्। श्लाघ्यां महनीयचरितां दुहितरं कन्यां अवेक्षस्व विपद: त्रायस्व इत्यर्थ:।

जनकानामिति। यत् जनकानां रघूणां च कृत्स्नं गोत्रमङ्गलम्। पुण्यशीलां यां पुण्ये देवयजने अजीजन:॥ ५२॥

यत् जनकानां विदेहानां रघूणां इक्ष्वाकूणाञ्च कृत्स्नं समग्रं गोत्रयो: वंशयो: मङ्गलम्, कल्याणम्। यदिति विधेयप्राधान्यात् क्लीवम्। या सीता निमिवंशस्य तथा रघुवंशस्य च मङ्गलाधिष्ठात्रीदेवता इत्यर्थ:। पुण्यं पवित्रं शीलं यस्या: सा पुण्य-शीला तां पूतचरित्रां यां पुण्ये पवित्रे देवयजने यज्ञभूमौ अजीजन: उत्पादितवती आसी:। जनयते: लुङिरूपम्। जनकानां रघूणामिति लक्षणया तद्राजसंज्ञायां बहुवचने अञोलुक्।

सीता। दुष्ट: स्वप्न: इति दु:स्वप्न: तेन विप्रलब्धा वञ्चिता प्रतारिता इति यावत्। आक्रन्दामि आरटामि। एकाद् आकिनिच् असहाये इति आकिनिच् प्रत्यय: स्त्रियां ङीप्। एकाकिनी ताम्। एक: एकाकी: एकक:। उज्झ + क्त्वा = उज्झित्वा। उज्झति; उज्झामास......; औज्झीत्। उज्झित:। वि + प्र + लभ् + क्त (कर्म्मणि) = विप्रलब्ध।

किमिदानीमेतत्—पूर्व्वं कदापि स मामसहायां परित्यज्य अन्यत्र न गत: तत् किमद्य

एतदवस्थां निद्रितां मां विहाय अन्यत्र गत: । भवतु अस्य अपराधस्य निवारणाय अस्मै कुपिष्यामि । कोपप्रस्फुरितोधरायाः मम्मो भीतोऽयं पुनरेवं न प्रवर्त्तिष्यते । कोपमस्मै करोमि इति चिन्तयामि किन्तु तं प्रेक्ष्य मम आत्मनः उपरि प्रभुत्वं विगलितं भवति । यद्यहं आत्मनि विगलितप्रभुता न भवेयम् तदा कोपं करिष्यामि ।

दुर्मुखः । सज्जः प्रयाणार्थं प्रगुणीकृतः । सज्जधानीः अच् । सज्जति । सज्जते इति केचित् ।

सीता । परिस्फुरति स्पन्दते । स्फुरति ; पुस्फोर ; अस्फुरीत् । गर्भस्य भारः गुरुगर्भः इत्यर्थः । क्लदभिष्टिनी भावी द्रव्यवत्प्रकाश्यते । श्लथिलं शनैः शनैः धीरमित्यर्थ. ।

রাম। [ উত্থান করিয়া ] হায়, সম্প্রতি এই জীবলোক একেবারে পরিবর্ত্তিত হইয়া গেল। রামের জীবন ধারণের প্রয়োজন শেষ হইয়াছে। এক্ষণে এই জগৎ জনশূন্য জীর্ণারণ্যের ন্যায় হইল। সংসার অসার, শরীরধারণ ক্লেশভোগমাত্রসার। আমি অশরণ হইয়া পড়িলাম। কি করি ; কি গতি হইবে ? অথবা কেবলমাত্র দুঃখভোগের জন্যই বিধাতা রামের চৈতন্য বিধান করিয়াছেন। আমার এই প্রাণ মর্ম্মোপঘাতী বজ্রশঙ্কুর ন্যায় স্থির হইয়াছে ( নির্গত হইতেছে না ) ॥ ৪৮ ॥

হা মাতঃ অরুন্ধতি, হা ভগবন্ বশিষ্ঠ বিশ্বামিত্র, হা দেব অনল, হা দেবি ভূতধাত্রি, হা তাত জনক, হা পিতঃ দশরথ, হা মাতৃগণ, হা প্রিয় সখে সুগ্রীব, হা সাধো হনূমন, হা পরমোপকারী সুহৃৎ লঙ্কাপতি বিভীষণ, হা সখি ত্রিজটে, তোমরা সকলে দুরাত্মা রামকর্ত্তৃক বঞ্চিত হইলে ও অবমানিত হইলে। অথবা আমি এক্ষণে তাঁহাদিগকে আহ্বান করিবার কে ?

আমার মনে হয় যে, কৃতঘ্ন ও দুরাত্মা আমি সেই মহাত্মাদিগের নাম উচ্চারণ করাতে তাঁহাদের যেন পাপস্পর্শ হইতেছে ॥ ৪৯ ॥

আমি এমনই নৃশংস যে—

বিশ্বাসাতিশয়বশতঃ আমার বক্ষঃস্থলের উপরি পতিত হইয়া লব্ধনিদ্রা, গৃহের শোভা-স্বরূপা, ও ভয় ও উদ্বেগে স্পন্দমান পূর্ণগর্ভভারে অলসগমনা প্রিয়গৃহিণীকে পরিত্যাগ করিয়া ক্রব্যাদ্‌গণকে উপহাররূপে প্রদান করিতে উদ্যত হইয়াছি ॥ ৫০ ॥

[ সীতার চরণদ্বয় স্বমস্তকে ন্যস্ত করিয়া ] দেবি, দেবি, রামের মস্তক তোমার চরণ-পঙ্কজকে এই শেষ স্পর্শ করিল। [ ক্রন্দন করিতে লাগিলেন ]

[ নেপথ্যে ] পরিত্রাণ কর, পরিত্রাণ কর।

রাম। ওহে কে আছ, জানিয়া আইস, এ কি।

[ পুনর্ব্বার নেপথ্যে ] যমুনাতীরবাসী কঠোরতপস্তাপরায়ণ ঋষিগণ লবণদৈত্যকর্ত্তৃক ত্রাসিত হইয়া পরিত্রাণার্থ আপনার নিকট উপস্থিত হইয়াছেন ॥ ৫১ ॥

রাম। আঃ! এখনও রাক্ষসের ভয় ? যাই এই দুরাত্মা কুম্ভীনসীপুত্রের নিধনার্থ শত্রুঘ্নকে প্রেরণ করি। [ কএকপদ গমন করিয়া, পুনর্ব্বার প্রত্যাবর্ত্তন

করিয়া ] হা দেবি, এ অবস্থায় তুমি কিরূপে জীবনধারণ করিবে। ভগবতি বসুন্ধরে, শ্লাঘ্যচরিত্রা দুহিতা জানকীকে দেখিবেন। যিনি জনক ও রঘুদিগের বংশের পূর্ণমঙ্গল-স্বরূপ; যে পুণ্যশীলাকে আপনি পবিত্র দেবযজ্ঞভূমিতে উৎপাদন করিয়াছিলেন ॥৫২॥

[ নিষ্ক্রান্ত ]

সীতা। হা সৌম্য আর্য্যপুত্র! আপনি কোথায়? [ হঠাৎ উত্থান করিয়া ] হায়! হায়! দুঃস্বপ্নদ্বারা বঞ্চিত হইয়া আমি আর্য্যপুত্রের জন্য ক্রন্দন করিতেছি। হায় হায়! [ অবলোকন করিয়া ] কি? নিদ্রিতা আমাকে একাকিনী রাখিয়া আর্য্যপুত্র চলিয়া গিয়াছেন? আজ এরূপ কেন হইল? আচ্ছা, আমি তাঁহার উপর রাগ করিব; যদি তাঁহাকে দেখিয়া আমার নিজের উপরি প্রভুত্ব থাকে। এখানে পরিজন কে উপস্থিত আছ?

দুর্ম্মুখ। [ প্রবেশ করিয়া ] দেবি, কুমার লক্ষ্মণ নিবেদন করিতেছেন যে রথ প্রস্তুত, দেবি রথে আরোহণ করুন।

সীতা। এই আমি আরোহণ করিতেছি। [ উত্থান করিয়া কিছু দূর গমন করিয়া ] আমার এই গর্ভভার যেন স্পন্দিত হইতেছে। অতএব ধীরে ধীরে গমন করি।

দুর্ম্মুখ। দেবি, এদিকে আসুন, এদিকে আসুন।

সীতা। তপোধনদিগকে নমস্কার করি; রঘুকুলদেবতাদিগকে নমস্কার করি; আর্য্যপুত্রের চরণকমলে নমস্কার করি; সকল গুরুজনদিগকে নমস্কার করি।

[ সকলে নিষ্ক্রান্ত ]

চিত্রদর্শন নামক প্রথম অঙ্ক সমাপ্ত।

*Rama* :—[*Rising up*]. Alas! To me this world of mortal beings is now quite changed. The object of Rama's life has come to an end This world is now an empty, withered wilderness.

"All the uses of this world" have become stale, flat and uninteresting." This body has become an abode of misery. I am helpless; what shall I do? What way there is ( out of this difficulty) ?

Or—

Consciousness was given to Rama to feel pain alone. This life, firmly rooted as it is, seems to be like an adamantine peg piercing into the tenderest and most vital parts of the heart. (48).

O Mother Arundhati, O holy sages Vasistha and Viswamitra, O Fire-God, O Goddess Earth, O father Janaka, O father, O mothers, O dear friend Sugriva, O gentle Hanuman, O my great

benefactor Bibhisana, the King of Lanka, O friend Trijata, you all have been robbed and insulted by the accursed Rama.

Or who am I to call them now ?

Methinks that these high-souled persons are being defiled, as it were, by sin, their name being taken or uttered by me, an ungrateful and wicked fellow. (49).

I, who, –

A heartless wretch, am going to discard and cast off like an offering to the beasts of prey my beloved wife, the very ornament of my home, who on account of trustfulness has fallen asleep, reclining on my bosom and who is heavy with the developed fœtus quivering within her from her nervous tremor. (50).

[*Placing the feet of Sita on his head.*]

My queen, my queen, this is the last time that your lotus-like feet come in contact with the head of Rama. [*Weeps*].

[ *Behind the scenes* ] Help ! Help ! Ho !

*Rama.*—Let it be ascertained, ho, what this is

[*Again behind the scenes.*]

Being terrified by *Lavana*, the whole body of ascetics living on the banks of the Jamna, and practising severe penance, have come to you for protection. (51).

*Rama.*—What ! Terror from Rakshasas even now ! Let me send Satrughana for the destruction of this wicked son of Kumbhinasi. [ *Going a few steps, coming back again.*] Alas ! My queen ! How will you support life in this condition ? Holy mother Earth, take care of your noble daughter, Janaki ;—

Who is the entire blessing of the families of Janaka and Raghu ; and whom, of pure and spotless character, you brought forth in the holy sacrificial ground. (52).

[*Exit*].

*Sita.*—Alas ! Alas ! My gentle husband, where are you ! [*Rising up suddenly.*] Oh ! fie ! Oh ! fie ! I have been deluded by a bad dream and am calling out my husband. Alas ! Alas ! [*Beholding*]. How now my husband has gone away, leaving me alone asleep !

Why, is it so? Well, I shall be angry with him, if I have control over myself when I see him. What attendant is here?

[ *Enter Durmukha*].

*Durmukha.*—O, queen, the prince Lakshmana informs—that the car is ready and that your Highness may get into it.

*Sita.*—Here I am ascending it. [ *Rises up and walks* ]. My heavy womb seems to be throbbing. Therefore I will go slowly.

*Durmukha.*—This way, queen, this way.

*Sita.*—Here is my bow to the ascetics whose wealth is penance; here is my bow to the guardian deities of the house of Raghu; here is my bow to the lotus-like feet of my husband; and to all those who are my elders or superiors.

[ *Exeunt omnes.* ]

*End of the first Act—called the Picture-show.*

———

# द्वितीयोऽङ्कः ।

[ नेपथ्ये ]

सु शोभनम् आगतम् इति स्वागतम् शुभागमनम् । आङ् + गम् + क्त ( भावे ) = आगत । आगतम् आगमनम् इत्यर्थः । तप एव धनं यस्याः सा तपोधना । तस्याः ।

अध्वानं गच्छति यः सः अध्वगः पथिकः । अध्वगस्य वेश इव वेशः यस्याः सा अध्वगवेशा । पथिकवेशा तापसी ; काचित् तपःपरायणा नारी । अध्वन् + गम् + ड = अध्वग । तपस् + अण् = तापस ; स्त्रियां ङीप् । फलानि कुसुमानि पुष्पाणि पल्लवानि अचिरोद्गतपत्राणि च इति फलकुसुमपल्लवानि ; फलकुसुमपल्लवम् वा । सर्व्वोऽपि द्वन्द्वो विभाषया एकवद्भवति । फलकुसुमपल्लवम् एव अर्घ्यम् अर्घार्थं द्रव्यम् इति फलकुसुमपल्लवार्घ्यम् तेन । करणे तृतीया । माम् उपतिष्ठते पूजयति गृहागतः अतिथिः पाद्यार्घ्यादिभिः सम्पूज्यते इत्याचारः । मूल्ये पूजाविधौ अर्घः इत्यमरः । अर्घाय पूजाविधये इदम् इति अर्घ्यम् । पादार्घाभ्याञ्चेति यत्प्रत्ययः । उपतिष्ठते इत्यत्र देवपूजायामात्मनेपदम् । अतिथौ देवत्वारोपात् देवपूजारूपोऽर्थः सङ्गच्छते । तथाचोच्यते सर्व्वदेवमयोऽतिथिः ।

वनदेवता । विकीर्य्य विक्षिप्य ; वि + कृ + ल्यप् = विकीर्य्य ।

यथेच्छमिति । इदं वनं यथेच्छं भोग्यम् ; अयं मे सुदिवसः ; सतां सद्भिः सङ्गः पुण्येन कथमपि हि भवति । तरुच्छाया तोयं फलं वा मूलं वा यदपि तपसः योग्यम् अशनं तद् अपि इह वः पराधीनं न ॥ १ ॥

इदं वनं तपोवनम् वो युष्माकम् इच्छामनतिक्रम्य इति यथेच्छम् स्वेच्छया इत्यर्थः । भोग्यम् उपभोगयोग्यम् । अयं मे सुदिवसः पुण्यं दिनं भाग्यवशात् सम्प्राप्तम् । यतः सतां साधूनां सद्भिः पुण्यवद्भिः सह सङ्गः समागमः पुण्येन सुकृतफलेन कथमपि कष्टेनैव हि निश्चितं भवति । भवादृशां साधूनां समागमः पुण्यफलेनैव जातः अहो मे भाग्यम् अद्य रजनी सुप्रभाता । तरोः वृक्षस्य छाया अनातपः विश्रामार्थमिति भावः तोयं निर्झरिणीजलं तृष्णानिवारणार्थम् फलं मूलं कन्दादिकं यदपि तपसः तपश्चरणस्य इन्द्रियसंयमादेश्च योग्यमनुकूलम् अशनं खाद्यम् क्षुन्निवृत्त्यर्थमिति भावः तत् अपि इह अत्र आश्रमे वो युष्माकं पराधीनम् अन्यायत्तं न । स्वेच्छया उपभुज्यताम् इत्यर्थः । यत्र कुत्रचित् तरुतले निषद्य अध्वक्लमं विनोदय, स्वच्छं स्वादु

जलं निपीय तृष्णां शमय, फलमूलादिकम् उपभुज्य च क्षुधां निवर्त्तय इति तात्पर्य्यम्। शिखरिणीवृत्तम्।

यथेच्छमिति अनतिक्रमार्थे अव्ययीभावः। इष् + श (भावे) निपातनात् इच्छा। भुज् + ण्यत् = भोग्य। अत्र भक्ष्यार्थाभावात् कुत्वम्। भोज्यं भक्ष्ये। पुष्पैरेभिरिति करणे तृतीया। योगाय प्रभवति इति योग्यम्। योग + यत्। योगाद् यत्। अश् + ल्युट् ( कर्मणि ) = अशन। अधिशब्दस्य शौण्डादिगणे पाठात् परस्मिन् अधि इति सप्तमीसमासे अध्युत्तरपदादिति खप्रत्ययः। पराधीनं परायत्तम्।

तापसी। यस्त्वं मयि एवं सानुग्रहा अभ्यर्थनपरा च तत्र किमपि विस्मयकारणं वक्तव्यं वा नास्ति यतः प्रकृतिरियं खलु साधूनामिति प्रपञ्चयितुमाह प्रियेति—

प्रियप्राया वृत्तिः, विनयमधुरः वाचि नियमः, प्रकृत्या कल्याणीमतिः, अनवगीतः परिचयः पुरो वा पश्चाद् वा अविपर्य्यासितरसम् अनुपधि विशुद्धं साधूनां तदिदं रहस्यं विजयते ॥ २ ॥

प्रायेण भूम्ना प्रिया इति प्रियप्राया सुप्सुपेति समासः। प्रायेण प्रीतिस्निग्धा वृत्तिः आचरणम् सर्व्वेषु प्राणिषु प्रीतिप्रदर्शनमित्यर्थः, विनयेन प्रश्रयेण अनौद्धत्येन इतियावत् मधुरः हृद्यः नतु उपतापकः वाचि नियमः वाङ्नियमनं मितभाषित्वमित्यर्थः। साधवः प्रकृत्या मितभाषिणः तच्च मितभाषित्वम् अनौद्धत्यपुरस्कृतं सर्व्वेषां मनांसि आवर्ज्जयति, नतु धनिकानां सदम्भ वाङ्नियमनमिव चेतांसि सन्तापयति। प्रकृत्या स्वभावेनैव कल्याणी कल्याणप्रवृत्ता जगतां मङ्गलाय उन्मुखी इत्यर्थः मतिः बुद्धिः। परिचयः सख्यञ्च अनवगीतः अनिन्दितः, अवगीतन्तु निर्व्वादे मुहुर्दृष्टेऽपि गर्ह्हिते इति मल्लिनाथ-धृतकोषः साधूनां चरित्रे गर्ह्हालेशोऽपि नास्ति इति भावः। पुरः अग्रे, पश्चात् अन्ते वा न विपर्य्यासितः न वैपरीत्यं परिवृत्तिं वा गतः रसः आस्वादः यस्य तत् अविपर्य्यासितरसम् अपरिवर्त्तितस्वरूपम् एकरूपमित्यर्थः, नास्ति उपधिः छलं यत्र तत् अनुपधि कपटोऽस्त्रीव्याजदम्भोपधयश्छद्मकैतवे इत्यमरः। अकपटम् अतएव विशुद्धं निर्म्मलं साधूनां तत् प्रसिद्धं इदं प्रत्यक्षीक्रियमाणं रहस्यं गूढचरितं विजयते सर्व्वोत्कर्षेण वर्त्तते।

अव + गै + क्त (कर्म्मणि) = अवगीत। वि + परि + अस् ( दिवादि ) + णिच् + क्त ( कर्म्मणि) = विपर्य्यासित। यद्वा आस् ( णिच् ) + क्त = आसित। उप + धा + कि = उपधि। रहस् + यत् = रहस्य। रहसि भवं रहस्यम्। विजयते। विपराभ्यां जे इत्यात्मनेपदम्। नि + यम् + अप् = नियम ( पक्षे घञ् ) नियाम। "यमः समुपनिविषु च" एषु अनुपसर्गे च यमेरप् वा स्यात्। वच् + क्विप् = वाच्। क्विब्वचिप्रच्छीत्यादिना असम्प्रसारणं दीर्घश्च। वाचि इति विषयाधिकरणे सप्तमी।

वनदेवता। कामिति—किं नामधेयं भवत्याः इत्यर्थः।

वनदेवता। किं प्रयोजनं निमित्तं हेतुर्वा यस्य स किम्प्रयोजनः दण्डकारण्ये प्रचारः भ्रमणम् आगमनमित्यर्थः। किमर्थं दण्डकारण्ये आगतासि इत्यर्थः।

आत्रेयी। अस्मिन्निति। अस्मिन् प्रदेशे अगस्त्यप्रमुखाः भूयांसः उद्‌गीथविदः वसन्ति। तेभ्यः निगमान्तविद्याम् अधिगन्तुं वाल्मीकिपार्श्वात् इह पर्य्यटामि ॥३॥

अस्मिन् प्रदेशे दण्डकारण्यभागे अगस्त्यः कुम्भयोनिः प्रमुखो येषां ते अगस्त्यप्रमुखाः अगस्त्यादयः भूयांसः बहवः उद्‌गीथं वेदं विदन्ति ये ते उद्‌गीथविदः वेदज्ञाः वेदस्य अध्यापयितारः इत्यर्थः वसन्ति। तेभ्यः वेदविद्भ्यः निगमान्तविद्यां वेदान्तविद्यां अधिगन्तुं लब्धुं अध्येतुमित्यर्थः वाल्मीकेः प्राचेतसस्य पार्श्वात् तस्य पार्श्वं विहाय इत्यर्थः इह दण्डकारण्ये पर्य्यटामि परिभ्रमामि आगच्छामि इत्यर्थः। इन्द्रवज्रा वृत्तम्। स्यादिन्द्रवज्रा यदि तौ जगौगः।

उत् + गै + थक् + उद्‌गीथ। उद्‌गीथः सामवेदस्य अंशविशेषः। उद्‌गीथः प्रणवः सामवेदध्वनिरित्यरुणः। ओमित्येकाक्षरमुद्‌गीथमुपासीत इति छान्दोग्योपनिषत्। अत्र विशेषपरः उद्‌गीथशब्दः सामान्यवचनः। तेन च उद्‌गीथविदः वेदविदः इत्यर्थलाभः। बहु + ईयसुन् = भूयस्। बहोर्लोपः भूच बहोः इति बहोः स्थाने भू इत्यादेशः ईयसुनः ईकारलोपः। तेभ्यः इत्यत्र आख्याता उपयोगे इत्यपादानत्वात् पञ्चमी। निगमस्य वेदस्य अन्त इति निगमान्तः वेदशिरोभागः उपनिषत् इत्यर्थः। निगमान्तः एव विद्या इति निगमान्तविद्या। ताम्। विद् + क्यप् निपातनात् विद्या। संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः इति क्यप। विदन्त्यनया इति विद्या। निगमो वाणिजे पुर्य्यां कटे वेदे वणिक्पथे इति मेदिनी। वाल्मीकिपार्श्वादित्यत्र ल्यप् लोपे पञ्चमी वाल्मीकिपार्श्वं परित्यज्य इत्यर्थः। यद्वा ध्रुवमपाये अपादानम् इति अपादाने पञ्चमी।

वनदेवता। ब्रह्म वेदं वदति उपदिशति इति ब्रह्मवादी पुराणः ब्रह्मवादी इति पुराणब्रह्मवादी। तम्। ताच्छील्ये णिनिः। वेदस्तत्त्वं तपोब्रह्म इत्यमरः। प्रचेतसोऽपत्यं पुमान् प्राचेतसः वाल्मीकिः। पारस्य अयनं इति पारायणम् पारगमनम् साकल्येन अध्ययनमित्यर्थः ब्रह्मणः वेदस्य पारायणम् इति ब्रह्मपारायणं तस्मै तादर्थ्ये चतुर्थी। ब्रह्मपारायणाय समग्रवेदाध्ययनाय उपासते सेवन्ते। उप + आस + लट् अन्ते = उपासते। उपसर्गवशात् सकर्म्मकत्वम्। दीर्घः प्रवासः इति दीर्घप्रवासः। महान्तं कालं व्याप्य दूरवर्त्तिनि विदेशे अवस्थानमित्यर्थः। दीर्घप्रवासस्य प्रयासः यत्नः उद्यमः इत्यर्थः। किमर्थं अयं प्रवासक्लेशः भवत्या अङ्गीकृतः।

आत्रेयी। अध्ययनस्य पाठस्य प्रत्यूहः विघ्नः अन्तराय इति यावत् इति अध्ययनप्रत्यूहः। अङ्ग इति स्वीकारे अव्ययम्। अनङ्ग अङ्ग कृतः इति अङ्गीकृतः।

अभूततद्भावे च्विः। अस्य च्वौ इति अकारस्य ईत्। प्रति+ऊह+क प्रत्यूह। विघ्नोऽन्तरायः प्रत्यूहः इत्यमरः।

वनदेवता। कीदृशः किंविधः प्रत्यूहः इत्यर्थः। किम्+दृश+कन्। किमः की।

आत्रेयी। केनापि अविज्ञातनाम्ना देवताविशेषेण देवताभेदेन सर्व्वैः प्रकारैः विधाभिः अद्भुतम् आश्चर्य्यजननं दारकयोः द्वयम् इति दारकद्वयं शिशुयुगलम् उपनीतम् आनीय दत्तम्। स्तने भवं स्तन्यम् दुग्धम् शरीरावयवाच्च इति यत्प्रत्ययः स्तन्यस्य त्यागः इति स्तन्यत्यागः स मात्रा परिमाणं यस्य तत् स्तन्यत्यागमात्रकम् शेषादृविभाषा इति कः। यस्मिन् वयसि शिशुभिः स्तन्यत्यागः क्रियते तत्र वयसि स्थितम्। अज+असुन्=वयस्। अजेर्वीभावः। सचराचराणां स्थावरजङ्गमादिसंहितानाम् भूतानां प्राणिनां आन्तराणि अन्तर्भवानि तत्त्वानि मनोबुद्ध्यहङ्कारादीनि तत्त्वानि भावान् उपस्नेहयति स्नेहप्रवणानि प्रीत्यार्द्राणि इत्यर्थः करोति। सर्व्वेषामेव चित्तम् तस्मिन् शिशुयुगले स्नेहार्द्रं भवति।

वनदेवता। नाम्नो संविज्ञानं अवगतिरित्यर्थः इति नामसंविज्ञानम्। के तयो र्नामनी इत्यर्थः अपिः प्रश्ने।

आत्रेयी। कुशश्च लवश्च तौ कुशलवौ। प्रभावः लोकविलक्षणः शक्तिविशेषः आख्यातः कथितः चक्षिङः ख्याङ् इति निष्ठायां ख्यादेशः। चक्ष्+क्त=ख्यात। आख्यातः इति प्रभावः इत्यनेन सह अन्वेति। किलेति वार्त्तायाम्। किल सम्भाव्यवार्त्तयोः।

आत्रे। जृम्भयन्ति इति जृम्भकाणि। तानि च अस्त्राणि चेति जृम्भकास्त्राणि। रहस्येन प्रयोगसंहारमन्त्रेण सह वर्त्तमानानि इति सरहस्यानि। तथोक्तानि जृम्भकास्त्राणि आजन्मसिद्धानि जन्मनः आरभ्य अधिगतानि ; शिक्षामन्तरेण प्राक्तनजन्मविद्या इव अनयोः उत्पत्तिसमये एव स्वयं प्रादुर्भूतानि इत्यर्थः। जन्मनः आ इति आजन्म मर्य्यादायां अव्ययीभावः। आजन्म सिद्धानि इति आजन्मसिद्धानि सुप्सुपेति समासः।

वनदेवता। अहो इति आश्चर्य्ये अव्ययम्। चित्रम् आश्चर्य्यम्।

आत्रेयी। धात्री उपमाता तस्याः कर्म्म अपत्यपालनमित्यर्थः तत्र वत्सलताम् अनुराग परिगृह्य स्वीकृत्य मातुरागमपत्यपालनकर्म्म अङ्गीकृत्य वाल्मीकिना तौ पोषितौ पालितौ, परिरक्षितौ व्याधिप्रभृतिभ्यः परित्रातौ च। चूडा शिखा तस्याः इदं इति चौड। चूडा+अण् चौडं कर्म्म इति चौड़कर्म्म। वृत्त चौडकर्म्म ययोः तयोः वृत्तचौडकर्म्मणोः निष्पादितचूडाकर्म्मणोः तयोः त्रयीं ऋग्यजुःसामानि वर्ज्जयित्वा परित्यज्य इतराः अन्या विद्याः धनुर्वेदादयः अवधानेन सह वर्त्तमानः इति सावधानः तेन सावधानेन अवहितचित्तेन ऋषिणा परिनिष्ठापिताः निःशेषिताः

साकल्येन उपदिष्टाः इत्यर्थः उपसर्गात्सुनोतिसुवति इत्यादिना षत्वम्। चूडाकर्म्म तृतीये अब्दे सम्पादितम्—तथाच मनुः।

चूडाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्॥

त्रयीं वर्ज्जयित्वा इति कर्म्मोपपदात् वर्ज्जयतेः णमुल्। अपाणिनीयः अयं प्रयोगः। एवम्विधेऽर्थे णमुल्प्रत्ययस्य विधानाभावात्। त्रय्याः वेदानां वर्ज्जः परित्यागः यस्मिन् कर्म्मणि तद् यथा तथा त्रयीवर्ज्जम् इति बहुव्रीहिणा समाधेयम्। क्रियाविशेषणमिदं परिनिष्ठापिताः इति क्रियापदस्य विशेषणम्। समनन्तरं इतरविद्योपदेशादनन्तरं गर्भात् एकादशे वर्षे वयसि क्षत्राणां क्षत्रियाणामयम् इति क्षात्रः तेन क्षत्रियोचितेन कल्पेन विधिना उपनीय मौञ्जीवन्धनसंस्कारेण संस्कृत्य तौ त्रयीविद्यां वेदविद्याम् अध्यापितौ पाठितौ। अधिपूर्व्वादिङः णिच् ततः प्रयोज्ये कर्म्मणि क्तः। शब्दकर्म्मकत्वात् अणिकर्त्तुः णौ कर्म्मत्वम्। क्षणुहिंसायां इति धातोः क्विपि क्षत्। क्षतः नाशात् त्रायते इति क्षत्रम्। क्षत् + त्रै + क। क्षत्रस्य अयं इति क्षात्रः। क्षत्र + अण्।

अत्र मनुः—गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥

प्रज्ञा बोधशक्तिः मेधा स्मृतिशक्तिः इति प्रज्ञामेधे अतिप्रदीप्ते निसर्गतः अतितीक्ष्णे प्रज्ञामेधे ययोः ताभ्याम् अस्मत्तुल्यजडधियः अध्ययनेन योगः इति अध्ययनयोगः सहाध्ययनं सतीर्थत्वमित्यर्थः नास्ति। अल्पेन आयासेन कालेन च तौ प्रज्ञाशालिनौ मेधाविनौ यावन्तं पाठमभ्यस्यतः मादृशाः तावन्तं पाठं तेन कालेन अधिगन्तुमसमर्थाः। अतएव सहाध्ययनं न सम्भाव्यते। नित्यमसिच् प्रज्ञामेधयोरितिसूत्रस्यनावावसरः नञादेः पूर्व्वपदस्य असद्भावात्।

वितरतीति। गुरुः यथा प्राज्ञे तथैव जड़े विद्यां वितरति। तयोः ज्ञाने शक्तिं न करोति खलु न वा अपहन्ति। फलं प्रति पुनः भूयान् भेदः भवति च, तद् यथा शुचिः मणिः विम्बोद्ग्राहे प्रभवति, मृदां चयः न प्रभवतीति शेषः॥ ४॥

गुरुः आचार्य्यः प्राज्ञे बुद्धिमति शिष्ये यथा विद्यां वितरति ददाति उपदिशति इत्यर्थः जड़े मूढ़े शिष्ये तथैव विद्यां वितरति। मेधाविनं अल्पमेधसञ्च शिष्यं अविशेषेण अध्यापयति इत्यर्थः। प्राज्ञे इत्यधिकरणविवक्षया सप्तमी। तयोः प्राज्ञजड़योः ज्ञाने बोधे शक्तिं सामर्थ्यं न करोति न जनयति न वा अपहन्ति नाशयति खलु निश्चितमेव। बोधविषये एकस्य सामर्थ्यं नोन्मेषयति अन्यस्य न नाशयति। बोधशक्तिः नैसर्गिकी खलु गुरुणा सा न समुत्पाद्यते, न वा विलोप्यते। फलं प्रति अध्ययनफलं प्रति पुनः किन्तु भूयान् प्रभूतः भेदः पार्थक्यं भवति खलु। तत्र च

किमपि विस्मयकारणमिति प्रदर्शयन् दृष्टान्तमुदाहरति तदिति तद्यथा शुचिः विमलः मणिः रत्नं बिम्बस्य प्रतिबिम्बस्य उद्ग्राहे ग्रहणे प्रभवति समर्थो भवति। मृदां मृत्तिकानां चयः राशिः निसर्गतः मलिनः अस्वच्छः इति भावः न प्रभवति। विमले दर्पणादौ मणौ वा बिम्बपातः भवति मृदादौ तु न भवति। अतिस्वच्छायां बुद्धौ गुरोरुपदेशः सम्यक् प्रतिफलितो भवति मलिनायां धियि तु स उपदेशो न स्फुरति प्रसरति वा इत्यर्थः। दृष्टान्तालङ्कारः। हरिणीवृत्तम् नसमरसलागः षड्वेदैर्हयै-र्हरिणीमता।

. प्रजानाति इति प्रज्ञः। प्रज्ञः एव इति प्राज्ञः। स्वार्थे अण्। उद्+ग्रह+घञ्=उद्ग्राह।

बिम्बन्तु प्रतिबिम्बे स्यात् मण्डले पुंनपुंसकम्।
बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्॥ इति मेदिनी।

দ্বিতীয় অঙ্ক।

[ নেপথ্যে ] তপোধনার শুভাগমন।

পথিকবেশে তাপসী। [ প্রবেশ করিয়া ] ইনি এই বনের অধিষ্ঠাত্রী দেবতা; ফল, পুষ্প ও পল্লবরূপ অর্ঘ্য দ্বারা আমার অভ্যর্থনা করিতেছেন।

বনদেবতা। [প্রবেশ করিয়া অর্ঘ্যপ্রদান করিয়া ] এই বন আপনি যথেচ্ছভাবে উপভোগ করুন। অদ্য আমার সুদিবস। যেহেতু পুণ্যফলেই কোনরূপে সাধুদিগের সহিত সজ্জনের সমাগম হয়। এই অরণ্যে বৃক্ষচ্ছায়া, জল, ও তপস্যার যোগ্য অশন, ফল কিংবা মূল এ সমস্তই আপনি স্বেচ্ছানুসারে ভোগ করিতে পারেন॥১॥

তাপসী। এ বিষয়ে কি বলিব।—সাধুদিগের আচরণ প্রায়শঃ লোকপ্রিয়। তাঁহাদিগের পরিমিতভাষণ বিনয়ালঙ্কৃত ও হৃদয়গ্রাহী। ইচ্ছা স্বভাবতঃই কল্যাণ বিষয়ে অভিনিবিষ্ট, পরিচয় নিন্দাসম্পর্কশূন্য। এবং তাঁহাদিগের দুরবগাহ গূঢ়চরিত্র নির্ম্মল, অকৈতব ও অগ্রে পশ্চাতে অপরিবর্ত্তিতস্বভাব। ঈদৃশ চরিত্র সর্ব্বত্র উৎকর্ষ লাভ করিয়া থাকে॥ ২॥

[ উভয়ে উপবেশন করিলেন ]

বনদেবতা। আপনি কে ইহা কেমনে জানিব।

তাপসী। আমি আত্রেয়ী।

বনদেবতা। আর্য্যে আত্রেয়ি, আপনি কোথা হইতে এখানে আসিতেছেন, কি প্রয়োজনে দণ্ডকারণ্যে আগমন?

আত্রেয়ী। এই প্রদেশে অগস্ত্যপ্রমুখ অনেক বেদজ্ঞ পণ্ডিত বাস করেন। তাঁহাদের নিকট বেদান্ত বিদ্যা অধ্যয়ন করিবার জন্য বাল্মীকির সমীপ হইতে এখানে আসিতেছি॥৩॥

বনদেবতা। যখন অন্য মুনিগণও সমগ্র বেদাধ্যয়নের জন্য পুরাণব্রহ্মবাদী প্রাচেত-

সের উপাসনা করিয়া থাকেন, তখন আপনি কেন এই দীর্ঘপ্রবাসের উদ্যম করিয়াছেন ?

আত্রেয়ী। সেখানে অধ্যয়নের প্রবল অন্তরায় উপস্থিত, সেইজন্য এই দীর্ঘপ্রবাস অঙ্গীকার করিয়াছি।

বনদেবতা। কিরূপ ?

আত্রেয়ী। কোন দেবতাবিশেষ ভগবান্ বাল্মীকির নিকট সর্ব্বপ্রকারে অদ্ভুত ও যে বয়সে শিশুরা মাতৃস্তন্য ত্যাগ করে সেই বয়সে বর্ত্তমান দুইটি শিশু আনিয়া দিয়াছেন। সেই শিশুদ্বয় কেবল যে ঋষিদিগের অন্তঃকরণে স্নেহ সঞ্চার করে ইহা নহে, কিন্তু স্থাবর জঙ্গমাত্মক প্রাণিসমূহেরও অন্তঃকরণ তত্ত্ব স্নেহরসে আর্দ্র করে।

বনদেবতা। তাহাদের নাম অবগত আছেন কি ?

আত্রেয়ী। সেই দেবতাই বলিয়াছেন যে তাহাদিগের নাম কুশ ও লব, ও তাহাদিগের (অদ্ভুত) প্রভাব আছে।

বনদেবতা। কিরূপ প্রভাব ?

আত্রেয়ী। জন্মক্ষণ হইতেই সমন্ত্র জৃম্ভকাস্ত্রে তাহাদিগের সিদ্ধিলাভ হইয়াছে।

বনদেবতা। ওঃ এ অতিবিচিত্র বিষয় বটে।

আত্রেয়ী। ভগবান্ বাল্মীকি সাদরে ধাত্রীর কর্ম্ম স্বীকার করিয়া তাহাদিগের লালন পালন ও রক্ষণ করিয়াছেন। তাহাদিগের চূড়াকর্ম্ম সম্পন্ন হইলে, ভগবান্ বাল্মীকি অবহিতচিত্তে তাহাদিগকে বেদভিন্ন সমস্ত বিদ্যায় পরিনিষ্ঠিত করিয়াছেন। অনন্তর গর্ভৈকাদশবর্ষে ক্ষত্রোচিত বিধানানুসারে তাহাদিগের উপনয়নসংস্কার করিয়া তাহাদিগকে বেদ অধ্যাপন করাইয়াছেন। অতিতীক্ষ্ণ প্রজ্ঞা ও মেধা সম্পন্ন তাহাদিগের সহিত আমাদিগের সহাধ্যয়ন সম্ভবে না।

কারণ গুরু বুদ্ধিমান্ শিষ্যকে যে ভাবে বিদ্যাদান করিয়া থাকেন জড়মতি শিষ্যকেও সেই ভাবে বিদ্যাদান করেন। ইহা নিশ্চিত যে তিনি তাহাদিগের বোধ শক্তির উন্মেষ বা ক্ষয়সাধন করেন না। কিন্তু ফলবিষয়ে তাহাদিগের মধ্যে প্রভূত পার্থক্য ঘটিয়া থাকে; যেমন বিশুদ্ধমণি প্রতিবিম্বগ্রহণে সমর্থ হয় কিন্তু মৃত্তিকারাশি অসমর্থ।

বনদেবতা। এই আপনার অধ্যয়ন প্রত্যূহ ?

আত্রেয়ী। অন্য আর একটা আছে।

## Second Act.

[ Behind the Scenes ] Welcome to the female anchorite !

[ Entering ]

*A female ascetic in the guise of a way-farer* :—Ah ! The deity of the forest receives me with a respectful offering of fruits, flowers and fresh leaves.

*The deity of the forest* :– [*Entering and scattering the respectful*

*offering.*] This forest you may enjoy at your pleasure. This is a good and lucky day to me. For it is with difficulty and through merit that the good and virtuous obtain the company of the pious. The shade of trees, water, and such food as is suited to a life of penance, whether fruits or roots, all this here must not be considered as belonging to others. (1)

*The female ascetic* :—What can I say to this ? A behaviour almost always kind, a restraint of speech charming by its modesty, a mind inclined by nature towards what is wholesome and good; an unimpeachable acquaintance,—this inscrutable trait in the character of the good, pure and free from guile, ever of an unchangeable aspect whether in the beginning or at the end—is always triumphant. (2) [Both sit down]

*The Divinity of the forest* :—Whom I am to know your ladyship to be ?

*The female ascetic* :—I am Atreyi.

*The Divinity of the forest* :—Noble Atreyi, whence are you coming, and on what errand are you travelling in the forest of Dandaka ?

*Atreyi* :—Many scholars versed in the Vedas, such as Agastya and others, live in this part of the country. To learn from them the lore of the Vedanta I have wandered to this spot from the vicinity of Valmiki. (3)

*The divinity of the forest* :—When other sages wait upon the Sage Prachetas, that ancient teacher of the Vedas, for a full and thorough study of the Vedas, then why does your ladyship take the trouble of this long sojourn here.

*Atreyi* :—A great impediment to study has taken place there ; and therefore I have undertaken this long journey.

*Sylvan deity* :—Of what nature ?

*Atreyi* :—A couple of boys, wonderful in every respect, of an age in which a child can be weaned (from its mother's breast), was brought to the holy sage Valmiki by a certain deity. That couple moves to tenderness and affection the inner feelings

of not only the Rishis but also of all beings, whether moving or fixed.

*The Sylvan deity* :—Does the knowledge*of their names belong to (you) ?

*Atreyi* :—That very deity, it is said, told their names to be Kusa and Lava, and also recounted their power.

*The Sylvan deity* :—What sort of power ?

*Atreyi* :—It is said that the *Jrimbhaka* weapons together with the secret *mantras* or incantations (regarding their use) are possessed by them from their very birth.

*The Sylvan deity* :—Oh ! Indeed ! It is strange !

*Atreyi* :—The holy sage having taken upon himself with pleasure the task of a nurse brought them up and protected them and with care finished instructing them in all the branches of learning except the Vedas, when their ceremony of tonsure was performed. Subsequently in their eleventh year from the time of conception they were invested with the sacred thread in accordance with the form prescribed for the Kshatriyas, and were instructed in the three Vedas. Reading together with these two, possessed of a bright understanding and a sharp memory, is not practicable for myself and others.

For,—

The preceptor imparts knowledge to the dull pupil in the same way as to the intelligent pupil. Indeed he does not produce or take away their power of understanding. And yet a very great difference as to the result takes place. Just as a bright and pure gem can receive the reflection of an image, but not so a clod of earth. (4)

*The Sylvan deity* :—Is this that obstacle to your study ?—

*Atreyi* :—There is another too.

वनदेवता। अथेति प्रश्ने। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ। इत्यमरः।
आत्रेयी। ब्रह्मा चासौ ऋषिश्चेति ब्रह्मर्षिः। ब्रह्मा विप्रः प्रजापतिरित्यमरः।
मध्यं दिनस्य इति मध्यन्दिनम्। एकदेशितत्पुरुषसमासः। निपातनात् मुम्।
मध्यन्दिनमेव समयः। यद्वा मध्यन्दिनः समयः इति मध्यन्दिनसमयः। कर्मधारयः।

मध्यन्दिनशब्दः विशेष्यनिघ्नः। तथाच अभिधानरत्नमाला—मध्यमं मध्यमीयं च मध्यन्दिनमुदाहृतम्।

मध्यन्दिनसमये मध्याह्ने तमसां नदीं अनुप्रपन्नः प्राप्तः स्नानार्थं गतः। तत्र तमसायां नद्यां युग्मचारिणोः मिथुनधर्म्मेण वर्त्तमानयोः क्रौञ्चयोः जलचरविहगयोः ( सारसयोः ) एकं पुमांसं केनचित् लुब्धकेन विध्यमानं शरेण निर्भिद्य हन्यमानं व्यलोकयत्। निष्ठुरं तत् कार्य्यं दृष्ट्वा व्यथितहृदयः स ब्रह्मर्षिः आकस्मिकः अतर्कितोपपन्नः प्रत्यवभासः स्फुरणं यस्याः सा आकस्मिकप्रत्यवभासा ताम् अकस्मात् स्फुरिताम् अव्यतिकीर्णां सङ्कीर्णत्वादिदोषरहिताम् विस्पष्टार्थामित्यर्थः आनुष्टुभेन छन्दसा परिणताम् अनुष्टुप्छन्दोग्रथितां वाचं देवीं भारतीं अभ्युदैरयत् उच्चारयामास।

युग्मेन चरतः इति युग्मचारिणौ तयोः। क्रौञ्चीच क्रौञ्चश्च इति क्रौञ्चौ तयोः। पुमान् स्त्रिया इति पुंलिङ्गैकशेषः। विध्यति इति व्याधः। व्यध + ण। विध्यति ; विव्याध ; अव्यात्सीत्। कर्म्मणि शानच् विध्यमान। अकस्मात् इत्यव्ययं तस्मात्-ठक् = आकस्मिकः। प्रति + अव + भास + घञ = प्रत्यवभास। वि + अति + कॄ + क्त ( कर्म्मणि ) = व्यतिकीर्ण। किरति ; चकार, चकरतुः चकरुः ; अकारीत् अकारिष्टाम् अकारिषुः। व्यतिकरः व्यसनं दोषः इत्यर्थः। अथव्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः इति मेदिनी। अनु + स्तुभ् + क्विप् = अनुष्टुभ्। उपसर्गात् सुनोति सुवति इत्यादिना षत्वम्। अनुष्टुप्छन्दोविशेषः अष्टाक्षरग्रथितचरणः। अनुष्टुभः इदं इति आनुष्टुभम्। अनुष्टुभ् + अण्। छन्दः पद्येच वेदेच स्वैराचाराभिलाषयोः इति मेदिनी। अभि + उद + ईर ( चुरादि ) + लङ् द = अभ्युदैरयत्।

मेति। हे निषाद, त्वम् शाश्वतीः समाः प्रतिष्ठाम् मा अगमः यत् क्रौञ्चमिथुनात् कामसोहितम् एकम् अवधीः ॥ ५ ॥

[ "ब्राह्मणाद्द वैश्यकन्यायामम्बष्ठोनाम जायते। निषादः शूद्रकन्यायां यः पारशव उच्यते ॥ निषादोऽयं चण्डालात् भिद्यते तथाच मनुः – शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमोनृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः ॥ इत्थं भेदेऽपि कोषकारैः एतौ समार्थौ कथितौ। तथाचामरः चण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः। निषादश्वपचावन्तेवासिचाण्डाल पुक्कसाः। निषादचाण्डालयोः उत्पत्तितः भेदेऽपि कालक्रमेण तौ तुल्याचारौ कृतान्योन्यसम्बन्धौ बभूवतुः तेन च लोकदृष्ट्या तयोर्भेदः अपरिगणितोऽभवदिति-सम्भावयामः। ]

हे निषाद व्याध त्वम् शाश्वतीः चिरन्तनीः दीर्घाः इत्यर्थः समा वत्सरान् व्याप्य प्रतिष्ठां यशः मा अगमः मा लभ्याः यत् यस्मात् क्रौञ्चयोः जलचरविहगयोः मिथुनं

इन्द्वं तस्मात् कामेन मोहितम् कामासक्तचेतसम् मैथुनरतम् एकं क्रौञ्चम् अवधीः निहतवान् । मैथुनव्यापृतस्य क्रौञ्चस्य घातनात् तव युगान्तस्थायिनी अकीर्त्तिः सञ्जाता नेयमपयास्यतीत्यर्थः । न माङ्योगे इति अडागमप्रतिषेधेऽपि अडागमः आर्षः । कालात् ठञ् इति सूत्रेण शश्वत् भवाः इत्यर्थे शाश्वतिक्यः इति पदम् स्यात् तथापि प्रयोगवशात् शाश्वतः इति रूपसिद्धिः । शश्वत् इति शब्दात् शैषिकः अण् । समाः इति अत्यन्तसंयोगे द्वितीया । स्त्रीलिङ्गोऽयं शब्दः बहुवचनान्तः । संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः इत्यमरः । क्रौञ्चयोः मिथुनं तस्मात् अपादाने पञ्चमी । विश्लेषरूपः अर्थः अत्र स्फुटः ; मिथुनत्वस्य ध्रुवत्वाभावेऽपि कथञ्चिदपादानत्वमभ्युपेयम् । क्रौञ्चमिथुनयोरिति सम्यक् । पञ्चमी विभक्ते इति पञ्चमी इति रामानुजः ।

श्लोकोऽयं रामायणस्य बीजमिति अभिधीयते । बहुधा व्याख्यातश्चायं टीकाकृद्भिः —तत्र तीर्थव्याख्यानमुद्ध्रियते मा लक्ष्मीः निषीदति अस्मिन् तत् सम्बोधनं मानिषाद । यद् यस्माद्धेतोः क्रौञ्चमिथुनात् मन्दोदरीरावणरूपात् एकं काममोहितं रावणम् अवधीः हतवानसि तस्मात् त्वं शाश्वतीः समाः अनेकान् वत्सरान् अद्वितीयां प्रतिष्ठाम् अखण्डैश्वर्य्यानन्दावाप्तिं अगमः प्राप्नुहि, तेनार्थतः शब्दतः अपि मनाक् काव्यार्थसूचन-मित्युक्तः श्रीरामकृतरावणवधरूपकाव्यार्थः काव्यादौ अवश्यकर्त्तव्याशीर्व्वादश्च सूचित इति तीर्थः । रामानुजस्तु श्लोकमिमम् इत्थं व्याचष्टे—नारदात् स्वगुणश्रवणानन्तरं मुनेः स्ववर्णनेच्छां ज्ञात्वा स्वचरितस्य च करुणरसमयत्वेन तत्प्रधानकाव्ये अतिकरुण-चित्तस्यैवाधिकारात् ; ऋषेः करुणचित्तत्वजिज्ञासयैव पूर्व्वभृगुदत्तशापस्य पुनरुक्तत्व-करणेन दार्ढ्यं सम्पादनाय च मुनेः ईक्षणाय च भगवान् राम एव निषादरूपेण पश्यतो मुनेः पुरतस्तमनादृत्य क्रौञ्चं रचोविशेषरूपं जघान । ततस्तदिच्छावशादन्तर्य्यामितया तथाप्रेरणाच्च महानधर्म्मोऽयमनेन कृत इति रुषा, पापमते निषाद यत् त्वं काममोहितं क्रौञ्चमिथुनात् मिथुनीभूतात् क्रौञ्चयुगात् विभक्तम् एकम् अवधीः तत् त्वमपि शाश्वतीः समाः आयुःशेषभूतानि बहूनि वर्षाणि प्रतिष्ठां स्वस्त्रीसाहित्येन स्थितिम् इहलोके मागमः माप्राप्नुहि । किन्तु अत्यल्पकालमेव तथा वास एकमिथुनीभावपर्य्यन्तम् इति यावत् । इति शप्तवान् मुनिः एकमवधीरित्युक्तः यथा स त्वया स्त्रीविरहितः कृतः सा च नायकहीना कृता, तथा त्वमपि प्रियया स्वभार्य्यया हीनो भव सा च त्वया हीना भवतु इति पर्य्यवसानम् ।

वनदेवता । चित्रमाश्चर्य्यम् आम्नायात् वेदात् अन्यो भिन्नः नूतनः छन्दसां अनुष्टुप् लक्षणानां वृत्तानाम् अवतारः आविर्भावः । वेदेषु प्रयुक्तेभ्यश्छन्दोभ्यः अन्यत् नवं छन्दः ऋषिणा व्यवहृतम् । वनदेवताया इयमुक्तिः वेदेषु प्रयुक्तानुष्टुप्छन्दो ग्रथितानां श्लोकानां कादाचित्कत्वाभिप्रायेण समर्थनीया । आम्नायशब्दवाच्यासु उपनिषत्सु एवम्विधस्य छन्दसो दर्शनात् तथाच कठोपनिषदि—

आत्मानं रथिनं विद्धि शरीरं रथमेवतु।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।

* * * *

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥

मुण्डकोपनिषदि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे।
हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदोविदुः ॥

आङ् + म्ना + घञ् = आम्नाय। म्ना – मनति, मम्नौ, अम्नासीत्। म्नातः। अव + तॄ + घञ् = अवतार। ऋदोरप् इति सूत्रेण घञोऽपवादात् अवतारशब्दः न प्रयोक्तव्यः इत्याह वामनः — "अवतरावचायशब्दयोः ऋत्वदीर्घव्यत्यासो बालानाम्"। अवेतॄस्त्रोर्घञ् इति सूत्रेण प्राप्तो घञ् सञ्ज्ञायां करणाधिकरणयोः भवति। तत्र काशिका कथमवतारोनद्याः। नहीयं संज्ञा। प्रायानुवृत्तेरसंज्ञायामपि भवति। Thus a defence of the poet may be proposed; but the difficulty is that अवतार as used by the poet is neither in the करण nor अधिकरणवाच्य। It is in the भाववाच्य।

आत्रेयो। शब्द एव ब्रह्म इति शब्दब्रह्म। आविर्भूतं शब्दब्रह्म इति आविर्भूतशब्दब्रह्म। प्रकाशते प्रकृष्टं शोभते इति प्रकाशः कर्त्तरि अच्। आविर्भूतशब्दब्रह्मणा प्रकाशः शोभमानः इति आविर्भूतशब्दब्रह्मप्रकाशः तम्। शब्दब्रह्मणः आविर्भावेण अत्यर्थं द्योतमानमित्यर्थः। आविर्भूतः शब्दब्रह्मणः प्रकाशः यस्य यस्मिन् वा इति विग्रहे आविर्भूतप्रकाशशब्दयोः एकार्थत्वात् पौनरुक्त्यम्। भूतानि भावयति इति भूतभावनः भूतस्रष्टा इत्यर्थः पद्मं योनिः कारणं यस्य सः पद्मयोनिः विष्णुनाभिकमलोद्भवः ब्रह्मा। वाक् एव आत्मा स्वरूपं यस्य तत् वागात्म तस्मिन् वागात्मनि वाग्रूपे ब्रह्मणि परमतत्त्वे प्रबुद्धोऽसि उन्मीलितज्ञानचक्षुः ज्ञानसम्पन्नः इत्यर्थः भवसि। न व्याहतं प्रतिरुद्धं ज्योतिः प्रभा दृक्शक्तिरित्यर्थः यस्य तत् अव्याहतज्योतिः अप्रतिहतदर्शनशक्ति, आर्षं ज्ञानमयं प्रातिभं प्रतिभासम्पन्नं नवनवोन्मेषशालिन्या धिया अनुगतं ते चक्षुः। अतीतानागतव्यवहितविप्रकृष्टान् सर्व्वान् भावान् त्वं ज्ञानमयेन चक्षुषा द्रक्ष्यसि प्रतिभावशेन सम्यक् वर्णयिष्यसि च त्वमेव प्रथमः कविरसि इत्युक्त्वा ब्रह्मा अन्तर्दधे। शब्दब्रह्मणः

तथाविधं विवर्त्तम् काव्यरूपेण परिणामं परम्परया आगतोपदेशान्वितं इत्यर्थ: रामायणं काव्यं प्रणिनाय उपनिबबन्ध। समयेनेति अपवर्गे तृतीया। भावयति उत्पादयति इति भावन: नद्यादित्वात् ल्यु:। भूतानां भावन: इति भूतभावन:। वि + आङ् + हृन् + क्त ( कर्म्मणि ) = व्याहृत। द्युत् + इसिन् = ज्योतिस्। द्युतेरिसिन्नादेश्च ज:। ऋषि + अण् = आर्ष। प्रति + भा + अङ् = प्रतिभा। प्रतिभा + अण् = प्रातिभ। आदौभव: इति आद्य:। आदि + यत्। अन्तर् + धा + क्त (कर्त्तरि) = अन्तर्हित। अकर्म्मकत्वात् (कर्त्तरि) क्त:। वि + वृत + घञ् = विवर्त्त।

सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरित:।
अतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदाहृत:॥

विकार is essential change ; i. e. to say, change into a different essence e. g. a chemical change. विवर्त्त is phenomenal or apparent change ; the essence remains the same ; only the appearance is changed.

इतिह पारम्पर्य्योपदेश: आस्ते अस्मिन् इति इतिहास:। इतिह + आस् + घञ् = इतिहास। पारम्पर्य्योपदेशे स्यादैतिह्यमितिहाव्ययम् इत्यमर:। इतिहास: पुरावृत्तमितिचामर:। रमन्ते योगिनोऽस्मिन् इति राम: रमेर्घञ्। राम: अयनम् आश्रय: उपजीव्य: इत्यर्थ: यस्य काव्यस्य तत् रामायणम्।

वनदेवता। हन्त इति हर्षे अव्ययम्। हन्त वाकारम्भखेदविषादहर्षसम्भ्रमे इति मेदिनी। संसार: जगत् पण्डित: प्रकृष्टोज्ज्वलज्ञानसम्पन्न: जात:। पण्डा + इतच् = पण्डित।

आत्रेयी। विश्रान्ता अपनीताध्वक्लमा। वि + श्रम् + क्त ( कर्त्तरि ) = विश्रान्त। श्राम्यति ; शश्राम ; अश्रमत्।

वनदेवता। पञ्चानां वटानां समाहार: इति पञ्चवटी। संज्ञाशब्दोऽयम्। गोदावर्य्या: तीरं तेन। करणे तृतीया।

आत्रेयी। सर्व्वत्र अपि: प्रश्ने। जनस्थानं खरालय: तत्र यद् वनं तस्य देवता। जनस्थानवनदेवता।

आत्रेयी। स एष इति—प्रासङ्गिकीनां कथानां विषय: स एष ते वल्लभबन्धुवर्ग: दृश्यमान: नामशेषाम् अपि त्वाम् न: प्रत्यक्षदृश्याम् इव करोति॥ ६॥

प्रसङ्गात् आगता: इति प्रासङ्गिक्य: तासाम् प्रासङ्गिकीनां कथाक्रमेण प्राप्तानां कथानां संलापानां विषय: आश्रय: स एष ते तव वल्लभ: प्रिय: बन्धुवर्ग: वासन्तीप्रमुख: दृश्यमान: विलोक्यमान: सन् नामैव शेषं यस्या: सा नामशेषा ताम्, नाम्नैव स्थितां नतु शरीरेण, मृतामित्यर्थ: त्वां न: अस्माकं प्रत्यक्षं दृश्या इति प्रत्यक्षदृश्या सुप्सुपेति

समासः । ताम् साक्षाद् दृग्विषयीभूताम् इव करोति । वासन्तीप्रमुखं तव प्रियं सुहृद्वर्गं विलोक्य मृतामपि त्वां विलोकयामीव इत्युत्प्रेक्षा । वृत्तमुपजातिः ।

प्र + सञ्ज + घञ् = प्रसङ्ग । प्रसङ्ग + ठञ् = प्रासङ्गिक । प्रासङ्गिक + ङीप् = प्रासङ्गिकी । दृश् + शानच् ( कर्म्मणि ) = दृश्यमान । अक्ष्णोः प्रति इति प्रत्यक्षम् । अव्ययीभावः । समनुपरःप्रतिभ्योऽक्ष्णः इति समासान्तः अन् । दृश् + क्यप् = दृश्य । नः कृत्यानां कर्त्तरि वा इति कर्त्तरि षष्ठी । बन्धूनां वर्गः इति बन्धुवर्गः । वल्लभः बन्धुवर्गः इति वल्लभबन्धुवर्गः । वल्ल + अभच् = वल्लभ । राशिवल्लिभ्याञ्च इति अभच् ।

वासन्ती । अत्याहितम् गुर्व्वी व्यापत् । अत्यर्थम् आधीयते मनो यन्निवारणाय तदत्याहितम् । अति + आङ् + धा + क्त ( अधिकरणे ) = अत्याहित । अत्याहितं महाभीतिः कर्म्म जीवानपेक्षि च इत्यमरः ।

वासन्ती । दैवस्य निर्घातः इति दैवनिर्घातः । निःशेषेण घातः हननम् नियहः इत्यर्थः । निर् + हन् + घञ् = निर्घात ।

वासन्ती । निर्म्माणस्य भागः अंशः तवनिर्म्माणरूपस्य विधातुः कार्य्यस्य अंश ईदृशः इत्थं परिणतः इति विद्यासागरपादाः । त्वया अलं त्वया किञ्चित् साध्यं नास्ति । प्रवृत्तिः वार्त्ता (news) ।

वासन्ती । आर्य्यया अरुन्धत्या वशिष्ठेन च अधिष्ठितेषु रघुकदम्बकेषु रघुवंशीयेषु इत्यर्थः प्रवृद्धासु वर्षीयसीषु राज्ञीषु कौशल्याप्रमुखासु जीवन्तीषु कथमिदम् ईदृशं वीभत्सं कर्म्म वृत्तम् । अरुन्धती वशिष्ठः दशरथस्य पत्न्यश्च किं घोरमिदं कार्य्यं न न्यवारयन्नित्यर्थः । रघूणां कदम्बकानि इति रघुकदम्बकानि । तेषु । भावे सप्तमी ।

आत्रेयी । द्वादशवर्षाणि व्याप्य भवति इति द्वादशवार्षिकम् तद्धितार्थः द्विगुः । कालात् ठञ् इति ठञ्प्रत्ययः । सत्रम् यज्ञः । सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च । विसर्ज्जिताः स्वगृहगमनाय त्यक्ताः । सृजेः स्वार्थे णिच । वध्वा स्नुषया सीतया विरहितां हीनाम् अयोध्यां न यास्यामि इति अरुन्धती प्राह । रामस्य मातृभिः कौशल्याप्रभृतिभिः अनुमोदितं अनुमतं अनु + मुद् (णिच्) + कर्म्मणि क्त = अनुमोदित । तस्य वाक्यस्य अनुरोधः अनुसरणम् इति तदनुरोधः । तस्मात् । ल्यबर्थे पञ्चमी । हेतौ वा । वस् + लृट् स्यामः = वत्स्यामः ।

वासन्ती । वासन्ती राजा इति आह नतु रामभद्र इति । अन्तर्गूढ़कोपवशात् राजेति निष्प्रणयः शब्दः प्रयुक्तः ।

कः आरम्भः कर्म्म व्यापारो वा यस्य सः किमारम्भः ।

आत्रेयी । अश्वः मेध्यते हिंस्यते यस्मिन् क्रतौ सः अश्वमेधः । प्रक्रान्तः आरब्धः ।

वासन्ती । सस्त्रीको धर्म्ममाचरेत् इति स्मरणात् अश्वमेधानुष्ठानपरः राजा रामः

दारान्तरं परिगृहीतवान्, इति उत्प्रेक्ष्य वासन्त्या उक्तम् "परिणीतमपि" इति। परि + नी + ( भावे ) क्त = परिणीत ।

सह धर्म्मं चरति या सा सहधर्म्मचारिणी उपपद समासः। चरेः णिनिः।

आत्रेयी। हिरण्यस्य विकारः इति हिरण्मयी। विकारार्थे मयट्। दाण्डिनायनेत्यादिना मयटि यलोपो निपातः।

वासन्ती। हन्त इति हर्षे।

वज्रादिति। वज्रादपि कठोराणि कुसुमादपि मृदूनि लोकोत्तराणां चेतांसि को नु विज्ञातुम् अर्हति ॥ ७ ॥

वज्रात् शैलदारणात् अशनेः अपि कठोराणि कठिनानि, कर्त्तव्यानुरोधात् कदाचित् वज्रोपमाणि, कुसुमादपि पुष्पादपि मृदूनि कोमलानि स्नेहमयत्वात् अवसरे सम्प्राप्ते अतिसुकुमाराणि लोकोत्तराणां अलौकिकानां महापुरुषाणां चेतांसि मनांसि चित्तभावान् इत्यर्थः को विज्ञातुं विशेषेण अवगन्तुं याथार्थ्येण वेदितुं अर्हति योग्योभवति न कोऽपि सम्यक् विजानाति। दुरवगाहचित्तवृत्तयोहि महापुरुषा इति भावः। नु इति वितर्के। लोकेभ्य उत्तराः उत्कृष्टा इति लोकोत्तराः तेषां लोकोत्तराणाम्। शेषे षष्ठी। उत्तरशब्दस्य पूर्व्वादिगणे पाठात् जसादौ सर्व्वनामता वैभाषिकी।

आत्रेयी। वशिष्ठस्य असान्निध्यात् वामदेवेन अभिमन्त्रितः मन्त्रोच्चारणपूर्व्वकं संस्कृतः तथोक्तः मेध्यः छेदनयोग्यः पवित्रः अश्वः विसृष्टः अव्याहतस्वच्छन्दगमनाय विमुक्तः। शास्त्रमनतिक्रम्य इति यथाशास्त्रं शास्त्रविधानानुसारेण तस्य अश्वस्य रक्षकाश्च नियुक्ताः। तेषां रक्षिणाम् अधिनायकः लक्ष्मणपुत्रः चन्द्रकेतुः हस्त्यश्वरथपादातरूपैः चतुर्भिः अङ्गैः पूर्णं यत् सैन्य तेन अनुयातः। तैः सह प्रेषितः। सच चन्द्रकेतुः अधिगतधनुर्वेदः दिव्यानां आयुधानां प्रयोगसंहारयोः मन्त्रग्रामं कृत्स्नमभ्यस्तवान्।

मेधमर्हति इति मेध्यः। मेध + य। यद्वा मेध् धातोः ण्यत्। कृप् (णिच्) + क्त (कर्म्मणि) = कल्पित, विहित, कृत। अधि - स्था + तृच् = अधिष्ठातृ। सम् + प्र + दा + घञ् = सम्प्रदायः। सम्प्रदीयते इति सम्प्रदायः गुरुपरम्परोपदेशः। दिव्यानां अस्त्राणां सम्प्रदायः इति दिव्यास्त्रसम्प्रदायः अवाप्तः दिव्यास्त्रसम्प्रदायः येन सः अवाप्तदिव्यास्त्रसम्प्रदायः। चत्वारि अङ्गानि यस्य तत् चतुरङ्गम्। चतुरङ्गं साधनं सैन्यं तेन अन्वितः चतुरङ्गसाधनान्वितैः। अनु - इण् + क्त (कर्म्मणि) = अन्वित। अनु + प्र + हि + क्त (कर्म्मणि) = अनुप्रहित। हि प्रेरणे, हिनोति ; जिघाय ; अहैषीत्। साधनं मृतसंस्कारे सैन्ये सिद्धौषधी गतौ। निवर्त्तनोपायभेदे दापनेऽनुगमे धने। इति मेदिनी। रक्ष + तृच् = रक्षितृ।

वनदेवता। द्वितीय विशति कि ?

আত্রেয়ী। অনন্তর সেই ব্রহ্মর্ষি একদিন মধ্যাহ্নকালে তমসা নদীতে স্নানার্থ গমন করিয়াছিলেন। সেখানে মৈথুনব্যাপৃত ক্রৌঞ্চযুগলের মধ্যে ক্রৌঞ্চটিকে কোন এক ব্যাধকর্ত্তৃক বিধ্যমান দেখিয়াছিলেন। অকস্মাৎ তাঁহার রসনায় বাগ্‌দেবীর আবির্ভাব হইল। তিনি অনুষ্টুপ্‌ছন্দোগ্রথিত নির্দোষ একটি শ্লোক উচ্চারণ করিয়া ফেলিলেন। হে নিষাদ, যেহেতু তুমি ক্রৌঞ্চযুগলের মধ্যে কামমোহিত ক্রৌঞ্চটিকে বিনাশ করিয়াছ এই হেতু তুমি সুদীর্ঘকাল ব্যাপিয়া প্রতিষ্ঠা লাভ করিবে না ॥ ৫॥

বনদেবতা। আশ্চয্য। বৈদিক ছন্দ হইতে বিভিন্ন নূতন ছন্দের অবতারণা হইল।

আত্রেয়ী। শব্দব্রহ্মের আবির্ভাববশতঃ প্রদীপ্তশ্রী ভগবান্ বাল্মীকির সমীপে সেই সময়ে ভূতভাবন পদ্মযোনি উপস্থিত হইয়া বলিলেন,—"ঋষে, বাগ্‌রূপ ব্রহ্মে আপনার জ্ঞাননেত্র সমুন্মীলিত হইয়াছে। অতএব রামের চরিত্র বর্ণন করুন; আপনি অব্যাহতজ্যোতিঃ প্রতিভাময় আর্ষ চক্ষুঃ লাভ করিয়াছেন এবং আদ্য কবি হইলেন।" এই কথা বলিয়া পদ্মযোনি অন্তর্হিত হইলেন। তদনন্তর ভগবান্ প্রাচেতস মনুষ্যলোকে শব্দব্রহ্মের তাদৃশ বিবর্ত্ত, রামায়ণ নামক ইতিহাস প্রণয়ন করিয়াছেন।

বনদেবতা। আহা, তাহা হইলে সংসারে সকলেই পণ্ডিত হইল।

আত্রেয়ী। এইজন্য বলিয়াছিলাম যে সেখানে অধ্যয়নের প্রবল ব্যাঘাত উপস্থিত হইয়াছে।

বনদেবতা। ইহা ঠিক বটে।

আত্রেয়ী। ভদ্রে, আমার পথশ্রম দূর হইয়াছে। সম্প্রতি অগস্ত্যের আশ্রমে যাইবার পথ বলিয়া দিউন।

বনদেবতা। এখান হইতে পঞ্চবটীতে প্রবেশ করিয়া এই গোদাবরীর তীরভূমি দিয়া গমন করুন।

আত্রেয়ী। [ বাষ্প বিসর্জ্জন করিয়া ] এটি কি তপোবন? এ কি পঞ্চবটী? এই কি গোদাবরী নদী? এই কি গিরিপ্রস্রবণ? আপনি কি জনস্থানের বনদেবতা বাসন্তী?

বাসন্তী। এ সব তাহাই বটে।

আত্রেয়ী। বৎসে জানকি!

প্রসঙ্গক্রমে সমুত্থিত কথার বিষয়ীভূত, এই সকল প্রমুখ তোমার প্রিয় সুহৃদ্‌বর্গ আমার নেত্রপথে পতিত হওয়ায়, তুমি নামমাত্রাবশিষ্ট হইলেও তোমাকে যেন প্রত্যক্ষ দেখিতেছি ॥ ৬ ॥

বাসন্তী। [ সভয়ে স্বগত ] "নাম মাত্র শেষা" ইহা কেন বলিল।

[ প্রকাশ্যে ] আর্য্যে, সীতাদেবীর কি কোন অত্যাহিত হইয়াছে?

আত্রেয়ী। কেবল অত্যাহিত নহে; তাহার সহিত অপবাদও ঘটিয়াছে। [ কর্ণে ] এইরূপ, এইরূপ।

বাসন্তী। আহা, এ যে দারুণ দৈবনির্ঘাত [ মূর্চ্ছিত হইয়া পড়িলেন ]।

আত্রেয়ী। ভদ্রে সমাশ্বস্ত হউন।

বাসন্তী। হা প্রিয়সখি, হা মহাভাগে ; তাদৃশ নির্ম্মাণের কি এই পরিণতি। রামভদ্র, রামভদ্র, অথবা তোমায় আর প্রয়োজন কি ? আর্য্যে আত্রেয়ি, লক্ষ্মণ সীতা দেবীকে পরিত্যাগ করিয়া সেই অরণ্য হইতে প্রতিনিবৃত্ত হইলে সীতাদেবীর কি ঘটিয়াছে এরূপ কোন সংবাদ জানেন কি ?

আত্রেয়ী। না, না।

বাসন্তী। অহো কি কষ্ট ! আর্য্যা অরুন্ধতী ও বশিষ্ঠ রঘুবংশীয়দিগের অধিনায়ক থাকিতে, এবং বর্ষীয়সী রাজ্ঞীরা জীবিত থাকিতে কিরূপে এরূপ ঘটিল ?

আত্রেয়ী। গুরুজন সে সময়ে ঋষ্যশৃঙ্গের আশ্রমে ছিলেন। এক্ষণে সেই দ্বাদশবর্ষ-ব্যাপী যজ্ঞ সমাপ্ত হইয়াছে। ঋষ্যশৃঙ্গ গুরুজনদিগকে সম্পূজিত করিয়া বিদায় দিয়াছেন। তাহার পর ভগবতী অরুন্ধতী বলিলেন, "আমি বধূশূন্য অযোধ্যায় গমন করিব না।" রামের মাতৃগণ সেই বাক্যের অনুমোদন করিলেন। তদনুরোধে ভগবান্ বশিষ্ঠ পরিশুদ্ধ প্রস্তাব করিলেন,—"বাল্মীকির তপোবনে গিয়া তথায় বাস করিব।"

বাসন্তী। সে রাজা এক্ষণে কোন্ কার্য্য আরম্ভ করিয়াছেন ?

আত্রেয়ী। সেই নৃপতি অশ্বমেধ যজ্ঞের অনুষ্ঠান করিয়াছেন।

বাসন্তী। ধিক্ বিবাহও করিয়াছেন ?

আত্রেয়ী। ঈশ্বর এমন না করুন।

বাসন্তী। তাহা হইলে যজ্ঞে সহধর্ম্মচারিণী কে ?

আত্রেয়ী। সুবর্ণময়ী সীতার প্রতিকৃতি।

বাসন্তী। আঃ—

অলৌকিক মহাপুরুষদিগের চিত্ত ( স্থলবিশেষে ) বজ্র অপেক্ষাও কঠিন, (এবং সময়ে) কুসুম অপেক্ষাও মৃদু। কে তাঁহাদিগের চিত্ত বিশেষরূপে অবগত হইতে পারে ॥৭॥

আত্রেয়ী। বামদেব কর্ত্তৃক মন্ত্রসংস্কৃত, মেধ্য অশ্ব বিমুক্ত হইয়াছে। শাস্ত্রানুসারে তাহার রক্ষিবর্গও নিযুক্ত হইয়াছে। দিব্যাস্ত্রসমূহের প্রয়োগসংহারবিষয়ে উপদেশ প্রাপ্ত লক্ষ্মণতনয় চন্দ্রকেতু অশ্বের রক্ষিবর্গের অধিনায়করূপে চতুরঙ্গ সেনা সহ প্রেরিত হইয়াছেন।

*The Sylvan deity* :—What is the other one ?

*Atreyi* :—Then one day at noon-tide the Brahman sage went to the river Tamasa. There he saw that one out of a pair of herons was being shot (to death) by a hunter. He then uttered a divine speech, which manifested itself suddenly, was clear and distinct, and was in the form of a verse in the Anustubha metre.—

You will not attain rest and fame, O fowler, during everlasting years, since you have killed one out of a pair of herons, when he was maddened with passion. (5)

*The Sylvan deity* :—Wonderful! A novel form of metre other than that in the Veda has been introduced.

*Atreyi* :—At that time the god Brahma, who was sprung from a lotus, and is the creator of all beings, appeared before the holy sage to whom the Supreme Brahma was revealed in the form of speech, and said :—"O Sage, you have been awakened to the Supreme Brahma in the form of speech; relate therefore the life of Rama. Your fore-seeing eye of genius will have its vision unobstructed. You are the first poet." Saying this the deity vanished out of sight. Then the holy Prachetas composed the historical poem, the Ramayana, the first manifestation of Divine Speech in that shape in the region of the mortals.

*The Sylvan deity* :—Oh joy! Then the world is going to be learned.

*Atreyi* :—Hence it is that I said that there had arisen a great impediment to our study.

*The Sylvan deity* :—That is right.

*Atreyi* :—I have rested enough ( to beguile the fatigue of journey). Good lady, tell me now the way to the hermitage of Agastya.

*The Sylvan deity* :—Entering the Panchavati from this place, you are to proceed along the bank of Godavari.

*Atreyi* :—[ *with tears* ] Is this a grove of penance? Is this Panchavati? Is this the river Godavari? Is this the mountain Prasravana? Are you Vasanti, the nymph of the forest of Janasthana?

*Vasanti* :—All this is as you say.

*Atreyi* :—O my child, Janaki.

These dear friends of yours, incidentally the subject of our talk, being now seen make you directly visible to me, though your name alone is all that remains of you. (6)

*Vasanti* :—[*with alarm, to herself.*] How is it that she says that her name alone is all that remains of her? [*Aloud*] Good lady, has any great calamity befallen queen Sita?

*Atreyi* :—Not only a great calamity, but a scandal too. [*Whispers into her ears.*] thus and thus.

*Vasanti* :—Alas ! very cruel is this blow of fate [*swoons*].

*Atreyi* :—Take heart, good lady, take heart.

*Vasanti* :—Alas ! my dear friend, alas ! noble lady, were you, so noble a creation, meant for such a lot ? Rambhadra, Rambhadra, or enough of you. Noble Atreyi, is there any news as to what happened to Sita, when Lakshmana returned from the forest, after having abandoned her there ?

*Atreyi* :—No, no news.

*Vasanti* :—Oh ! woe ! How could this take place, when the elderly queens were living, and when the race of Raghu was guided by the noble Arundhati and Vasistha ?

*Atreyi* :—The elderly and revered persons were then at the hermitage of Rishyasringa. Now that sacrifice lasting for twelve years is over. Rishyasringa has bade good bye to his superiors, after having honoured them duly. Then the holy matron Arundhati said that she would not go to Ayodhya which was then without her daughter-in-law, Sita. The mothers of Rama gave their assent to that proposal. Out of respect for Arundhati's wish, the holy sage Vasistha made the sacred speech that they would all go to the hermitage of Valmiki and live there.

*Vasanti* :—What has the king now set himself to ?

*Atreyi* :—The king has commenced the ceremony of horse-sacrifice.

*Vasanti* :—Alas ! oh fie ! He has married again.

*Atreyi* :—Heaven forbid it !

*Vasanti* :—Who then is his associate in the performance of the religious rites ?

*Atreyi* :—A golden image of Sita.

*Vasanti* :—Oh !

Who can fathom the hearts of extraordinary persons, which (at times) are harder than adamant, and (again at times) softer than a flower ? (7)

*Atreyi* :—And the sacrificial horse, consecrated by (the priest Vamadeva has been let loose Its guards have been appointed according to the Sastras ; and Chandraketu, the son of Lakshmana

who has received instructions in the use of the celestial weapons, has been sent with an army consisting of its four divisions as their commander.

वासन्ती। [ स्नेह: लक्ष्मणस्य स्मरणात् वत्सलता, कौतुकं लक्ष्मणस्य पुत्रो जात: स च वीरधर्मम् अनुसरति इति चिन्तनेन आह्लाद: तयो: यदस्रं नयनजलं तेन सह वर्त्तमानं यथा तथा सस्नेहकौतुकास्रम् ] कुमारलक्ष्मणस्यापि पुत्रो जात: इतिश्रुत्वा सीता दु:खेन सन्तापातिशयात् मृतेवाहं पुनर्जीवलोकं प्रविष्टास्मि।

आत्रेयी। अवान्तरे एतस्मिन् अन्तरे अवकाशे केनचित् ब्राह्मणेन विप्रेण मृतं अकाले परासुं पुत्रं तनयं राजद्वारे राज्ञ: रामचन्द्रस्य प्रासादस्य द्वारदेशे आगम्य इति शेष: आरोप्य स्वीयं क्रोड़म् आरोप्य स्वक्रोड़े संस्थाप्य, उरस: स्ववक्षस: ताड़: ताड़नं इति उरस्ताड़: तेन सह वर्त्तमानं यथा तथा सोरस्ताड़म् वक्षसि कराघातं कृत्वा अब्रह्मण्यं उदघोषितम्। अब्रह्मण्यमिति शब्द: उच्चै: उच्चारित: त्राणार्थं साहायकं प्रार्थितमित्यर्थ:। तत: तस्य आर्त्तनादं श्रुत्वा इत्यर्थ: राज्ञ: भूपस्य अपचार: धर्म्मातिक्रम: तम् अन्तरेण विना प्रजासु मध्ये अकाले अनुचिते काले मृत्यु: न चरति न प्रसरति, प्रजा: असमये न म्रियन्ते इति विचिन्त्य आत्मन: स्वस्यैव दोषं निरूपयति निश्चिन्वति, ममैव दोषेण अयं ब्राह्मणकुमार: अकाले मृत: इतिअवधारयति रामे; सहसा हठात् अशरीरिणी अमूर्त्ता वाक् वाणी उदचरत् उदगच्छत्। दैवी वाणी अश्रूयत इत्यर्थ:। राजापचारमन्तरेण अत्र रामायणम्—

राजदोषै र्विपद्यन्ते प्रजा ह्यविधिपालिता:।
असद्वृत्ते हि नृपतावकाले म्रियते जन:॥

उद् + घुष् + णिच + क्त (कर्म्मणि) = उदघोषित। अप + चर् + घञ् = अपचार। राजापचारमिति अन्तरेणेति अव्यययोगात् द्वितीया। उत् पूर्व्वात् चरते रकर्म्मकात् परस्मैपदम्। सकर्म्मकात् आत्मनेपदम् वेदमुच्चरते। उदश्चर: सकर्म्मकात्। शरीरं विद्यते यस्या: सा शरीरिणी। न शरीरिणी इति अशरीरिणी।

शम्बूक इति शम्बूकोनाम वृषल: पृथिव्यां तप: तप्यते हे राम स ते शीर्षच्छेद्य: ; तं हत्वा द्विजम् जीवय॥ ८॥

शम्बूक: नाम शम्बूकनाम्ना प्रसिद्ध: वृषल: शूद्र: वृषं सुकृतं लाति नाशयति इति वृषल:। यद्वा वृष: सुकृतं तस्य अलं वारणं करोति इति वृषल: शकन्धादित्वात् साधु:, पृथिव्यां तप: तप्यते तपोऽर्ज्जयति। तप स्तप: कर्म्मकस्य इत्यात्मनेपदम् यक्च। हे राम स शम्बूक: ते तव कर्त्तु: शीर्षे मूर्द्धनिच्छेद्य: इति शीर्षच्छेद्य:। ते इत्यत्र कृत्यानां कर्त्तरि वा इति कर्त्तरि षष्ठी। ते तव त्वया वा च्छेद्य:। छिदे: ण्यत्। शीर्षे च्छेद्य: इति अवच्छेदसप्तम्या समास:। शूद्रस्य तपसि अनधिकारात् वर्णधर्म्मसुल्लङ्घयन्

स दण्डार्हः इति भावः तं शम्बूकं हत्वा विनाश्य द्विजम् विप्रकुमारं जीवय, प्रत्युज्जीवय।

न शूद्रे पातकं किञ्चिन्नच संस्कारमर्हति।
नास्याधिकारो धर्मेऽस्ति न धर्मात् प्रतिषेधनम्॥ इति मनुः।

कृपाणः खड्गः पाणौ हस्ते यस्य स कृपाणपाणिः खड्गपाणिः। प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः इति सप्तम्यन्तस्य परनिपातः। विमानं देवयानम्। दिशः आशाः। विदिक् अपदिशम्। क्लीवाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रिया मित्यमरः। दिशः विदिशश्च इति कर्मणि द्वितीया। देशकालभावाध्वगन्तव्याः कर्मसंज्ञाह्यकर्मणामिति कर्मसंज्ञा। शूद्रश्चासौ तापसश्चेति शूद्रतापसः तस्य अन्वेषणम् तस्मै। शूद्रतापसान्वेषणाय।

वासन्ती। धूमं पिबति इति धूमपः। आतोऽनुपसर्गे इति कः। अलंकुर्य्यात् आगमनेन शोभयेत्।

वासन्ती। अकठोरः कठोरः भूतः इति कठोरीभूतः पूर्णतां गतः। अत्युग्रैः रविमयूखैः दुःसह्यो जातः दिवसः। मध्याह्नो वर्त्तते इत्यर्थः।

कण्डूलेति। कूले स्थिता इति शेषः छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः कूजत्क्लान्तकपोतकुक्कुटकुलाः कुलायद्रुमाः कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभिः घर्म्मस्रंसितवन्धनैः स्वकुसुमैः गोदावरीम् अर्च्चन्ति॥ ९॥

कूले गोदावर्य्याः तीरे स्थिताः छायासु अनातपे अपस्किरमाणाः हर्षादन्नमिच्छन्तः ये विष्किराः पक्षिणः तेषां मुखैः चञ्चुभिः इत्यर्थः व्याकृष्टाः कीटाः कृमिप्रभृतयः याभ्यः ताः छायापस्किरमाणविष्किरमुखव्याकृष्टकीटाः तथोक्ताः त्वचः वल्कलानि येषां ते छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः येषां तलेषु कुक्कुटादयः पक्षिणः सानन्दं वृक्षत्वग्रन्ध्रेभ्यः क्षुद्रान् कीटान् चञ्चुभिः आहृत्य भक्षयन्ति तथोक्ताः कूजन्ति रुवन्ति, क्लान्तानां मध्याह्नमार्त्तण्डमयूखतप्तानां कपोतानां पारावतानां कुक्कुटानां चरणायुधानां च कुलानि समूहाः येषु ते कूजत्क्लान्तकपोतकुक्कुटकुलाः मध्याह्नसूर्य्यांशुतापिताः पारावतादयः येषां तीरद्रुमाणां शाखासु निलीनाः निद्रालसं रुवन्ति, तथोक्ताः कुलायप्रधाना द्रुमाः इति कुलायद्रुमाः शाकपार्थिवादिवत् समासः कुलायो नीड़मस्त्रियाम् पक्षिनीड़निचिताः वृक्षाः घर्म्मेण उष्णेन स्रंसितं श्लथीकृतं वन्धनं वृन्तं येषां तैः घर्म्मस्रंसितवन्धनैः कण्डूः कण्डूतिः विद्यते येषां ते कण्डूलाः सिध्मादिभ्यश्चेति लः। कण्डूलाः ये द्विपानां हस्तिनां गण्डपिण्डाः कपोलभित्तयः इत्यर्थः तेषां कषणेन कण्डूनिरासाय घर्षणेन यः उत्कम्पः सञ्चलनं तेन सम्पातिभिः वाहुल्येन पतद्भिः स्वकुसुमैः पुष्पैः गोदावरीम् अर्च्चन्ति पूजयन्ति। कपोलकण्डूं विनेतुं कटं कण्डूयमानैः करिभिः कम्पितेभ्यः तीरतरुभ्यो रविमयूखतापशिथिलीकृतवन्धनानि पुष्पाणि गोदावर्य्यां

पतन्ति इत्यर्थः। तथा बंधकुसुमपातः अर्च्चनत्वेन उत्प्रेक्ष्यते। प्रतीयमानोत्प्रेक्षा। यद्वा अर्च्चनस्य सिद्धवत्करणात् अर्च्चनासम्भवेऽपि सम्भवरूपातिशयोक्तिः। शार्दूलविक्रीड़ितं वृत्तम् सूर्य्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीड़तम् इति लक्षणम्। वृत्त्यनुप्रासः शब्दालङ्कारः—सम् + पत् + णिनि = सम्पातिन्। प्रसिद्धश्चोपसर्गेऽपि णिनिः। स्नस ( णिच् ) + क्त = (कर्म्मणि) स्रंसित। स्रंसते ; सस्रंसे अस्रंसिष्ट, अस्रसत्। स्रसः।

किरते हर्षजीविकाकुलायकरणेषु इति वाच्यम्। अत्र जीविकाकरणे अर्थे, पक्षिणि कर्त्तरि अपपूर्व्वात् किरतेः आत्मनेपदम्। अपाच्चतुष्पाच्छकुनिषु आलेखने सुट्। सुट् is the augment of the root कॄ with the prefix अप, if the nominative case of the verb is either a quadruped or a bird and if the meaning of the verb is to scratch, विष्किर means a bird ; सुट् is optionally the augment of the root कॄ with the prefix वि, provided the meaning of the word is a bird विष्किरः शकुनौ वा।

गण्डाः पिण्डाः इव इति गण्डपिण्डाः। कुलस्य आयो वृद्धिरत्र इति कुलायः। कष् + ल्युट् = कषण। कषति ; चकाष ; अकषीत् अकाषीत्। कषितः। कृच्छ्र-गहनयोः कष्टम्। क्लम् + क्त = क्लान्त। क्लाम्यति, क्लाम्यति ; चक्लाम ; अक्लमत्।

विष्कम्भकः—वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः॥ दशरूपकम्।

दयया कृपया सह वर्त्तते इति सदयम्। सदयम् उद्यतः खड्गो येन स सदयोद्यतखड्गः। उद् + यम् + क्त ( कर्म्मणि ) = उद्यत। आहिताग्न्यादिषु पाठात् पक्षे खड्गोद्यतः इति रूपम्। शम्बूकस्य विनाशाय खड्गः उद्यतः। ब्राह्मणकुमारस्य सञ्जीवनानुरोधात् अयमुद्यमः नतुवैरप्रतिमोचनार्थम्। अतएव करुणामयो जगत्-पतिः सदयम् असि मुत्तोलितवान्।

रामः। रे इति—रे दक्षिण हस्त मृतस्य द्विजस्य शिशोः जीवातवे शूद्रमुनौ कृपाणं विसृज। दुर्व्वहगर्भखिन्नसीताविवासनपटोः रामस्य गात्रम् असि। कुतः ते करुणा॥ १०॥

रे दक्षिण हस्त भुज मृतस्य अकाले पञ्चत्वं गतस्य द्विजस्य शिशोः ब्राह्मणकुमारस्य जीवातवे प्रत्युज्जीवनाय शूद्रश्चासौ मुनिश्चेति शूद्रमुनिः मुनीनां आचारं प्रपन्नः शूद्रः तस्मिन् शूद्रतापसे कृपाणं खड्गं विसृज मुञ्च पातय इत्यर्थः। खड्गेन इमं शूद्रतापसं जहि। दुर्व्वहः प्रवृद्धत्वात् दुःखेन वोढुं शक्यः यो गर्भः तेन खिन्ना क्लिष्टा,

प्रहङ्गगर्भभरालसा सीता, तस्याः विवासने अरण्ये परित्यागे पटुः एकान्ततो निर्घृणः इत्यर्थः तस्य दुर्व्वहगर्भखिन्नसीताविवासनपटोः अतिबीभत्सकर्म्मणः नृशंसस्य रामस्य गात्रमसि अङ्गं भवसि ; कुतस्ते करुणा कृपा शूद्रतापसवधे अनध्यवसायं इत्यर्थः। रामस्य गात्रत्वात् तवापि क्रौर्य्यमुचितम्। अनुकम्पा त्वयि न युज्यते। इत्यर्थः।

जीवेरातुः इति जीव + आतु (उणादि)। जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे इति भट्टोजीधृतं वचनम्। कृपांनुदति इति कृपाणः। कृपा + नुद + ड। संज्ञायांणत्वमिति तत्त्वबोधिनी। दुर् + वह + खल् (कर्म्मणि) = दुर्व्वह। खिद + क्त (कर्त्तरि) = खिन्न। प्र + वस् (णिच्) + ल्युट् = प्रवासन।

[ कथञ्चित् कृच्छ्रेण इत्यर्थः प्रहृत्य आहत्य ] रामस्य, नृशंसस्य सदृशं योग्यं कर्म्म अतिनिष्ठुरं कार्य्यं कृतमित्यर्थः।

The above remark shows that Rama was disgusted with himself for killing the Sudra ascetic. Bhavabhuti lived in an age when the Sudras were not looked down upon with the same degree of contempt as in early times viz. in the age of Manu, Ramayana &c. Consequently the general feeling of the author's age has been reflected in the sentiments of the hero of the drama.

दिव्यपुरुषः। दत्तेति। यमादपि दत्ताभये त्वयि दण्डधारे असौ शिशुः सञ्जीवितः मम च इयम् ऋद्धिः। एष शम्बूकः शिरसा ते चरणौ नतः। सत्सङ्गजानि निधनानि अपि तारयन्ति॥ ११॥

यमादपि वैवस्वतादपि दत्तम् अभयं येन सः दत्ताभयः, मृतस्य पुनरुज्जीवनात् यमादपि अभयदातृत्वम् ; तस्मिन् त्वयि दण्ड' धारयति यः स दण्डधारः, कर्म्मण्यण्, तस्मिन् दण्डधारे वर्णधर्म्मोल्लङ्घनकारिणि दण्ड' पातयति यमस्य च शासितरि त्वयि, असौ शिशुः ब्राह्मणतनयः सञ्जीवितः प्रत्यागतप्राणः, मम च इयम् एषा ऋद्धिः विभूतिः, सम्पदिति यावत्। ननुकस्त्वमिति आशङ्कायां आह शम्बूक इति। एषोऽहं शम्बूकः तन्नामा शूद्रतापसः शिरसा मूर्ध्ना ते तव चरणौ नतः। तव चरणौ नमामि इत्यर्थः।

नमेः गत्यर्थत्वात् कर्त्तरि क्तः। सतां साधूनां सङ्गात् संसर्गात् जायन्ते यानि तानि सत्सङ्गजानि। जनेर्डः। साधुसंसर्गसम्प्राप्तानि निधनानि विनाशाः अपि तारयन्ति पुनन्ति पुण्यलोकान् प्रापयन्ति। भवादृशस्य महात्मनः हस्ते निधनं प्राप्य अहं दिव्यदेहमाश्रितः पुण्यलोकान् प्रजामि इति तात्पर्य्यम्। वसन्ततिलकं वृत्तम्। अर्थान्तरन्यासः अलङ्कारः।

यस्मादित्यत्र अपादाने पञ्चमी भीत्रार्थानां भयहेतुरित्यपादानत्वम्। सम्+जीव (णिच्)+क्त (कर्म्मणि)=सञ्जीवित। ऋध्+क्तिन्=ऋद्धि। नि+धा+क्यु (उणादि)=निधन। तॄ+(णिच्)+लट्. अन्ति=तारयन्ति। सञ्ज+घञ्=सङ्ग।

अनुरूपीभाव:—वरं पण्डितशत्रुर्नमूर्खो हितकारक:।
हीयते हि मतिस्तात हीनै: सह समागमात्।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम्॥
हितोपदेश:।

समुन्नयन्भूति मनार्य्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभि:। इति भारवि:।

राम:। तस्य ब्राह्मणशिशो: उज्जीवनम् तवचाभ्युदय: इत्युभयमेव मम प्रीति मावहति। उग्रस्य अतिकठोरस्य तपस: फलं पुण्यलोकनिवासरूपं अनुभूयतां भुज्यतां प्राप्यतामित्यर्थ:।

यत्रेति। यत्र आनन्दाश्च यत्र मोदाश्च यत्र पुण्या: सम्पदश्च, वैराजा नाम तैजसा: ध्रुवा: ते लोका: ते सन्तु॥ १२॥

यत्र येषु लोकेषु आनन्दा: ह्लादा: मोदा: हर्षा: पुण्या: पवित्रा: सम्पद: विभूतयश्च सन्ति; यत्रस्थै: पुण्यात्मभि: उपभुज्यन्ते इत्यर्थ: विराज: ब्रह्मण: इमे इति वैराजा: नाम प्रसिद्धा: तैजसा: तेजोमया: क्षित्यादिसम्पर्करहिता: ध्रुवा: अनपायिन: कल्पान्तेऽपि अविनाशिन: ते लोका: भुवनानि ते तव सन्तु भवन्तु। तेषु लोकेषु निवस इत्यर्थ:। विराज्+अण=वैराज। वि+राज+क्विप्=विराज्। तिज्+असुन् तेजस्। तेजस्+अण्=तैजस। मुद+घञ्=मोद।

शम्बूक:। युष्माकं पादानां चरणानां प्रसाद: अनुग्रह एव उपाय: प्राप्तिद्वारं यस्य स युष्मत्पादप्रसादोपाय:। भवदनुग्रहेण आसादित: इत्यर्थ:। महत्+इमन् =महिमन्। महिमा माहात्म्यम्। अभ्युदय: इत्यर्थ:।

अन्वेष्टव्य: इति। भुवने अन्वेष्टव्य: भूतनाथ: शरण्य: त्वमिति शेष: वृषलकं माम् अन्विष्यन् योजनानां शतानि क्रान्त्वा इह सम्प्राप्त: इति यत् स तपसां सम्प्रसाद:, अन्यथा चेत् अयोध्याया: दण्डकायां वने व: पुन: उपगम: क्व॥ १३॥

भुवने जगति अन्वेष्टव्य: मार्गितव्य: भूतानां प्राणिनां नाथ: पति: शरणे साधु: इति शरण्य: शरणागतवत्सल: परित्राता त्वम् वृषलकं शूद्रमधन्यं माम् अन्विष्यन् मृगयमाण: योजनानां शतानि क्रान्त्वा सुबहुमध्वानमतिक्रम्य इह अत्र पञ्चवट्यां सम्प्राप्त: समुपस्थित: इति यत् यदिति सामान्ये नपुंसकम्, तवेहागमनमित्यर्थ: स विधेयप्रधान्यात् पुंलिङ्गता। तपसां मया अनुष्ठितानां व्रतानां सम्प्रसाद: अनुग्रह: फलमित्यर्थ:

तपोजन्येन पुण्येन भवतः अत्र शुभागमनं संवृत्तम्, अन्यथा चेत् तपःसम्भूतपुण्याभावश्चेत्, अयोध्यायाः सुदूरवर्त्तिसाकेतात् दण्डकायां वने दण्डकारण्ये वो युष्माकं पुनः भूयोऽपि उपगमः आगमनं क्व कुतो भवेदित्यर्थः। मन्दाक्रान्ता वृत्तम्। मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गुरुश्चेत्॥ अत्र महापुरुषविषया रतिर्भावः॥ अनु + इष् + तव्य ( कर्म्मणि ) = अन्वेष्टव्य। अनु + इष् + शतृ = अन्विष्यत्। योजनं परमात्मनि चतुष्क्रोशाख्य योगे इति मेदिनी। क्रमेःक्त्वाच्, क्रान्त्वा, क्रमित्वा इति पदद्वयम्; क्रान्त्वा इति केचित्।

रामः। आङ्इति स्मृतौ अव्ययम्। स्निग्धेति। क्वचित् स्निग्धश्यामाः अपरतः भीषणाभोगरूक्षाः। स्थाने स्थाने निर्झराणां झाङ्कृतैः मुखरककुभः तीर्थाश्रम गिरिसरित्गर्त्तकान्तारमिश्राः परिचितभुवः एते दण्डकारण्यभागाः सन्दृश्यन्ते॥ १४॥

क्वचित् कुत्रचिदंशे स्निग्धाश्च ते श्यामाश्चेति स्निग्धश्यामाः तरुलतागुल्मादीनां सद्भावात् मसृणनीलवर्णाः दृष्टिसुभगाश्च; अपरतः अपरस्मिन् अंशे सप्तम्यास्तसिल् भीषणेन आभोगेन विस्तारेण रूक्षाः अचिक्कणाः दुर्द्दर्शना इत्यर्थः, आभोगः परिपूर्णता इत्यमरः। स्थाने स्थाने प्रायेण सर्व्वस्मिन् अंशे निर्झराणां वारिप्रवाहाणां झाङ्कृतैः झाङ् झाङ् इति शब्दैः मुखराः शब्दायमानाः ककुभः आशामुखानि येषां ते मुखरककुभः निनादितदिङ्मुखाः, तीर्थानि पुण्यक्षेत्राणि आश्रमाः तपोवनानि गिरयः शैलाः सरितः नद्यः गर्त्ताः विलानि कान्ताराः अरण्यानि च ते तीर्थाश्रमगिरिसरिद्गर्त्तकान्ताराः तैः मिश्राः सहिताः सुविस्तीर्णा इति भावः परिचिता संस्तुता ज्ञातपूर्व्वा इति यावत् भूः येषां ते परिचितभुवः ज्ञातप्रदेशाः एते दण्डकारण्यस्य भागाः अंशाः सन्दृश्यन्ते मया अवलोक्यन्ते। मन्दाक्रान्ता वृत्तम्। महारण्ये दुर्गमपथे कान्तारं पुंनपुंसकमिति अमरः। तीर्थाश्रमगिरिसरिद्गर्भकान्तारमिश्राः इति पाठे तीर्थाश्रमगिरिसरितः गर्भे अभ्यन्तरे यस्य तेन कान्तारेण महारण्येन मिश्राः दण्डकारण्यभागाः इति व्याख्येयम्। वारिप्रवाहो निर्झरो झरः। श्यै + मक् = श्याम। स्निह + क्त = स्निग्ध। आ + भुज् + घञ् = आभोग। स्थाने स्थाने इति वीप्सायां द्विरुक्तिः। मुख + र = मुखर। खमुखकुञ्जेभ्यः उपसंख्यानमिति रः।

शम्बूकः। अत्र पूर्व्वमरण्यवासकाले निवसता देवेन—भीमं भीषणं कर्म्म येषां तेषां भीमकर्म्मणां भीषणकर्म्मणां क्रूरकर्म्मणामिति यावत् रक्षसां राक्षसानां चतुर्द्दशसहस्राणि दूषणः खरः त्रिमूर्द्धात्रिशिराश्च ते दूषणखरत्रिमूर्द्धानः त्रयश्च रणे संग्रामे निहताः (त्रयो मूर्द्धानो यस्य इति विग्रहे त्रिमूर्द्धः इति रूपम्। द्वित्रिभ्यां षः मूर्द्ध्नः इति समासान्तः षः स्यात्। इह तु समासान्तविधेरभावः। समासान्तविधेरनित्यत्वात् नेह षः इति महाकविप्रयोगाच्च कथञ्चित् अभ्युपेतव्यम्। यद्वा दूषणखरत्रिमूर्द्धाः रणे

संग्रामे नो हता विनाशिता: किम् इति काकु:। स्मरसि किं न महाभाग यत् दूषण-खरत्रिमूर्द्धा: त्वया हता: वस्तुतस्तु अयपच्च: कष्टकल्पनासाध्य:। समासान्त-विधेरनित्यत्वमेव ज्ञापयति कवि: ; तथाचाग्रे कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि इति प्रयोग: अपि समासान्तविधेरनित्यताश्रयणेन समर्थनीय:)॥१५॥

सिद्ध चेवं इति सिद्धचेव तस्मिन् सिद्धचेवे ; यत्र तपस्यन् जन: स्वल्पेन आयासेन सिद्धिमेति तव। अहमिव दृश्यन्ते ये ते मादृशा: त्यदादिषु दृशेरनालोचने कञ्च इति कन्, आ सर्व्वनाम्न: इति आकारोऽन्तादेश:। मादृशानां मनुष्याणां भीरव: जना इति भीरुजना: तेषां भीरुजनानां भयशीलानाम् अकुतोभय: निर्भय: सञ्चार: समागम: जात:। नास्ति कुतोऽपि भयं यस्मिन् स: अकुतोभय: मयूर-व्यंसकादयश्चेति निपातनात् समास:।

शम्बूक:। सर्व्वेषां भूतानां प्राणिनां लोमहर्षणानि अतिभीषणानि येषु दृष्टेषु भयेन लोकानां लोम्नां हर्षणम् उद्गम: रोमाञ्च: इत्यर्थ. जायते तथोक्तानि, चण्डै: उग्रकोपै: श्वापदानां हिंस्राणां व्याघ्रादीनां कुलै: सङ्कुलानि व्याप्तानि अध्युषितानि इत्यर्थ: गिरीणां गह्वराणि गुहा: येषु तानि चण्डश्वापदकुलसङ्कुलगिरिगह्वराणि, जनस्थानस्य पर्य्यन्ते प्रान्ते दीर्घाणि विपुलानि अरण्यानि वनानि दक्षिणां दिशं आशां अभिवर्त्तन्ते दक्षिणदिगभिमुखं प्रसरन्ति।

लोम्नां हर्षणं उद्गम: येषु यैर्व्वा तानि लोमहर्षणानि। हृष्+ल्युट्=हर्षण। उद्+मद्+क्त=उन्मत्त। माद्यति। शुन: इव पद एषां इति श्वापदा:। शुनो-दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्य: इति दीर्घत्वम्। गुहा पाषाण सन्धि: स्यात् कन्दर: कन्दरादरी। निकुञ्ज गह्वरं प्रोक्तम् इति हलायुध:। दरीतु कन्दरो वास्त्री देवखातविले गुहा गह्वर मित्यमर:। सङ्कीर्णे सङ्कुलाकीर्णे इत्यमर:। वाढ़ं भृशप्रतिज्ञयो: इति मेदिनी। अवश्यभृशयोर्वाढ़ मिति हलायुध:।

বাসন্তী। [ স্নেহ ও কৌতুকের সহিত অশ্রু বিসর্জ্জন করিয়া ] কুমার লক্ষ্মণেরও পুত্র আঃ মা বাঁচিলাম।

আত্রেয়ী। এই সময়ে কোন একজন ব্রাহ্মণ স্বীয় মৃতপুত্রকে রাজদ্বারে আনয়ন করিয়া ক্রোড়ে স্থাপনপূর্ব্বক বক্ষঃস্থলে করাঘাত করিয়া অভয় যাচঞা করিলেন। তাহার পর করুণাময় রামচন্দ্র রাজার অপরাধ ভিন্ন প্রজার অকালমৃত্যু হয় না অতএব তাঁহার নিজের দোষে ইহা ঘটিয়াছে এইরূপ স্থির করিলে হঠাৎ দৈববাণী হইল। শম্বুকনামে শূদ্র পৃথিবীতে তপস্যা করিতেছে। হে রাম সেই ব্যক্তি তোমার নিকট শিরশ্ছেদদণ্ডার্হ হইয়াছে। তাহাকে বিনাশ করিয়া ব্রাহ্মণকে সঞ্জীবিত কর ॥ ৮ ॥

ইহা শ্রবণ করিয়া কৃপাণহস্তে পুষ্পকে আরোহণ করিয়া জগৎপতি রামচন্দ্র শূদ্র-তাপসের অন্বেষণার্থ সমস্ত দিক্ বিদিকে বিচরণ করিতে আরম্ভ করিলেন।

বাসন্তী। শম্বূকনামে ধূমপায়ী শূদ্র এই জনস্থানেই তপশ্চরণ করিতেছে। তাহা হইলে রামভদ্র পুনর্ব্বার এই বন অলঙ্কৃত করিবেন কি ?

আত্রেয়ী। ভদ্রে, আমি এখন যাই।

বাসন্তী। তাহাই হউক। কিন্তু দিবস পূর্ণতাপ্রাপ্ত হইয়া মধ্যাহ্নসীমায় উপস্থিত হইয়াছে। কারণ ঐ দেখুন——

যাহাদিগের বল্কল হইতে চঞ্চুদ্বারা কীটগুলিকে আকৃষ্ট করিয়া কুক্কুটাদি পক্ষী আনন্দে ছায়ায় বসিয়া ভক্ষণ করিতেছে, যাহারা নিদাঘক্লান্তকপোতকুক্কুটকুলের কূজনে মুখরিত, পক্ষিনীড়নিচিত সেই ঐ তটস্থিত তরুগুলি, কপোলকণ্ডূতিনিবারণার্থ দ্বিপগণের গণ্ডঘর্ষণজন্য উৎকম্পে পতিত, রবিতাপে শিথিলিতবৃন্ত পুষ্পনিচয়দ্বারা গোদাবরীর অর্চ্চনা করিতেছে ॥ ৯ ॥

[ কিয়দ্দূর গমন করিয়া উভয়ে নিষ্ক্রান্ত হইলেন ]

বিষ্কম্ভক।

[ তাহার পর সদয়ভাবে উদ্যতখড়্গ রামভদ্রের প্রবেশ ]

রাম। হে দক্ষিণহস্ত, মৃতব্রাহ্মণকুমারের প্রত্যুজ্জীবনার্থ এই শূদ্রতাপসের উপরি কৃপাণ পাতিত কর। দুর্ব্বহ গর্ভভারে খিন্ন সীতার নির্ব্বাসনে পটু রামের অঙ্গ তুমি, তোমার করুণা কিরূপে সম্ভবে ? ॥ ১০ ॥

[কোনরূপে প্রহার করিয়া] রামের যোগ্য কার্য্যত অনুষ্ঠিত হইল ; এক্ষণে সে ব্রাহ্মণ-শিশু জীবিত হইবে কি ?

দিব্যপুরুষ। [প্রবেশ করিয়া] জয় হউক, মহারাজের জয় হউক !

যম হইতেও অভয়দান কর্ত্তা আপনি দণ্ডবিধান করাতে সেই ব্রাহ্মণশিশু সঞ্জীবিত হইয়াছে। আমারও এই সৌভাগ্যসমৃদ্ধি হইয়াছে। আমি শম্বূক, আপনার চরণে শিরঃস্পর্শপূর্ব্বক প্রণিপাত করি। সৎসঙ্গে নিধন ও পরিত্রাণের হেতু হইয়া থাকে ॥ ১১ ॥

রাম। এই উভয় ঘটনাই আমার প্রীতিবর্দ্ধন করিতেছে। অতএব উগ্র তপস্যার ফল অনুভব কর।

যেখানে আনন্দ, প্রমোদ ও পুণ্য সম্পদ্ ( সর্ব্বদা ) বিরাজিত, বৈরাজনামক তেজোময় অবিনশ্বর সেই লোক তুমি প্রাপ্ত হও ॥ ১১ ॥

শম্বূক। আপনার চরণানুগ্রহই এই মহিমার প্রাপ্ত্যুপায়। এ বিষয়ে তপস্যায় কি ফল হইয়াছে ? অথবা তপস্যায় মহোপকার করিয়াছে।

জগতে অন্বেষণীয়, ভূতনাথ, শরণাগতবৎসল আপনি অধন্য এই শূদ্রের অন্বেষণে শত শত যোজন অতিক্রম করিয়া যে এখানে আগমন করিয়াছেন, ইহা তপস্যার ফল ; তাহা না হইলে অযোধ্যা হইতে দণ্ডকারণ্যে আপনার পুনর্ব্বার আগমন কি হইত ? ॥ ১৩ ॥

রাম। এ কি দণ্ডকা ? [ সকল দিকে দৃষ্টিপাত করিয়া ] হাঁ। এই সেই পরিচিত ভূমি, তীর্থাশ্রমগিরিসরিৎগর্ভকান্তারমিশ্র দণ্ডকারণ্যপ্রদেশ অবলোকন করিতেছি ;

ইহার কোন ভাগ স্নিগ্ধশ্যাম ; আবার অন্য ভাগ অতিভীষণবিস্তৃতিহেতু দুষ্প্রেক্ষ্য। ইহার স্থানে স্থানে নির্ঝরের ঝঙ্কারে দিঙ্মুখ মুখরিত হইতেছে ॥ ১৪ ॥

শম্বূক। ইহা দণ্ডকাই বটে। আপনি পূর্ব্বে এই স্থানে নিবাসসময়ে চতুর্দ্দশ সহস্র ভীমকর্ম্মা রাক্ষসগণকে এবং খরদূষণ ও ত্রিমূর্দ্ধ এই তিনজনকে নিহত করিয়াছিলেন। সেইহেতু তপস্যার সিদ্ধিক্ষেত্র এই জনস্থানে আমাদিগের ন্যায় ভীরুজনেরাও অকুতোভয়ে বিচরণ করিতেছে।

রাম। এ কেবল দণ্ডকা নহে ; জনস্থানও বটে।

শম্বূক। হাঁ। এগুলি জনস্থানের পর্য্যন্তবর্ত্তী দীর্ঘারণ্য দক্ষিণদিগভিমুখে প্রসারিত হইয়াছে। এস্থানে ভয়ে সকল প্রাণীর রোমহর্ষ হইয়া থাকে। এবং এস্থানের গিরিগহ্বরগুলি উচ্চণ্ডশ্বাপদকুলদ্বারা পরিব্যাপ্ত।

*Vasanti* :—[*With tears, affectionately and with curiosity.*] The son of Prince Lakshmana ! Oh ! Joy ! O mother ! I have got a (new) life !

*Atreyi* :—In the meanwhile a Brahman taking his dead child (on his lap) to the gate of the King cried out for help, beating his breast. Then when under the belief that without some misconduct of the King there could be no untimely death among the people, the kind-hearted Ramachandra concluded that there must be some fault on his part, an impersonal voice was suddently heard :—"A *Vrishala* or Sudra, Sambuka by name, has been practising austerities on the earth He deserves to be beheaded by you, O Rama. Kill him and bring back the Brahman to life." (8).

Having heard this the lord of the world with sword in hand mounted the aerial car Puspaka and began to roam about all the principal and secondary cardinal points in quest of the Sudra ascetic.

*Vasanti* :—A *Sudra* named Sambuka, who inhales smoke, practises penance here in Janasthana. May I hope that this forest will again be graced by Ramabhadra !

*Atreyi* :—Good lady, I am going now.

*Vasanti* :—Be it so ; but the day has far advanced, and has become unbearable. For look there—

The trees on the banks of the Godavari—teeming with the nests of birds, with the tired pegions and cocks cooing, having perched on them), from the barks of which birds are drawing out

insects with their beaks and scratching the ground in the shade,—are worshipping the Godavari with their flowers, the stems of which have been loosened by the heat, and which are dropping on account of the severe shaking caused by the elephants rubbing their massive itching temples against them. (9).

[*They walk about and depart.*]

The end of the prelude to the 2nd Act.

[*Then enter Ramabhadra, with sword lifted up in compassion.*]

*Rama* :—O my right arm, drop the sword upon this Sudra ascetic in order to restore the dead child of the Brahman to life. You are a part of the body of Rama who is capable of banishing Sita languishing under the heavy burden in her womb. Whence could there be compassion in you ? (10)

[*Striking somehow with reluctance*]. Now I have done an act quite worthy of Rama. May I hope that the child of the Brahman will be restored to life ?

[*Enter a celestial being.*]

*Celestial being* :—Victory to the King ! Victory to the King !

When you who granted protection even against the God of death have dealt out punishment, that child has been brought back to life, and such is my glory. I am Sambuka, and bow down to your feet with my head Even destruction at the hands of the good causes salvation. (11).

*Rama* :—Both these incidents are pleasing to me. Enjoy therefore the fruit of your hard penance. May you have those imperishable and empyrean regions called *Vairaja* where pure gladness, joy and prosperity reign ! (12).

*Sambuka* :—The favour of your feet is the means to this greatness.

Of what good is my penance in this matter ? Or rather my austerities have indeed done a great service !

It is through the favour of my penance that you, who are the lord of all beings, a refuge to all, and to be sought after in this world, have come here in quest of me, a Sudra, after having cross-

ed hundreds of Yojanas. Were it not so, where would have been the chance of your coming back to Dandaka from Ayodhya ? (13).

*Rama* :— Is it indeed Dandaka ? [*Looking on all sides.*] Oh ! indeed ! I see the tracts or divisions of Dandaka the site of which is familiar to me, which teem with holy places of pilgrimage, hermitages, hills, rivers, chasms, and deep forests, and which at places are of a glossy green, and at others are dry and terrible to look at on account of their frightful expanse ; and in different places whereof the quarters are being filled up with the murmur of mountain springs. (14).

*Sambuka* :—Surely it is Dandaka. While living here formerly, your majesty, it is said, killed in battle fourteen thousand Rakshasas of atrocious deed, and three others, viz. Dushana, Khara and Trimurdha. (15).

Hence it is that, here in Janasthana, where the success of penance is easily attained, even timid persons like myself wander about without the slightest fear.

*Rama* :—Not only it is Dandaka, but Janasthana also.

*Sambuka* :—Yes, these are the frontier forests of Janasthana, stretching to the south, in which the caves of mountains are filled with multitudes of wild and furious beasts of prey, and which cause the hair of all beings to stand on end through fear.

तथाहि निष्कूजेति—क्वचित् निष्कूजस्तिमिता: क्वचित् प्रोच्चण्डसत्वस्वना: स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नय: प्रदरोदरेषु विलसत्स्वल्पाम्भस: सीमान: यासु तृष्यद्भि: प्रतिसूर्य्यकै: अयम् अजगरस्वेदद्रव: पीयते ॥ १६ ॥

क्वचित् कुत्रचिदंशे नास्ति कूज: पक्षिणां कूजनं यासु ता: निष्कूजा: नि:शब्दा इत्यर्थ: स्तिमिता: निश्चलाश्च इति निष्कूजस्तिमिता: विशेषणद्वयस्य कर्म्मधारयनिर्व्वाह: ; क्वचिदन्यत्र प्रोच्चण्ड: अत्युग्र: सत्वानां प्राणिनां श्वापदानामिति भाव: स्वन: यासु ता: प्रोच्चण्डसत्वस्वना: श्वापदानां घोरेण गर्ज्जनेन निनादिता:, स्वेच्छया सुप्तानां गाढ़ निद्रितानां गभीर: भोग: शरीरं फणो वा येषां तेषां गभीरभोगानां महाकायानां, भोग: सुखे स्त्र्यादिभृतौ अहेश्च फणकाययो: इत्यमर: भुजगानां सर्पाणां श्वासै: प्रबलै: निश्वासमारुतै: प्रदीप्त: ज्वलित: सन्धुक्षित: इत्यर्थ: अग्नि: वनानलो यासु ता: स्वेच्छासुप्त-गभीरभोगभुजगश्वासप्रदीप्ताग्नय: प्रदराणां गर्त्तानां उदरेषु अभ्यन्तरेषु विलसन्ति विद्य-

मानानि स्वल्पानि अम्भांसि जलानि यासु ताः विलसत्स्वल्पाम्भसः विराजत्स्तोकजलाः सीमानः अरण्यप्रान्तभूमयः ; यासु सीमसु तृष्यद्भिः तृष्णातुरैः प्रतिसूर्य्यकैः कृकलासैः सरटैरिति यावत् अयं अजगराणां महाकायानां सर्पाणां स्वेदस्य द्रवः इति स्वेदद्रवः गलितघर्म्माम्भोधारा इत्यर्थः पीयते, जलाभावात् तृषोपशान्तये सरटाः अजगराणां गात्रनिःसृतघर्म्माम्भांसि पिबन्ति ।

अजान् गिरन्ति गिलन्ति इति अजगराः । गिरतेरच् । अजानां बृहतामपि जन्तूनामित्यर्थः गराः ग्रासकर्त्तारः । तृष् + शतृ = तृष्यत् । भुजं कुटिलं गच्छन्ति ये ते भुजगाः सर्पाः भुज + गम् + ड = भुजग । श्वस् + घञ् = श्वास प्र + दृ + अप् = प्रदर । वि + लस् + शतृ = विलसत् । आप् + असुन् । आप्नोतेः ह्रस्वः ; उदकेनुम्भौच इति अम्भस् । स्विद् + घञ् = स्वेद । द्रु + अप् = द्रव । The word प्रतिसूर्य्यक is not found in the dictionary of Amarasinha. In the अभिधानरत्नमाला of हलायुध it appears as प्रतिसूर्य्यशयानकः । सरटः कृकलासः स्यात्प्रतिसूर्य्यशयानकः । It is so called possibly from its habit of lying opposite to the sun or its habit of changing its colour in imitation of the seven rays of the sun सूर्य्यं प्रति ( लक्ष्यीकृत्य ) शयानः इति प्रतिसूर्य्यकशयानकः । It is very likely that the word शयान has in obedience to the principle of laziness been dropped. कृकलासस्तृणाञ्जनः प्रतिसूर्य्यः इति त्रिकाण्डशेषः ।

रामः । पश्यामीति । भूतपूर्व्वं खरालयं जनस्थानं पश्यामि च, पूर्व्वान् वृत्तान्तान् प्रत्यक्षान् इव अनुभवामि च ॥ १७ ॥

भूतपूर्व्वः खरस्य आलयः तं जनस्थानं पञ्चवट्याः प्रदेशविशेषं पश्यामि विलोकयामि च, पूर्व्वान् वृत्तान्तान् उदन्तान् प्रत्यक्षान् वर्त्तमानान् इव अनुभवामि च । पूर्व्वं सीतया सह अत्र न्यवसम् ; महता सुखेन कालो व्यतीयाय इत्यादिकं सर्व्वमस्मृतौ आरूढं अरुन्तुदं क्लेशं जनयति इति भावः । च इयं यौगपद्यं द्योतयति ।

पूर्व्वं भूतः इति भूतपूर्व्वः । सुप्सुपेति समासः । प्रत्यक्षं अस्ति एषां इति प्रत्यक्षाः अर्शआदित्वादच् । यद्वा अक्षम् इन्द्रियं प्रतिगताः प्रत्यक्षाः । प्रादि-समासः ।

आरमति अत्र इति आरामः उपवनम् । आङ् + रम + घञ् ( अधिकरणे ) । प्रियः आरामः यस्याः सा प्रियारामा, पक्षे आरामप्रिया । वा प्रियस्य इति प्रियशब्दस्य परनिपातभावः पाक्षिकः । तानि पूर्व्वं तया सह अध्युषितानि एतानि अरण्यानि इदानीम् एकाकी अहं विलोकयामि । अतः परं अस्मादधिकं किं भयानकं भीषणं

स्यात्। विसृष्टसीतस्य मे पञ्चवट्यामागमनं नितरां मर्म्मस्पृगितिभावः। विभेति अस्मात् इति भयानकम्। भी + आनक् (उणादि)।

त्वयेति। मधुगन्धिषु वनेषु त्वया सह निवत्स्यामि इति असौ हा अरमत एव। तस्याः स स्नेहः तादृशः॥ १८॥

मधुनः पुष्परसस्य मकरन्दस्य गन्धः अस्ति एषु इति मधुगन्धीनि तेषु वनेषु अरण्येषु त्वया सह निवत्स्यामि अवस्थास्ये इति चिन्तया एव असौ सीता हा इतिखेदे, अरमत, परां प्रीतिं लेभे। तस्याः स मया अनुभूतपूर्व्वः स्नेहः तादृशः आसीत्। मयि सा इत्थं स्नेहवती आसीत्, यत् मत्सङ्गेन कालं नेष्यतीतिचिन्तया वनवासदुःखमपि नागणयत्।

अकिञ्चिदिति। अकिञ्चित् अपि कुर्व्वाणः सौख्यैः दुःखानि अपोहति।
यो हि यस्य प्रियोजनः तत् तस्य किमपि द्रव्यम्॥ १९॥

अकिञ्चित् अपि कुर्व्वाणः किञ्चित् अपि न कुर्व्वन् इत्यर्थः क्वचित् प्रसज्यप्रतिषेधन-आपि समासः इष्यते यथाह क्रमदीश्वरः इदन्तु नेष्यते अमाषं हरमाणः अकिञ्चित् कुर्व्वाणः असूर्य्यम्पश्य इत्यादि सौख्यैः सुखसन्तानैः दुःखानि अपोहति निरस्यति नाशयति इत्यर्थः प्रियो जनः इति शेषः। यो हि यस्य प्रियः वल्लभोजनः तत् तस्य किमपि लोकोत्तरं द्रव्यम्। तत् इति विधेयप्राधान्यात् क्लीवम्। उपकृतिपक्षे किमप्यकुर्व्वन् सन्निधिमात्रेण सुखसम्भारं वितनुते इति अलौकिकत्वम् प्रियजनस्य प्रेम्णोवा।

अप + ऊह + लट् ति = अपोहति। उपसर्गादस्यत्यूह्योर्वेति वाच्यम्। इति पाक्षिकं परस्मैपदम्। ऊहते; ऊहाञ्चक्रे; औहिष्ट।

शम्बूकः। दुरासदैः दुर्धर्षैः भीषणैरित्यर्थः एभिः अरण्यैः अलम् एषां दर्शनेन न किञ्चित्साध्यमस्तीति भावः। गम्यमानक्रियानुरोधात् करणत्वम्। मदेन हर्षेण कलाः अव्यक्तमधुरध्वनयः ये मयूराः वर्हिणः तेषां कण्ठानां कोमलाच्छविरिव छविः कान्तिः येषां तैः पर्य्यन्तैः प्रान्तैः सीमभिः इत्यर्थः अवकीर्णानि वेष्टितानि इत्यर्थः अविरलं सान्द्रं निविष्टाः, नीलवहुला श्यामप्राया छाया कान्तिः येषां ते नीलवहुल-च्छायाः श्यामवर्णाः तरुणाः नवाः तरवः वृक्षाः तेषां षण्डानि समूहाः तैः मण्डितानि अलङ्कृतानि षण्डं पद्मादिसङ्घाते न स्त्री स्याद् गोपतौ पुमान् इति मेदिनी। असम्भ्रान्तानि अभीतानि विविधानि मृगयूथानि मृगसमूहाः येषु तानि प्रशान्तानिच गम्भीराणि अनुद्वेगकराण्यपि विस्तीर्णत्वात् विस्मयसम्भ्रमकराणि मध्यमानि अरण्यानि विलोकयतु अनुगतो भावः इति अनुभावः महान् अनुभावो यस्य स महानुभावः।

दुर् + आङ् + सद + खल् (कर्म्मणि) = दुरासद। अव + कॄ + क्त (कर्म्मणि) =

अवकीर्णं। छो + य = छाया। माच्छाशसिभ्यो यः। छाया सूर्य्यप्रियाकान्तिः प्रतिबिम्ब-मनातपः इत्यमरः। सम् + भ्रम् + क्त (कर्त्तरि) = सम्भ्रान्त। सम्भ्रमः साध्वसेऽपि-स्यात् संवेगादरयोरपि इति मेदिनी। यूथं तिर्य्यक्समूहेऽस्त्रीपुष्पभेदे तु योषिति इति मेदिनी।

इहेति। इह समदशकुन्ताक्रान्तवानीरवीरुत्प्रसवसुरभिशीतस्वच्छतोयाः फलभर परिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसः निर्झरिण्यः वहन्ति ॥ २० ॥

इह अत्र मध्यमारण्येषु समदैः मदमत्तैः रत्युत्कण्ठैः इत्यर्थः शकुन्तैः पक्षिभिः आक्रान्ताः अध्युषिता या वानीरवीरुधः वेतसलताः तासां प्रसवैः पुष्पैः शकुन्तानामध्यासीत्कम्पेन पतितैरितिभावः सुरभीणि सुगन्धानि शीतानि शीतलानि स्वच्छानि अनाविलानि विमलानीति यावत् तोयानि जलानि यासां ताः समदशकुन्ताक्रान्त वानीरवीरुत्प्रसवसुरभिशीतस्वच्छतोयाः फलानां भरस्य अतिशयस्य परिणामेन परिपाकेण श्यामानां कृष्णवर्णानां जम्बूनां निकुञ्जेषु कुञ्जेषु, लतादिपिहितोदरस्थानेषु स्खलनेन प्रतिघातेन मुखराणि नदन्ति भूरीणि प्रभूतानि स्रोतांसि प्रवाहाः यासां ताः फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसः निर्झरिण्यः सरितः वहन्ति वेगेन गच्छन्ति। स्वभावोक्तिरलङ्कारः। मालिनीवृत्तम्। ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणम्।

वि + रुह् + क्विप् = वीरुध्। हस्य धः उपसर्गस्य च दीर्घः। लताप्रतानिनी वीरुद्गुल्मिन्युलपइत्यपि इत्यमरः स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने इत्यमरः। फलं पुष्पञ्च पत्रञ्च वृक्षाणां प्रसवं विदुः इति धरणिः। निर्झरः वारिप्रवाहः विद्यते अस्याः इति निर्झरिणी। श्यै + क्त = शीत। स्पर्शार्थत्वात् निष्ठातस्य न नः। द्रवमूर्त्ति-स्पर्शयोरिति सम्प्रसारणम्। अर्थान्तरे वृत्तिवशात् वहेः अकर्म्मकत्वम्। स्रोत इन्द्रिये निम्नगारये इत्यमरः।

दधतीति। अत्र कुहरभाजां भल्लूकयूनाम् अनुरसितगुरूणि अम्बूकृतानि स्त्यानं दधति। शल्लकीनां शिशिरकटुकषायः इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः स्त्यायते ॥ २१ ॥

अत्र अरण्ये कुहराणि विलानि भजन्ते ये ते कुहरभाजः गर्त्तशायिनः अथ कुहरं शुषिरं विवरं विलम् इत्यमरः। तेषां, भल्लूकायन्ते युवानश्चेति भल्लूकयुवानः तेषां भल्लूकयूनां तरुणभल्लूकानाम् अनुरसितैः प्रतिध्वानैः गुरूणि महान्ति इति अनुरसितगुरूणि गुहानिवद्धप्रतिशब्ददीर्घाणि अम्बूकृतानि सनिष्ठीवनानि रसितानि; निरस्तं त्वरितोदितम्। अम्बूकृतं सनिष्ठीवम् इत्यमरः। स्त्यानं वृद्धिं स्त्यै शब्दसङ्घातयोः इति भौवादिकात् भावे ल्युट्, दधति धारयन्ति। शल्लकीनां गजभक्ष्याणां शिशिरः

शीतल: कटु: सुरभि: कषाय: कषायरसवान् गन्धिनी गजभक्ष्या तु सुवहा सुरभीरसा। महेरणा कन्दुरकी सल्लकी ह्लादिनीति च इत्यमर: इभै: हस्तिभि: दलितानां पाटितानां ग्रन्थीनां निष्यन्दस्य निर्यासस्य गन्ध: स्त्यायते समन्तात् विसरति,विस्तारमापद्यते इत्यर्थ:। मालिनीछन्द:। श्लोकद्वयमिदं महावीरचरिते मालतीमाधवे च दृश्यते। कुञ्जर+भज्+णिव=कुञ्जरभाज्। भजो णिव:। भजति, भजते ; बभाज, भेजे ; अभाक्षीत् अभक्त। रस्+(भावे)+क्त=रसित=शब्द। रसति ; ररास ; अरसीत्, अरासीत्। अम्बूकृतानि इत्यत्र अम्बु शब्द: च्व्यन्त:। च्वौ चेति दीर्घ:। शिशिरादयश्चेति निपातनात् साधु। शिशिरकटुकषाय इत्यत्र विशेषणत्रयस्य कर्म्मधारयनिर्व्वाह:। कटुतिक्तकषायाद्या: सौरभ्येऽपि प्रकीर्त्तिता:।

राम:। देवानां यानमिति देवयानं विमानं प्रतिपद्यस्व प्राप्नुहि आरोह इत्यर्थ: पुण्येभ्य: पवित्रेभ्य: लोकेभ्य: भुवनेभ्य: पुण्यान् लोकान् गन्तुमित्यर्थ:। क्रियार्थोपपदस्य च कर्म्मणि स्थानिन: इति चतुर्थी।

शम्बूक:। पुराण: ब्रह्मवादी इति पुराणब्रह्मवादी तम् अभिवाद्य प्रणम्य वन्दित्वा। शश्वत्+अण् (शैषिक)=शाश्वत। शाश्वतं चिरन्तनं पदं स्थानं अनुप्रविशामि।

राम:। एतदिति। अद्य तत् एतत् वनं पुन: दृष्टम्। यस्मिन् पुरा चिरं वसन्त: वयं स्वधर्म्मे रता: आरण्यका: च सांसारिकेषु सुखेषु च रसज्ञा: गृहिणश्च अभूम ॥ २२ ॥

अद्य तत् एतत् वनं जनस्थानारण्यं पुन: भूयो दृष्टं यस्मिन् अरण्ये पुरा प्राक् चिरं दीर्घकालं चतुर्द्दशसमा: इत्यर्थ: वसन्त: वयं स्वधर्म्मे स्वे धर्म्मे वानप्रस्थोचिते धर्म्मे रता: आरण्यका: अरण्यसदो वानप्रस्था: च सांसारिकेषु संसारसम्बन्धिषु सुखेषु च रसज्ञा: स्वादज्ञा: गृहिण: गृहस्थाश्रमिणश्च अभूम। वसन्ततिलकावृत्तम्।

अरण्य+वुञ्=आरण्यक। संसार+ठक्=सांसारिक। रसं स्वादं जानन्ति ये ते रसज्ञा:। रस+ज्ञा+क=रसज्ञ। आतोऽनुपसर्गे इति क:। सुखेषु इत्यत्र विषयाधिकरणे सप्तमी।

अपिचेति। एत इति। एते ते एव विरुवन्मयूरा: गिरय:, तानि एव मत्त-हरिणानि वनस्थलानि। आमञ्जु वञ्जुललतानि नीरन्ध्रनीलनिचुलानि च तानि अमूनि सरित्तटानि ॥ २३ ॥

विरुवन्त: केकाध्वनिं कुर्व्वन्त: मयूरा: कलापिन: येषु ते विरुवन्मयूरा: नदद्बर्हिण: एते ते एव पूर्व्वं दृष्टा: गिरय: पर्व्वता: मत्ता: मदेन वाताभिमुखं धावन्त: हरिणा: मृगा येषु तानि मत्तहरिणानि तानि एव वनस्थलानि वनभूमय:। आमञ्जव: मनोहरा:

वञ्जुललता: वेतसलता: येषु तानि आमञ्जुवञ्जुललतानि, मनोहरवानीरलताकीर्णानि, नास्ति रन्ध्रम् अन्तरं येषां ते नीरन्ध्रा: घनसन्निविष्टा: नीला: निचुला: स्थलवेतसा: येषु तानि नीरन्ध्रनिचुलानि सान्द्रसन्निविष्टस्थलवेतससङ्कुलानां तानि अमूनि सरितां नदीनां तटानि तीरभूमय:। पूर्ब्बवत्वृत्तम्। स्वभावोक्ति:। रथाभ्रपुष्पविदुरशीतवानीरवञ्जुला:। निचुलो हिज्जलोऽम्बुज: इति चामर:। निचुलेज्जलहिज्जला: इति रभस:। त्रीणि इजर इति ख्यातस्य जलवेतसभेदस्य ; स्थलवेतसस्य इत्यपि क्वचित् निचुल: स्थलवेतस: इति शब्दार्णवादिति अमरटीकायां महेश्वर:। वि + ऋ + शतृ = विवृवत्।

मेघेति। यश्च अयम् आरात् मेघमाला इव विभाव्यते, सोऽयं गिरि: प्रस्रवण: यत्र गोदावरी नदी ॥ २४ ॥

यश्चायम् आरात् दूरात् आराद्दूरसमीपयोरित्यमर: मेघानां पयोधराणां माला श्रेणी इव विभाव्यते लक्ष्यते सोऽयं प्रस्रवणोनाम गिरि: शैल: यत्र गोदावरी नदी सरित् प्रवहतीति शेष:।

अस्येति। अस्य एव महति शिखरे गृध्रराजस्य वास: आसीत्। तस्य अधस्तात् तेषु पर्णोटजेषु वयमपि रता:। यत्र गोदावर्य्या: पयसि विततश्यामलानोकहश्री: अन्त:कूजनमुखरशकुन: रम्य: वनान्त: ॥ २५ ॥

अस्य प्रस्रवणस्य एव महति विपुले शिखरे शृङ्गे गृध्राणां राजा इति गृध्रराज: जटायु: तस्य वास: आसीत्। प्रस्रवणशृङ्गे जटायु: उवास। तस्य शृङ्गस्य अधस्तात् अध:प्रदेशे वयमपि तेषु पर्णानां उटजेषु पर्णशालासु रता: मुदिता: न्यवसाम। यत्र गोदावर्य्या: सरित: पयसि सलिले वितता विस्तीर्णा प्रतिबिम्बिता इत्यर्थ: श्यामलानां श्यामै: पल्लवै: शोभमानानां अनोकहानां वृक्षानां श्री: शोभा यस्य स विततश्यामलानोकहश्री: अन्त: अभ्यन्तरे कूजन्त: रुवन्त: मुखरशकुना: गीतपरा: पक्षिणो यत्र स: अन्त:कूजनमुखरशकुन: रम्य: रमणीय: वनान्त: वनप्रदेश:। अन्त: स्वरूपे निकटे प्रान्ते निश्चयनाशयो: इति हैम:। मन्दाक्रान्तावृत्तम्। उटेभ्य: जायते इति उटज:। उट + जन् + ड। पर्णशालोटजोऽस्त्रियाम् इत्यमर:। यद्यपि उटजशब्दस्य पर्णशालारूपोऽर्थ: तथापि पुन: पर्णग्रहणं पर्णप्राचुर्य्यद्योतनार्थम्। वि + तन् + क्त = वितत। अनस् + अक + हन् + ड = अनोकह ; रम् + यत् = रम्य। पोरदुपधात् इति यत्। अधरशब्दात् अस्तातिप्रत्यय: अधरशब्दस्य अधादेश:।

चिरं दीर्घकालं व्याप्य निवास: इति चिरनिवास:। द्वितीयातत्पुरुष:। अत्यन्तसंयोगे च इति द्वितीयया समास: विविधानां नानाविधानां विश्रम्भाणां रहोनिर्ब्वर्णानां विस्रब्धकर्म्मणां अतिप्रसङ्गस्य अत्यासङ्गे: अतिशयस्येति यावत् साक्षिण उपद्रष्टार:

प्रदेशाः सन्ति। एतेषां प्रदेशानां सीतायाः प्रियसख्याः वासन्त्याश्च अवलोकनेन नूनं मे पाषाणमयमपि हृदयं विदीर्णं भविष्यति। दीर्घकालवासेन प्रियया सह अत्र प्रदेशेषु विविधान् विहारान् प्रियालापांश्च अकरवम्, इदानीं तेषां विहारादीनां संस्मरणम् प्रियाहीनस्य मे नितरामरुन्तुदं स्यादित्यभिप्रायेणोक्तं दुर्भाग्यस्य रामस्य अद्य किमापतितम् इति।

अति + प्र + सञ्ज् + घञ् = अतिप्रसङ्ग। साक्षादित्यव्ययम् तस्मादिनिः। साक्षाद् द्रष्टरि संज्ञायाम् इति इनिप्रत्ययेन निपातनात् सिद्धं साक्षीति पदम्।

चिरादिति। घनीभूतः शोकः चिरात् वेगारम्भी प्रसृतः तीव्रः विषरसः इव; कुतश्चित् संवेगात् चलितः शल्यस्य शकलः इव, हृन्मर्म्मणि रूढग्रन्थिः स्फुटितः व्रणः इव मां विकलयति संमूर्च्छयति च ॥ २६ ॥

अघनः घनः भूतः इति घनीभूतः निविड़त्वमापन्नः शोकः प्रियाविरहजन्यं दुःखं चिराद्विलम्बेन, वेगेन जवेन आरम्भः प्रक्रिया स विद्यते अस्य इति वेगारम्भी महता रयेण स्वशक्तिं प्रकटयन् प्रसृतः शरीरावयवेषु व्याप्तः तीव्रः अत्युग्रः विषरसः इव विषद्रवः इव शृङ्गारादौ विषेवीर्य्ये गुणे रागे द्रवे रसः कुतश्चिदपि संवेगात् कुतोऽपि-निमित्तवशात् सङ्घट्टनात् चलितः कम्पितः शल्यस्य अन्तःशरीरेप्रविष्टस्य इति भावः अस्त्रविशेषस्य शकलः खण्डः इव। भित्तं शकलखण्डे वा पुंसि इत्यमरः। हृन्मर्म्मणि हृदयादिजीवस्थाने रूढ़ः उत्पन्नः ग्रन्थिः यस्य स रूढग्रन्थिः सञ्जातः इत्यर्थः स्फुटितः विदीर्णः व्रणः ईर्म्मम् इव मां विकलयति विह्वलयति मूर्च्छयति च विलुप्तचैतन्यं करोति च। दुःसहशोकोदयात् अहं विह्वलीमूर्च्छामापद्ये इत्यर्थः। चिरपरिचितानां भावानां दर्शनेन पुरातनोऽपि सीतावियोगशोकः आर्द्रः नवीभवति इति भावः। शिखरिणीवृत्तम्। मालोपमालङ्कारः।

आङ् + रभ् + घञ् = आरम्भ। रभेरशब्लिटोरिति नुम्। सम् + विज् + घञ् = संवेग (सम्भ्रम, सञ्चलन)। रुह + क्त (active voice) = रूढ़। रोहति; ररोह; अरुहत्। स्फुट + क्त active voice = स्फुटित। स्फुटति; पुस्फोट; अस्फुटीत्। स्फोटति; पुस्फोट; अस्फोटीत्, अस्फुटत्।

हृदयस्य मर्म्म इति हृन्मर्म्म; हृदयस्य अतिकोमलोभागः हृदयमेव वा मर्म्म इति हृन्मर्म्म। तस्मिन्। मृ + मनिन् = मर्म्मन्। हन् + अप् = घन। मूर्त्तौ घन इति घनादेशः। अभूततद्भावे च्वि प्रत्ययः। अस्य च्वौ इति अकारस्थाने ईकारादेशः। विकलं करोति इति विकलयति तत्करोति तदाचष्टे इति णिच्। मूर्च्छधातोः णिच् मूर्च्छयति। शस्त्रोऽस्त्रियामीर्म्मव्रणः क्लीवे इत्यमरः।

तथापि इति। तथापि शोकोद्दीपने सत्यपि पूर्व्वसुहृदः पूर्व्वपरिचितान् तान्

भूमिप्रदेशान् अवश्यमेव विलोकयामि । अनवस्थित: अस्थिर: परिवर्त्तनशील: । भूमे: सन्निवेश: अवस्थानम् ।

पुरेति । पुरा यत्र सरितां स्रोत: अधुना तत्र पुलिनम् । क्षितिरुहाम् घनविरलभाव: विपर्य्यासं यात: । बहो: कालात् ( परमिति शेष: ) दृष्टम् इदं वनम् अपरमिव मन्ये । शैलानां निवेश: तदिदमिति बुद्धिं द्रढयति ॥ २७ ॥

पुरा प्राक् यत्र सरितां नदीनां स्रोतः अम्बुवेग: प्रवाह इत्यर्थ: आसीदिति शेष: अधुना इदानीं तत्र पुलिनम् तोयोत्थिततटम् । तोयोत्थितन्तु पुलिनं सैकतं सिकतामयमित्यमर: । क्षितौ मह्यां रोहन्ति ये ते क्षितिरुह: वृक्षा: तेषां घनविरलभाव: निविडप्रतनुभाव: निविडत्वं विरलत्वञ्च इत्यर्थ: विपर्य्यासं वैपरीत्यं यात: प्राप्त: । यत्र वृक्षा: निविडा: आसन् इदानीं तत्र ते विरला: सञ्जाता: । यत्र च विरला: इदानीं तत्र घनसन्निविष्टा: सवृक्षा: इत्यर्थ: । बहो: दीर्घात् कालात् परं दृष्टं आलोकितं वनमिदमपरमन्यं वनमिव मन्ये । शैलानां गिरीणां निवेश: अपरिवर्त्तितमवस्थानम् इदमरण्यं तत् पूर्व्वं दृष्टं वनमिति बुद्धिं ज्ञानं द्रढयति ; दृढ़ां करोति । तदेवेदं वनमिति निश्चयात्मकं ज्ञानं करोति इत्यर्थ: । वृत्त पूर्व्ववत् ।

क्षि + क्तिन् = क्षिति । क्षिति + रुह् + क्विप् = क्षितिरुह् । कालादित्यनन्तरार्थे पञ्चमी । दिग्देशकालवाचिभिरिति सूत्रम् परमिति शब्दस्य अध्याहारेण सङ्गतिं नेयम् । (दृह + क्त = दृढ़ । दृढ़: स्थूलबलयो: इति क्तस्येडभाव: । तस्य ढत्वम् । हस्य लोप: । इदितो नलोपश्च । दृंहित: दृंहितोऽन्य: । दृढां करोति इति द्रढ़यति । तत्करोति तदाचष्टे इति णिच् । तत: र ऋतो हलादेर्लघो: इति ऋकारस्य रशब्द आदेशो भवति ।

पृथुं मृदुं भृशंचैव कृशञ्च दृढ़मेव च ।
परिपूर्व्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥)

इति काशिका ।

इन्नेति । पञ्चवटीं परित्यज्य गन्तुं न शक्नोमि । यत: तां प्रति मे प्रबल: अनुराग: मां बलेन पञ्चवटीदर्शनाय प्रेरयतीव इत्युत्प्रेक्षा । [ सकरुणम् सशोकम् ] ।

यस्यामिति । यस्यां तया सह ते दिवसा: मया नीता: पुन: स्वे गृहे दीर्घाभि: यत्सम्बन्धिकथाभि: एव सततम् अस्थीयत । सम्प्रति नाशितप्रियतम: पाप एक: राम: ताम् पञ्चवटीम् अद्य कथं विलोकयतु, असम्भाव्य वा कथं गच्छतु ॥ २८ ॥

यस्यां पञ्चवट्यां तया सीतया सह मया ते पूर्व्वमनुभूता: इत्यर्थ: दिवसा: नीता: यापिता: स्वे गृहे अरण्यवासात् प्रतिनिवृत्य स्वीये सदने पुन: भूय: दीर्घाभि: दीर्घकालव्यापिनीभि: अस्या: सम्बन्धिन्य: कथा: इति यत्सम्बन्धिकथा: ताभि: यत्सम्बन्धि-

कथाभिः यां पञ्चवटीमधिकृत्य प्रवृत्तैः सुचिरकालव्यापिभिः संलापैः सततं निरन्तरं अस्थीयत आवाभ्यामितिशेषः। पञ्चवटीसम्बन्धी संलापः सततं सुदीर्घं क्रियमाणोऽपि आवयोः नवां नवामिव प्रीतिमकरोदित्यर्थः। सम्प्रति इदानीं नाशिता व्यापादिता प्रियतमा येन स नाशितप्रियतमः विसृष्टसीत. पापः नृशंसकर्म्मा रामः एकः एकाकी अद्य ताम् पञ्चवटीं कथं विलोकयतु, कथं द्रष्टुं शक्नुयादित्यर्थः असम्भाव्य, दर्शनादिना असत्कृत्य क्व वा गच्छतु अन्यतो व्रजतु। द्वयमपि दुष्करमिति भावः। अत्र विध्यर्थे लोट्। शार्दूलविक्रीड़ितं वृत्तम्। अस्थीयत इति तिष्ठतेः भावे लङ्। कथाभिरित्यत्र करणे तृतीया। सम्+भू+(णिच)+ल्यप्=सम्भाव्य।

এই জনস্থানারণ্যের প্রান্তসীমা কোন অংশে পক্ষিগণের কূজনাদিবর্জ্জিত ও নিস্তব্ধ আবার কোন অংশে শ্বাপদকুলের প্রচণ্ডনিনাদপূর্ণ ও স্বেচ্ছাসুপ্তগম্ভীরফণভুজগদিগের নিশ্বাসমারুতে প্রদীপ্ত দাবানলে পরিব্যাপ্ত। এই অরণ্যসীমার অভ্যন্তরস্থিত বিবরমধ্যে অত্যল্প জল বিদ্যমান রহিয়াছে; এবং ঐ সীমাভাগে তৃষ্ণাতুর কৃকলাসগুলি অজগরদিগের স্বেদধারা পান করিতেছে ॥ ৬ ॥

রাম। খরের ভূতপূর্ব্ববাসস্থান এই জনস্থান অবলোকন করিতেছি। এবং পূর্ব্ব-বৃত্তান্তগুলি যেন প্রত্যক্ষভাবে অনুভব করিতেছি ॥ ২৭ ॥

[ সকলদিকে দৃষ্টিপাত করিয়া ] বৈদেহী সাতিশয় উপবনপ্রিয় ছিলেন। এগুলি সেই কান্তারপ্রদেশ। ইহা অপেক্ষা আমার পক্ষে আর কি ভয়ানক হইতে পারে? [অশ্রু-বিসর্জ্জন করিয়া] "তোমার সহিত মধুগন্ধবিশিষ্ট অরণ্যে বাস করিব" এই বলিয়া সীতা কত না আনন্দিত হইতেন। হায় তাঁহার স্নেহ এইরূপই ছিল।

প্রিয়জন কোন উপকারাদি না করিলেও কেবলমাত্র সন্নিধিদ্বারা সুখোৎপাদন করিয়া দুঃখরাশি তিরোহিত করিয়া থাকে। যে যাহার প্রিয় সে তাহার পক্ষে কি এক অনির্ব্বচনীয় পদার্থ।

শম্বূক। এই দুর্দ্ধর্ষ অরণ্য প্রদেশগুলি অবলোকন করিয়া কোন ফল নাই। মদ-মত্ত ময়ূরের কণ্ঠের ন্যায় কোমলকান্তিবিশিষ্ট পর্য্যন্তপ্রদেশদ্বারা বেষ্টিত, অবিরল সন্নিবিষ্ট সান্দ্রনীলচ্ছায়তরুণতরুরাজিমণ্ডিত, অসম্ভ্রান্তভাবে বিচরণশীল বিবিধ মৃগযূথসনাথ প্রশান্ত গম্ভীর এই মধ্যমারণ্যপ্রদেশ অবলোকন করুন। এই অরণ্যভাগে মদমত্তশকুন্তকর্ত্তৃক অধিষ্ঠিত বেতসলতার পুষ্পসম্পাতে সুরভিশীতলনির্ম্মলসলিলা প্রচুরফলনিচয়ের পরিপক্কতা হেতু শ্যামবর্ণ জম্বূনিকুঞ্জে প্রতিঘাতবশতঃ শব্দায়মান প্রভূতস্রোতঃসম্পন্না নদীগুলি প্রবাহিত হইতেছে।

এবং—

এস্থানে গিরিগহ্বরশায়ী, তরুণ ভল্লূকদিগের থূৎকারনিক্ষেপসহকৃতকণ্ঠের ঘর্ঘরশব্দ গুহানিবদ্ধপ্রতিশব্দে দ্বিগুণিত হইয়া গম্ভীরভাব ধারণ করিতেছে। এবং হস্তিযূথকর্ত্তৃক ভগ্ন ও ইতস্ততঃ নিক্ষিপ্ত শল্লকীবৃক্ষের শাখাগ্রন্থির নির্য্যাসের শিশির, সুরভিকটুগন্ধ চতুর্দ্দিকে পরিব্যাপ্ত হইতেছে।

अवस्थितं यथा तथा स्फुलिङ्गरूपेण स्थितोऽनल: तृणदारुचयसंयोगेन प्रवृद्धो दीप्यमानशिखासमूहोद्गमात् प्राक् यथा बाहुल्येन धूमपटलमुद्गिरति तथा ममापि हृदये सुगूढ़ं स्थित: प्रियाशोक: पञ्चवटीदर्शनेन प्रवृद्धिं गत: जीवितं मे चेष्यन् प्राक् मूर्च्छां तनोति। कृष्णवर्णेन वस्तूनामावरकेण धूमराशिना सह चैतन्यविलोपिनोऽन्धकारप्रतिमस्य मोहस्य औपम्यम्।

दु:खम् अग्निरिव इति दु:खाग्नि: उत्पीड इवेति उपमालिङ्गात् उपमितिसमास:। ली + क्त (कर्त्तरि) = लीन। लीयते लिनाति; लिल्ये, ललौ; लिलाय, ललौ; अलेष्ट, अलास्त; अलैषीत्, अलासीत्। आङ् + वृ + लट् ति = आवृणोति। उत्पीड: समूह:।

दण्डकारण्ये वास इति दण्डकारण्यवास: तत्र प्रियसखी इति दण्डकारण्यवासप्रियसखी।

The forest of Dandaka is named after Danda, the youngest son of Ikshwaku. He outraged the modesty of the daughter of the sage Bhargava (or Sukra), Araya by name; whereupon the sage cursed him, in consequence of which his kingdom was reduced to a desert and a forest.

The Padmapurana says :—

यस्मात् स कृतवान् पापमीदृशं घोरसंमितम्।
तस्मात् प्राप्स्यति दुर्म्मेधा: पांशुवर्षमनुत्तमम्॥
कुराजा देशसंयुक्त: सभृत्यबलवाहन:।
पापकर्म्मसमाचारी वधं प्राप्स्यति दुर्म्मति:॥
समन्ताद्दशयोजनशते विषये चास्य दुर्म्मते:।
वर्षते पांशुवर्षेण महता पाकशासन:॥
सर्व्वसत्त्वानि यानीह जङ्गमस्थावराणि च।
सर्व्वेषां पांशुवर्षेण क्षय: क्षिप्रं भविष्यति॥
दण्डस्य विषयो यावत्तावदुपवनाश्रमं।
पांशुवर्षमिवाकस्मात् सप्तरात्रं भविष्यति॥

*   *   *   *

तस्य दण्डस्य विषयो विन्ध्यशैलस्य सानुषु।
शप्तो ह्यब्रह्मसा राम तस्मिन् वैधार्म्मिके कृते॥
तत: प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते॥

सीता। नेत्रे नीलोत्पले इव इति नेत्रनीलोत्पले, आमीलती नेत्रनीलोत्पले यस्य स आमीलन्नेत्रनीलोत्पलः ईषन्मुद्रितनयनेन्दीवरः। धरण्याः पृथिव्याः पृष्ठमुपरिभागः इति धरणीपृष्ठम् तस्मिन्। निरुत्साहम् शोकाभिभवात् उत्साहस्य अभावः सत्त्वभ्रंश इत्यर्थः तेन हेतुना निःसहं दुर्व्वलं सोढुमक्षमतया विवशं यथा तथा इत्यर्थः विपर्य्यस्तः पतितः इत्यर्थः। उत्साहस्य अभावः इति निरुत्साहम् अर्थाभावे अव्ययीभावः। यद्वा नास्ति उत्साहः यस्मिन् तद् यथा तथा निरुत्साहम्, तच्च तत् निःसहञ्चेति निरुत्साहनिःसहम्। कर्म्मधारयनिर्व्वाहः। सुपसुपेति वा समासः। न सहते सोढ़ुं शक्नोति तद् यथा तथा निःसहम्। सहे रच्। वि+परि+अस्+क्त (कर्म्मणि)—विपर्य्यस्त। अस्यति; आस; आस्थत्।

तमसा। त्वमिति। ननु कल्याणि, त्वमेव जगत्पतिं सञ्जीवय पाणिः ते हि प्रियस्पर्शः। तत्र एव भवः नियतः॥ १०॥

ननु भोः कल्याणि मङ्गलस्वभावे त्वमेव जगतः पतिं रामचन्द्रं सञ्जीवय मूर्च्छापनोदनेन प्रत्युज्जीवय। तव पाणिः हस्तः प्रियः प्रीतिकरः स्पर्शः यस्य सः प्रियस्पर्शः तवहस्तस्पर्शेन रामस्य निरतिशयसुखोदयो भविष्यति तदवश्यात्र संज्ञालाभो भविष्यति। तत्र तव पाणिस्पर्शे एव नान्यत्र इत्येवकारार्थः भवः रामस्य प्रत्युज्जीवनरूपं क्षेमं नियतः निश्चितः। तव पाणिस्पर्शेनैव अस्य चैतन्यसञ्चारः भवेत् अन्यैरुपायैस्तु स न सुकरः। नन्विति आमन्त्रणे अव्ययम्। प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु इत्यमरः। भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोरिति मेदिनी। कल्याणशब्दात् 'बह्वादिभ्यश्चेति ङीप्। प्रियस्पर्शः पक्षे स्पर्शप्रियः। नि+यम्+क्त (कर्म्मणि)—नियत।

सीता। रामसन्निधौ अनभ्यनुज्ञातगमनेन यदि किञ्चिदनिष्टमापतेत् तत् आपततु। तथाप्यहं भगवत्याः वाक्यमनुतिष्ठामि।

[ सास्रया अस्रं मुञ्चत्या स्पृश्यमानः परामृश्यमानः आह्लादेन आनन्देन उच्छ्वासः पुनः संज्ञोपलम्भः तेन सह वर्त्तमानः इति साह्लादोच्छ्वासः अस्रः कोणे कचे पुंसि क्लीवं नत्रुणि शोणिते इति मेदिनी।

सीता। त्रयाणां लोकानां समाहारः इति त्रिलोकी। समाहारद्विगुः। द्विगोः इति अदन्ताद्द्विगोर्ङीप्। त्रिलोकी एव इति त्रैलोक्यम्। स्वार्थे ष्यञ्। क्वचित् स्वार्थिकाः प्रकृतेर्लिङ्गवचनान्यतिवर्त्तन्ते इति क्लीवत्वम्। त्रैलोक्यस्य नाथः तस्य। त्रैलोक्यनाथस्य त्रिभुवनपतेः रामचन्द्रस्य।

रामः। प्रश्च्योतनमिति। हरिचन्दनपल्लवानां प्रश्च्योतनं नु, निष्पीडितेन्दुकरकन्दलजः सेकः नु आततजीवितमनःपरितर्पणः सञ्जीवनौषधिरसः हृदि प्रसिक्तः नु॥११॥

हरिचन्दनस्य देवतरोः पल्लवानां किसलयानां प्रश्च्योतनं क्षरितो रसः नु किम् मम हृदये प्रसिक्तः इति शेषः नु इति वितर्के।' पञ्चैते देवतरवः मन्दारः पारि-

आतक:। सन्ताप: कल्पहचत्र पुंसि वा हरिचन्दनमित्यमर:। इन्दी: चन्द्रस्य करा: किरणा: तेषां कन्दला: अङ्कुरा:, कन्दलं त्रिषु कपोलेऽप्युपरागे नवाङ्कुरे इति मेदिनी, निष्पीड़िता: मर्द्दिता: इन्दुकरकन्दला: तेभ्य: जायते इति निष्पीड़ितेन्दुकरकन्दलज: ; पश्चम्यां जनेर्ड: मर्द्दितसुधाकरांशुप्ररोहगलित: सेक: द्रुतकिरणसार: इत्यर्थ: किं मम हृदये निषिक्त: ; आतप्तं विरहतापात् सन्तप्तं यद्‌ जीवनं मनश्चितत्र तयी: परितर्पण: तापनाशन: सुखप्रदश्च सञ्जीव्यते अनया इति सञ्जीवनी सा चासौ ओषधिश्च इति सञ्जीवनौषधि:, कर्म्मधारये पूर्व्वपदस्य पुंवद्भाव:, तस्या: रस: द्रव: मम हृदि हृदये प्रसिक्त: धारया पातित: किमु। वसन्ततिलकं वृत्तम्। सर्व्वत्र नु वितर्के। सन्देहालङ्कार:।

श्चुतिरक्षरणे इति धातो: भौवादिकात् ल्युट् श्चोतनम्। श्चोतति ; चुश्चोत ; अश्चुतत्, अश्चोतीत्। निस्+पीड (चुरादि)+क्त (कर्म्मणि)=निष्पीडित। उनत्ति इति इन्दु:। उन्द+(उणादि) उ। उन्देरिच्चादे:। सिच्+घञ्= सेक। सिच्+क्त=सिक्त। परि+तृप् (णिच्)+ल्यु=परितर्पण।

The doubt expressed in the 2nd foot of the verse is based on a bold stretch of the imagination of the poet.

स्पर्श इति। नियतं पुरा परिचित: मनस: सञ्जीवन: परिमोहनश्च स एष स्पर्श:, य: सपदि सन्तापजां मूर्च्छां प्रतिहत्य आनन्देन पुन: जडतां तनोति ॥ १२ ॥

नियतं निश्चितम् पुरा पूर्व्वं परिचित: संस्तुत: मनस: चित्तस्य क्रदयोगलक्षणा कर्म्मणि षष्ठी। सञ्जीवन: समुच्छ्वासन: परिमोहन: आनन्दसन्दोहसमुत्पादनेन विवशताजननश्च स एव स्पर्श:नूनमयं परिचितपूर्व्व: तापोपशमन: सीताया: करस्पर्श:। य: स्पर्श: सपदि तत्क्षणे, स्पर्शक्षणे एव सन्तापजां शोकदावदाहजन्यां मूर्च्छां नष्टचेष्टतां प्रतिहत्य निरस्य निवार्य्य इति यावत् आनन्देन निरतिशयाह्लादविधानेन पुन: भूय: जड़तां हर्षजन्यां विह्वलतां तनोति विस्तारयति। मामानन्दपरवशं विह्वलेन्द्रियञ्च करोति इत्यर्थ:। वृत्तम् पूर्व्ववत्। कारणानुप्राणित: निश्चयाख्योऽलङ्कार:।

परि+चि+क्त (कर्म्मणि)=परिचित। नियतम्=surely, नि+यम्+ क्त (भावे)=नियत। सम्+जीव् (णिच्)+ल्यु=सञ्जीवन। परि+मुह (णिच्)+ल्यु=परिमोहन। क्रत्यच: इति णत्वम्। सम्+तप्+घञ्=सन्ताप। सन्ताप+जन्+ड=सन्तापज। प्रति+हन्+ल्यप्=प्रतिहत्य। मूर्च्छ+अ(भावे) =मूर्च्छा गुरोश्च हल: इति अप्रत्यय:। आङ्+नन्द (णिच्)+ल्युट्=आनन्दन। जड़स्य मूढ़स्य भाव: इति जड़ता।

सीता। [ साध्वसेन राम: प्रत्यभिज्ञातवान् इति भयेन उत्कम्प: ; तेन अङ्ग

वर्त्तमानं यथा तथा ससाध्वसीत्कम्पम् अपसृत्य, दूरं गत्वा ] यत् रामः इदानीमपि मयि म्रियते, ममस्पर्शं बहुमन्यते च तदेव मे प्रभूतं सौभाग्यम्।

रामः। वत्सलया स्नेहवत्या सीतादेव्या अभ्युपपन्नः अनुगृहीतः। मम ईदृशीं दशां विलोक्य स्नेहाक्रान्तहृदया सीता सुभगस्पर्शेन पाणिना मम गात्रं स्पृष्टवती किम् इत्यर्थः।

[ নেপথ্যে ]

অদ্য পঞ্চবটীদর্শনে প্রবলবেগে প্রজ্বলনোন্মুখ, হৃদয়াভ্যন্তরস্থিত দুঃখানলের ধূমরাশির ন্যায় মোহ আমাকে পূর্ব্বেই আচ্ছন্ন করিয়া ফেলিতেছে ॥ ৯ ॥

হা প্রিয়ে জানকি,

তমসা। [ স্বগত ] গুরুজনেরাও যাহা আশঙ্কা করিয়াছিলেন এ তাহাই ঘটিতেছে।

সীতা। [সমাশ্বস্ত হইয়া ] হায়! একি হইল!

[ পুনর্ব্বার নেপথ্যে ]

হা, দেবি, দণ্ডকারণ্যবাসপ্রিয়সখি, বিদেহরাজপুত্রি!

[ মূর্চ্ছিত হইলেন ]

সীতা। হায়, হায়, এই হতভাগিনীর উদ্দেশেই নয়ননীলোৎপল ঈষৎ মুদ্রিত করিয়া মূর্চ্ছিত হইলেন। হা কষ্ট, উৎসাহভঙ্গবশতঃ বিবশ হইয়া ধরণীপৃষ্ঠে পতিত হইলেন। ভগবতি, তমসে, রক্ষা করুন, রক্ষা করুন, আর্য্যপুত্রকে বাঁচান।

[ তমসার চরণে নিপতিত হইলেন ]

তমসা। হে কল্যাণি, তুমিই জগৎপতি রামচন্দ্রকে সঞ্জীবিত কর। তোমার হস্তের স্পর্শ ( তাঁহার ) অতি প্রিয়; ঐ স্পর্শেই তাঁহার সঞ্জীবনোপায় রহিয়াছে ॥ ১০ ॥

সীতা। যাহা হয় হউক। ভগবতী যাহা বলিতেছেন তাহাই করি। [ সসম্ভ্রমে নিক্রান্ত ]

[ ভূমিতে নিপতিত, সাশ্রুনয়না সীতাকর্ত্তৃক স্পৃশ্যমান, আহ্লাদবশতঃ পুনঃপ্রাপ্তচৈতন্য রামের প্রবেশ ]

সীতা। [ ঈষৎ হর্ষের সহিত স্বগত ] ত্রৈলোক্যপতির জীবন পুনরাগত হইল বোধ হইতেছে।

রাম। আঃ! একি?

হরিচন্দনের পল্লবের রস কি আমার হৃদয়ে কেহ ঢালিয়া দিল? অথবা ইন্দুকিরণাঙ্কুর নিষ্পীড়িত করিয়া তাহার দ্বারা আমার গাত্র নিষিক্ত করিল? অথবা সন্তপ্তজীবনও চিত্তের পরিতর্পণ সঞ্জীবনী ওষধির রস আমার হৃদয়ে প্রসিক্ত হইল ॥ ১১ ॥

চিত্তের সঞ্জীবন ও পরিমোহন এই স্পর্শ নিশ্চয়ই পূর্ব্বপরিচিত ( সীতার করস্পর্শ ) ইহা সদ্যঃ সন্তাপনিমিত্তক মূর্চ্ছা অপনোদন করিয়া আনন্দাতিশয়বিধানহেতু পুনর্ব্বার বিহ্বলতা সম্পাদন করিতেছে ॥ ১২ ॥

সীতা। [ভয়বশতঃ উৎকম্পের সহিত, দূরে অপসরণ করিয়া] এক্ষণে আমার পক্ষে ইহাই যথেষ্ট সৌভাগ্য।

রাম। [উপবিষ্ট হইয়া] স্নেহপরবশ সীতাদেবী আমার প্রতি অনুগ্রহ করেন নাই ত ? ]

[ *Behind the scenes.* ]

A fainting fit first comes upon and envelopes me like a mass of smoke of the fire of my grief lying concealed within, and about to break forth violently into flames at the sight of Panchavati. (9)

Alas! My beloved Janaki!

*Tamasa* :—[ *To herself.* ] This is what was apprehended by his respectable superiors.

*Sita* :—[ *Recovering* ] Alas! How is this!

[ *Again behind the scenes.* ]

Alas! My queen! my beloved companion during my residence in the forest of Dandaka! Princess of Videha! [*Falls into a swoon*]

*Sita* :—Oh! woe! woe! calling out to me, a miserable wretch that I am, he has indeed fallen into a swoon, with his blue lotus-like eyes almost closed. Alas! Alas! he is stretched on the surface of the ground, devoid of energy, and completely exhausted. Revered Tamasa, save, O, save my husband, bring him to life again. [ *Falls at her feet* ].

*Tamasa* :—You yourself, O, auspicious one, bring the lord of the world to life again. Your hand has indeed a delightful touch; and thereon does the restoration of him to life certainly depend. (10)

*Sita* :—Come what may, I will do as the revered dame says. [ *Exit in haste.* ]

[ *Then enter Rama lying on the ground, being touched by Sita in tears, and reviving and cheering* ]

*Sita* :—[ *To herself, slightly rejoicing.* ] I think the life of the lord of the three worlds has come back.

*Rama* :—Oh joy, what can it be! Is it the juice of the leaves of the celestial Harichandana tree? or is it a sprinkling with the juice of the sprouts of the rays of the moon squeezed out, or is this

the juice of the life-restoring herb, embalming my scorched life and soul, that is sprinkled over my heart ? (11)

This is surely the same, old, familiar touch, which revives and also overpowers the mind ; and which now removing instantaneously my swoon brought on by the anguish of sorrow, brings on again a stupor by giving rise to excessive joy. (12)

*Sita* :—[*Withdrawing with tremor and fear.*] This much is quite enough for me now.

*Rama* :—[*Sitting up.*] Can it be that I have been favoured by my affectionate queen Sita ?

सीता। मार्गिष्यति अन्विष्यति।

सीता। न अभ्यनुज्ञातम् न अनुमोदितम् इति अनभ्यनुज्ञातम् तथोक्तं सन्निधान समीपोपगमनम् इति अनभ्यनुज्ञातसन्निधानम् तेन हेतुना।

तमसा। गङ्गादेवीप्रदत्तवरस्य शक्त्या वनदेवता अपि त्वां द्रष्टुं न शक्ष्यन्ति, कुत: पुनर्महाराजो राम:। न दृश्या इति अदृश्या। दृश् + क्यप (कर्मणि) ऋदुपधात् चाक्लृपि चृते: इति क्यप्।

सीता। [मन्युना प्रणयाभिमानेन गद्गद: वैस्वर्य्यम् कण्ठस्वरस्य जडता इत्यर्थ: तेन सह वर्त्तमानं यथा तथा समन्युगद्गदम्। मन्युर्दैन्ये क्रतौ क्रुधि। मदसम्भ्रमपीड़ाद्यै: वैस्वर्य्यं गद्गदं विदु:। गद्गद: स्वरभङ्ग:।]

असदृशम् अयोग्यम्। वज्रमयी पाषाणघटिता निष्ठुरा इत्यर्थ:। अन्यानि जन्मानि इति जन्मान्तराणि। मयूरव्यंसकादयश्चेति समास:। तेषु। असम्भावितं अघटनीयमित्यर्थ: अतएव दुर्ल्लभं दुरवाप दर्शनं यस्य तस्य असम्भावितदुर्ल्लभदर्शनस्य अन्यस्मिन् अपि जन्मनि यस्य पुनर्दर्शनलाभ: आशंसाया अविषयीभूत: तस्य। मयि एवं स्नेह परायणस्य मामुच्चैरारटत: अस्य उपरि कथं निरनुक्रोशा निर्द्दया भविष्यामि नास्ति अनुक्रोश: दया यस्या: सा निरनुक्रोशा। अनुक्रोश: कृपा शकं दया च करुणा घृणा इति हलायुध:।

सीता। नास्ति कारणं हेतु: यस्मिन् तत् यथा तथा निष्कारणम्। निष्कारणं परित्यागी इति निष्कारणपरित्यागी। सुप्सुपेति समास:। परि + त्यज् + घिणुन्। तस्य अस्य अतर्कितोपनतेन सुव्यक्तविक्लवत्वेन च ईदृशेन दर्शनेन मम हृदयस्य चेतस. कीदृश: अनुवन्ध: प्रवृत्ति: अवस्था इत्यर्थ: तमहं सम्यक् अवधारयितुं न शक्नोमि।

तमसा। तटस्थमिति। तव हृदयम् नैराश्यात् तटस्थं अपिच विप्रियवशात् कलुषम्, दीर्घे अस्मिन् वियोगे झटिति घटनोत्तम्भितम् इव, सौजन्यात् प्रसन्न दयितकरुणै: गाढ़करुणम्, अस्मिन् क्षणे प्रेमणा द्रवीभूतम् इव।

तव हृदयं नैराश्यात् पुनःसमागमाशाविरहात् तटस्थम् उदासीनम् आसीत् रत्यादिभावविशेषेण अस्पृष्टमिवाभूत्। अपिच किञ्च विप्रियस्य निष्कारणपरित्यागरूपस्य व्यलीकस्य वशात् कलुषं क्रोधावेगक्षुभितम्, सकोपमित्यर्थः आसीत्। ततः दीर्घे द्वादशवर्षव्यापिनि अस्मिन् वियोगे जाते, झटिति द्राक् घटनेन घटनया वा अतर्कितोपपन्नेन पुनःसन्दर्शनेन इत्यर्थः उत्तम्भितं विस्मयात् स्तिमितं निश्चलमिव संवृत्तम्। सौजन्यात् निष्कारणपरित्यागिनोऽपि भर्त्तुः सुजनतादर्शनेन अनाविलप्रेम्णः प्रसादात् हेतोः तवापि हृदयं प्रसन्नम् अपगतकालुष्यं सत् विमलं जातम्; किञ्च दयितस्य वल्लभस्य करुणैः शोकैः गाढ़ा निविडा करुणा दया समवेदना इत्यर्थः यस्य तत् गाढ़करुणम् प्रवलया परदुःखप्रहाणेच्छया संसृष्टम्। एवं क्रमेण उद्यद्भिर्विलयं गच्छद्भिश्च विविधैर्भावैः तव स्पृष्टं हृदय अस्मिन् क्षणे इदानीं प्रेम्णा भर्त्तरि गाढ़ानुरागेण द्रवीभूतं विलीनम्, अनुरागपूरेण क्षुभितं सत् तव हृदय गलितमिव। इत्युत्प्रेक्षा। शिखरिणीवृत्तम्।

निर्गता आशा यस्मात् तत् निराशम्। तस्य भावः नैराश्यम्। निराश + ष्यञ् = नैराश्य। गुणवचनादित्वात् ष्यञ्। वियोगे इत्यत्र भावे सप्तमी झटितीत्यव्ययम्। घटयतेः युच् घटना। यद्वा घटधातोः ल्युट् घटनम्। उद् + स्तन्भ् (णिच्) + क्त (कर्म्मणि) = उत्तम्भित। उदः स्थास्तन्भोः इति सलोपः। सुजनस्य भावः इति सौजन्यम्। सुजन + ष्यञ्। अद्रवः द्रवः भूतम्। इति द्रवीभूतम् अभूततद्भावे च्विः। प्र + सद् + क्त (कर्त्तरि) = प्रसन्न। प्रिय + इमनिच् = प्रेमन्। प्रेम्णा इत्यत्र हेतौ तृतीया।

*N. B.*—Notice how skilfully the poet describes the various emotions rising and disappearing in quick succession in the heart of Sita and how they soften down her mind and prepare the way for her love for Rama to reassert itself.

स्नेहार्द्रशीतलः ते स्पर्शः मूर्त्तः प्रसाद इव अद्यापि माम् आनन्दयति हे नन्दिनि, त्वं पुनः क्व असि ॥ १४ ॥

स्नेहेन अनुरागेण आर्द्रः सिक्तः शीतलः तापोपशमनः ते तव स्पर्शः मूर्त्तः शरीरी प्रसादः अनुग्रहः इव अद्यापि इदानीमपि अतीतेषु अपि बहुषु वर्षेषु माम् आनन्दयति प्रीणयति; हे नन्दिनि आनन्दविधायिनि त्वं पुनः क्व कुत्र असि वर्त्तसे। तवायमनुग्रहः स्पर्शरूपेण अनुभूयते; त्वं पुन र्न दृश्यसे। उत्प्रेक्षालङ्कारः। मूर्च्छ + क्त = मूर्त्त। नन्दयति या सा नन्दिनी ग्रह्यादित्वात् णिनिः।

सीता। स्नेहस्य सम्भारः राशिः इति स्नेहसम्भारः अगाधं अप्रमेयं यथा स्यात् तथा दर्शितः प्रकटितः स्नेहसम्भारः यैः येषु वा ते अगाधदर्शितस्नेहसम्भाराः।

उल्लापा: विलापवाक्यानि। येषां प्रत्ययेन येषु विश्वासवशात्। शल्यं जातमस्य इति शल्यित: व्रणित: इत्यर्थ:। निष्कारणेन निर्निमित्तेन परित्यागेन वर्ज्जनेन शल्यित: इति निष्कारणपरित्यागशल्यित: जन्मलाभ: जीवनमित्यर्थ:। घृणितं क्लेशप्रायमपि जीवनं बहुमतम् आदृतम्। उपेक्षितुं न शक्यते।

राम:। अत्र प्रियतमा सीता कथमागच्छेत्। सङ्कल्पस्य सीताविषयकस्य मनोव्यापारस्य सङ्कल्प: कर्म्म मानसमित्यमर:, अभ्यास: पुन: पुनरावर्त्तनम् तेन यत् पाटवम् पटुत्वम् अनायासोत्पादनैपुण्यमित्यर्थ:, तदेव उपादानं समवायिकारणं यस्य स सङ्कल्पाभ्यासपाटवोपादान:। पुन: पुन सीताविषयकचिन्ताया: परिशीलनेन एवंविध: भ्रम: अनायासेन समुत्पन्न: इत्यर्थ:।

सीता। अभियोक्ष्यते वत्सस्य समुद्धारार्थम् इम वारणराज क: अभियास्यति आक्रमिष्यति इत्यर्थ:। स्वराद्यन्तोपसर्गादिति आत्मनेपदम् अभिपूर्व्व: युजि रभियाने आक्रमणरूपेऽर्थे वर्त्तते। अभियोग: आर्त्ताभिभव:।

राम:। वधू पत्नी, वधूर्जाया स्नुषा च; द्वितीया यस्य स वधूद्वितीय: वधूसहचर:।

वासन्ती। त्वर्य्यतामिति त्वरधातो: भावे लोट्। त्वरते; तत्वरे, अत्वरिष्ट। जटायुना गृध्रराजेन अध्युषितं शिखरं शृङ्गं इति जटायुशिखरम् तस्य दक्षिणेन दक्षिणदिकस्थितेन सीताया: तीर्थं जलावतार: इति सीतातीर्थम् तेन गोदावरीं नदीमवतीर्य्य अवतह्य गोदावरीजलप्रदेशे सन्निकृष्टो भूत्वा देव्या: सीताया: पुत्रं सम्भावयतु। साहाय्यदानेन अनुगृह्णातु। येन जलावतारेण सीता गोदावरीमवगाहते स्म स सीतातीर्थमिति प्रसिद्धिं गत:। योनौ जलावतारेच मन्त्राद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि इति हलायुध:। जटायुशिखरिदक्षिणेन इति पाठे जटायुना शिखरस्य समाश्रयात् शिखरिण: पर्व्वतस्यापि जटायुशिखरी इति संज्ञा जाता।

সীতা। হায়, হায়, আর্য্যপুত্র কি আমাকে অন্বেষণ করিবেন।

রাম। আচ্ছা, অনুসন্ধান করিয়া দেখি।

সীতা। ভগবতি তমসে, আমরা দূরে যাই; যদি ইনি আমাকে দেখিতে পান, তাহা হইলে তাঁহার আদেশ ব্যতীত সমীপে আগমনের নিমিত্ত মহারাজ আমার উপরি অধিকতর কুপিত হইবেন।

তমসা। বৎসে, তুমি ভাগীরথীর বরপ্রভাবে বনদেবতাদিগেরও অদৃশ্য।

সীতা। হাঁ, ইহা বটে।

রাম। হা প্রিয়ে, জানকি।

সীতা। [প্রণয়াভিমানবশতঃ গদ্‌গদস্বরে] আর্য্যপুত্র, এরূপ বাক্য এ অবস্থার উপযুক্ত নহে। [অশ্রুবিসর্জ্জন করিয়া] অথবা জন্মান্তরেও যাঁহার দর্শনলাভ অসম্ভব,

এই হতভাগিনীর প্রতি বৎসল হইয়া যিনি এইরূপ বিলাপ করিতেছেন, সেই স্বামীর প্রতি কেন বজ্রময়ীর ন্যায় নির্দ্দয় হইব। আমি ইঁহার হৃদয় জানি, ইনিও আমার হৃদয় জানেন।

রাম। [সকলদিকে দৃষ্টিপাত করিয়া নির্ব্বেদের সহিত] হায়, এখানে কেহই নাই।

সীতা। ভগবতি তমসে, সেইরূপে বিনা কারণে পরিত্যাগকারী ইঁহার ঈদৃশ এই অবস্থা দেখিয়া আমার হৃদয়ের যে কি অবস্থা তাহা বুঝিতে পারিতেছি না।

তমসা। আমি বুঝিতে পারিতেছি, বৎসে, আমি বুঝিতে পারিতেছি। তোমার হৃদয় নৈরাশ্যহেতু উদাসীন ছিল, এবং অনিষ্টাচরণবশতঃ কোপকলুষও ছিল; এই দীর্ঘ বিরহাবস্থায় হঠাৎ সন্দর্শন ঘটায় বিস্ময়ে নিশ্চল ও স্তিমিত হইয়া পড়িল। তদনন্তর স্বামীর সৌজন্যদর্শনে প্রসন্ন হইল, এবং স্বামীর শোকসন্দর্শনে গাঢ় করুণায় পূর্ণ হইয়া উচ্ছলিতপ্রেমের আবেগে এক্ষণে যেন দ্রবীভূত হইয়াছে॥ ১৩॥

রাম। দেবি, তোমার এই স্নেহার্দ্রশীতল স্পর্শ মূর্ত্তিমান্ অনুগ্রহের ন্যায় আমাকে এখনও আহ্লাদিত করিতেছে; কিন্তু হে আনন্দদায়িনি, তুমি কোথায়?॥ ১৪॥

সীতা। অগাধস্নেহরাশির পরিচায়ক, আনন্দস্রাবী, আর্য্যপুত্রের এই বিলাপবচন গুলি শ্রবণ করিলাম; এই বাক্যে প্রত্যয়বশতঃ, আমার জন্মলাভ অকারণে পরিত্যাগ হেতু শল্যবিদ্ধ ও যন্ত্রণাময় হইলেও বহুমানের পাত্র।

রাম। অথবা প্রিয়তমা এখানে কিরূপে আসিবেন? নিশ্চয়ই পুনঃ পুনঃ কল্পনার পরিশীলন জন্য পটুতাহেতু রামের এইরূপ ভ্রম সমুৎপন্ন হইয়াছে।

[নেপথ্যে]

কি বিপদ্। কি বিপদ্।

[যে করিশাবক সীতাদেবীর স্বহস্তধৃত ইত্যাদি শ্লোকের পূর্ব্বার্দ্ধ পঠিত হইল]

রাম। [সশোক ও উৎকণ্ঠিত ভাবে] সেই বৎসের কি হইয়াছে?

[পুনর্ব্বার নেপথ্যে]

বধূর সহিত জলবিহারনিরত ইত্যাদি উত্তরার্দ্ধ পঠিত হইল।

সীতা। কে এক্ষণে দুষ্টদ্বিরদপতিকে আক্রমণ করিবে?

রাম। বধূর সহিত জলকেলিপরায়ণ, প্রিয়ার সেই পুত্রকে অভিভব করিতে উদ্যত সেই দুরাত্মা কোথায়? [উত্থান করিলেন]

[প্রবেশ করিয়া]

বাসন্তী। [সসম্ভ্রমে] এ কি? দেব রঘুপতি।

সীতা। এ কি? আমার প্রিয়সখী বাসন্তী।

বাসন্তী। দেব আপনার জয় হউক, আপনার জয় হউক।

রাম। [অভিনিবেশ সহকারে অবলোকন করিয়া] এ কি? দেবীর প্রিয়সখী বাসন্তী!

বাসন্তী। দেব, সত্বর হউন, সত্বর হউন। এখান হইতে জটায়ু শিখরের দক্ষিণ-দিক্স্থিত সীতাতীর্থ দিয়া গোদাবরীতে অবতরণপূর্ব্বক দেবীর পুত্রকে পরিত্রাণ করুন।

সীতা। হা তাত, জটায়ু, আপনার অভাবে আজ জনস্থান শূন্য।

*Sita* :—O ! dear ! dear ! Will my husband seek me ?

*Rama* :—Well ; let me see.

*Sita* :—Revered Tamasa, let us retire. If, however, he sees me, then he will be very angry with me for having thus approached him without permission.

*Tamasa* :—Dear child, through the power of the boon granted by Bhagirathi, you have become invisible even to the deities of the wood.

*Sita* :—O Yes, I remember it, it is so.

*Rama* :—O my dear Janaki !

*Sita* :—[*With choked or stifled voice on account of anger due to wounded feelings.*] My lord, these words are inconsistent with what has taken place ; [ *with tears* ] or rather, why should I with an adamantine heart be pitiless towards my husband whose sight again it would be impossible to attain even in other births, and who is uttering these words being affectionately disposed towards me, an unfortunate wretch that I am ? I know his heart, and he knows mine.

*Rama* :—[ *Looking all around, with despondency.* ] Alas ! There is none here !

*Sita* :—Venerable Tamasa, I do not understand what is the state of my feelings on seeing him in such a plight, though he abandoned me in that manner without any cause.

*Tamasa* :—I understand it, my child, I understand it. Indifferent on account of despair, and also agitated and perturbed by reason of the injury (received), then stupefied (with surprise) on account of the sudden meeting after a long separation, your heart has become calm and free from agitation at the goodness (of your husband), and filled with deep pathos by the affliction of your husband, and is now melting, as it were, with love. (13)

*Rama* :—My Queen,—This cool touch of yours, drenched with affection, gladdens me even now like your graciousness incarnate ; but where are you, the source of my delight ? (14)

*Sita* :—I hear the same utterances of my husband, manifesting an unfathomable depth of affection and pouring a flood of joy,

in virtue of my faith in which this existence of mine, though thorny and full of torture on account of this abandonment without cause, is dear to me.

*Rama* :—Or whence could my beloved be here ? surely this is a delusion of Rama caused by the readiness due to constant indulgence in thoughts and reveries (about her.)

[ *Behind the scenes.*]

What a calamity ! what a calamity ! [ *The first half of the verse purporting the same young elephant...is read.*]

*Rama* :—[ *With pathos and eagerness.*] what is the matter with that child [of ours] !

[ *Again behind the scenes* ].

[ *The second half of the same verse purporting while sporting in the water with his consort—is read.*]

*Sita* :—Who will now attack (that wild elephant) ?

*Rama* :—Where is that mischievous wretch who attacks the child of my beloved, while he is in the company of his mate ?

[ *Rises up.* ]

[ *Enter Vasanti.* ]

*Vasanti* :—[ *In flurry.* ] How ! His Majesty Rama !

*Sita* :—How ! My dear friend Vasanti !

*Vasanti* :—Victory, victory to your lordship.

*Rama* :—[ *Marking carefully* ] How ! Vasanti, the dear friend of my queen !

*Vasanti* :—Quick, quick ! Your Majesty, descending down to the Godavari by the bathing ghat of Sita which is to the right of the peak of Jatayu, let your majesty help the fondling of the queen.

*Sita* :—Alas ! father Jatayu, without you Janasthana is dreary and lonely.

राम:। हृदयं मर्म्म जीवस्थानं छिन्दन्ति भिन्दन्ति इति हृदयमर्म्मच्छिद: यद्वा हृदयस्य मर्म्माणि छिन्दन्ति इति हृदयमर्म्मच्छिद: छिदे: क्विप्। कथाया: उद्घाता: उपन्यासा: इति कथोद्घाता: जटायुशिखरमित्यनेन शकुन्तराजस्य जटायो: सीतार्थं प्राणपरित्याग: सीताहरणञ्च इत्यादय: पूर्व्ववृत्तान्ता: स्मृतावारूढा: महतीं वेदनां

जनयन्ति इत्यर्थः। स्यादभ्यादानमुद्‌घात आरम्भः इत्यमरः। उद् + हन् + घञ् = उद्‌घात।

तमसा। ऐश्वर्य्यं प्रभावः इत्यर्थः। सर्व्वदेवताभ्यः इत्यत्र पञ्चमी विभक्ति इति पञ्चमी आशङ्कसे संशयाकुला भवसि। कुतः इयं विचिकित्सा इत्यर्थः।

वासन्ती मोदस्व हृष्य, आनन्द अनुभव। मुद् + लोट स्व = मोदस्व। मोदते; मुमुदे; अमोदिष्ट। मुदितः। विजयः अस्य अस्ति इति विजयी तेन। मत्वर्थीयः इनिः। विजयताम् इति विपराभ्यां जे रित्यात्मनेपदम्।

रामः। दिष्ट्येति तृतीयान्त प्रतिरूपकमव्ययम्।

येनेति। हे सुतनु, उद्‌गच्छद्विसकिसलयस्निग्धदन्ताङ्कुरेण येन ते कर्णपूरात् लवलीपल्लवः व्याकृष्टः सः अयं तव पुत्रः मदमुचां वारणानां विजेता तरुणे वयसि यत् कल्याणं तस्य भाजनं जातः॥ १५॥

सु शोभना तनूः यस्याः सा सुतनूः तत्सम्बुद्धौ सुतनु नदीत्वात् ह्रस्वः। स्त्रियां मूर्त्तिस्तनुस्तनूः इत्यमरः, विसस्य मृणालस्य किसलयानि इति विसकिसलयानि तद्‌वत् स्निग्धाः इति विसकिसलयस्निग्धा उपमानानि सामान्यवचनैरिति समासः। उद्‌गच्छन्तः आविर्भवन्तः विसकिसलयस्निग्धाः दन्ताङ्कुराः दशनप्ररोहाः यस्य स उद्‌गच्छद्विसकिसलयस्निग्धदन्ताङ्कुरः, तेन उन्मीलन्मृणालाङ्कुरकोमलधवलदशनप्ररोहेण येन करिशावकेन ते तव कर्णपूरात् कर्णभूषणात् लवलीलताविशेषः तस्याः पल्लवः इति लवलीपल्लवः कर्णावतंसीकृतं लवलीकिसलयम् इत्यर्थः अवयवावयविभावकल्पनया अपादानत्वनिर्व्वाहः, कर्णमूलादितिपाठे कर्णान्तिकात् भूषणीकृतः लवलीपल्लवः इत्यर्थः, व्याकृष्टः लौल्यात् शुण्डाग्रेण भक्षणार्थं गृहीतः, सः अयं तव पुत्रः पुत्रकृतकः तरुणी वारणः मदं दानवारि मुञ्चन्ति ये ते मदमुचः मदस्राविणः, मुञ्चतेः क्विप्, तेषां मदमुचां मदमत्तानां दुर्ज्जयानामितिभावः वारणानां मातङ्गानां विजेता अभिभविता तरुणे वयसि यौवने यत् कल्याणं अशेषमङ्गलसाधनत्वात् सर्व्वथा एषणीयमित्यर्थः बलशालित्वमिति तात्पर्य्यम्, तस्य भाजनमास्पदं पात्रमिति यावत् जातः संवृत्तः। महाबलोऽयं जातः सर्व्वथा अभिनन्दनीय इति भावः। मन्दाक्रान्ता वृत्तम्।

वि + जि + तृच् = विजेतृ। वारणानाम् इति कृद्‌योगलक्षणा कर्म्मणि षष्ठी। वारयन्ति परबलानि इति वारणाः नन्द्यादित्वात् ल्युः। वि + आङ् + कृष् + क्त (कर्म्मणि) = व्याकृष्ट। भाजनमित्यजहल्लिङ्गम्। अतः लिङ्गस्य स्वातन्त्र्यम्। भाजनं योग्यपात्रयोरिति मेदिनी। अजति गच्छति इति वयः। अज् + असुन् = अजेर्वीभावः।

सीता। सौम्यं मधुरं दर्शनं आकृतिरित्यर्थः यस्याः सा सौम्यदर्शना मधुराकृतिः तया अनया करिण्या सह अवियुक्तः मिलितः भवतु। Herself keenly feeling the pangs of separation, Sita does not wish that other creatures should feel the same.

रामः। कान्तायाः पत्न्याः अनुवृत्तिः अनुवर्त्तनम् चित्ततोषणम् इत्यर्थः तत्र विषये चातुर्य्यम् नैपुण्य वैचक्षण्यमित्यर्थः शिक्षितम्। चतुरस्य भावः चातुर्य्यम्। चतुर + ष्यञ्। चत् + उरच् = चतुर। मन्दिवाशिमथिचतिचङ्क्यङ्किभ्यः उरच्।

लीलेति। यत् स्नेहात् (इति सर्व्वेषामन्वयः) लीलोत्खातमृणालकाण्ड-कवलच्छेदेषु पुष्यत्पुष्करवासितस्य पयसः गण्डूषसंक्रान्तयः सम्पादिताः, शीकरिणा करेण सेकः कामं विहितः विरामे पुनः अनरालनाललनलिनीपत्रातपत्रं धृतम् ॥१६॥

यत् यस्मात् स्नेहात् प्रियायां अनुरागातिशयात् हेतोः लीलया क्रीडारसेन उत्खाताः उन्मूलिताः उत्पाटिता इति यावत् मृणालानां बिसानां काण्डाः स्तम्बाः तेषां कवलाः ग्रासाः तएव वा कवला इति लीलोत्खातमृणालकाण्डकवलाः ग्रासस्तुकवलः पुमानित्यमरः। तेषां छेदेषु सत्सु अवसाने इत्यर्थः मृणालस्तम्बकवलदानादनन्तरमित्यर्थः भावे सप्तमी यद्वा मृणालकाण्डकवलानां छेदेषु खण्डेषु सच्छिद्रेषु भक्षणार्थं दत्तेषु मृणालखण्डेषु अधिकरणे सप्तमी पुष्यन्ति प्रस्फुटितानि पुष्कराणि पद्मानि, पुष्करं खेऽम्बुपद्मयोरिति मेदिनी, तैः वासितस्य सुरभीकृतस्य पयसः जलस्य गण्डूषसंक्रान्तयः गण्डूषस्य यावता परिमाणेन मुखपूरणं भवति तत्परिमाणस्य गण्डूषो मुखपूरणमिति हलायुधः। सङ्क्रान्तयः सङ्क्रमणानि सञ्चाराः सम्पादिताः कृताः। शीकराः क्षुद्राः जलकणाः विद्यन्ते यस्मिन् तेन शीकरिणा जलकणवर्षिणा करेण शुण्डादण्डेन सेकः कामं पर्य्याप्तं यथा तथा विहितः कृतः, प्रियायाः तापशान्तये सर्व्वगात्रेषु जलकणाः करेण अभिवृष्टाः, एतेन धारायन्त्रविमुक्तपयःकणस्नानसमाधिर्व्यज्यते। विरामे पयः कण-सेकावसाने पुनः भूयोऽपि तापोपशमाय अनरालम् अवक्रं ऋजु इति यावत् नालं दण्डो यस्य तत् अनरालनालम् ऋजुदण्डं नलिनीपत्रं पद्मपत्रं तदेव आतपत्रम् छत्रं धृतम् करिण्याः मूर्द्धोपरि विततम्। अतः प्रियाचित्तानुरञ्जनमनेन शिक्षितम् इति पूर्व्वेण अन्वयः। शार्द्दूलविक्रीड़ितं वृत्तम्।

उद् + खन् + क्त (कर्म्मणि) = उत्खात। खनति ; चखान ; अखनीत्

........ + ल्यप् = उत्खाय। खनते ; चख्ने ; अखानीत् अखनिष्ट

काण्डोऽस्त्रीदण्डवाणार्व्ववर्गावसरवारिषु इत्यमरः।

पुष् + शतृ = पुष्यत्। पुष्यति। वासयतेः चौरादिकात् कर्म्मणि क्तः क्लीवे वासितम्। सम् + क्रम् + क्तिन् = सङ्क्रान्ति। अरालं वृजिनं जिह्मम् ऊर्म्मिमत्

कुञ्चितं नतम्। आविद्धं कुटिल भुग्नं वेल्लितं वक्रमित्यपि इत्यमरः। आतपात् त्रायते यत् यत् आतपत्रम्। आतप + त्रै + क = आतपत्र।

सीता। एतावता एतत्परिमाणेन कालेन समयेन, एभिर्वर्षैरित्यर्थः। अपवर्गे तृतीया। कीदृशी जातौ तयोर्वयोवस्था कीदृशी इत्यर्थः।

सीता। निरन्तरम् अविरतम्। नास्ति अन्तरमवकाशः यस्मिन् तत। अत्यन्त-संयोगे द्वितीया। क्रियाविशेषणे वा द्वितीया। आर्य्यपुत्रेण स्वामिना विरहः वियोगः इति आर्य्यपुत्रविरहः। पुत्राभ्यां विरहः इति पुत्रविरहः। प्रतिकूलभाग्यवशात् पत्या पुत्राभ्यां च समं युगपदेव वियोगः।

तमसा। भवितव्यस्य भावः इति भवितव्यता भावानामवश्यम्भाविता। कृत्यल्युटो बहुलम् इति भवतेः कर्त्तरि तव्यप्रत्ययः। भवितव्यम् अवश्यम्भावि वस्तु।

सीता। प्रसूतं प्रसवः अस्ति अस्याः इति प्रसूता। अर्श आदित्वादच्। यद्वा विवक्षया अकर्म्मकत्वात् कर्त्तरि क्तः स्त्रियां टाप् प्रसूता। मया इति गम्यमानसाधन-क्रियापेक्षया करणत्वात् तृतीया। ईषत् मनाक् विरलैः कोमलैः सुकुमारैः धवलैः कुन्दकोरकशुभ्रैः दशनैः दन्तैः उज्ज्वलौ द्योतमानौ अनियतरुदितस्मित वशादितिभावः कपोलौ गण्डौ यस्मिन् तत् ईषदविरलकोमलधवलदशनोज्ज्वलकपोलम् ईषदनिविड-सुकुमारशुभ्रदन्तोद्द्योतमानगण्डम्। काकली सूक्ष्मः कलः काकली तु कले सूक्ष्मे इत्यमर। ईषत् कलः इति काकली। कोरीषदर्थे इति कादेशः। गौरादित्वात् ङीप। कु + कल + ङीप् = काकली, काकलीच विहसितं च ते काकलीविहसिते; अनुबद्धे निरन्तरं प्रसक्ते मुग्धे मनोहरे काकलीविहसिते यस्मिन् तत् अनुबद्धमुग्धकाकली-विहसितम् अनारतप्रसक्तेषत्कलहास्यमुखरमधरम्, निबद्धाः संयताः काकशिखण्डकाः काकपक्षाः यत्र तत् निबद्धकाकशिखण्डकम् संयतकाकपक्षधरम्, अमले विशुद्धे मुखपुण्डरीके, मुखपद्मे तयोः युगलं द्वन्द्वम् इति अमलमुखपुण्डरीकयुगलम्, प्रोज्ज्वलाननकमलद्वयम् आर्य्यपुत्रेण यतः न चुम्बितम् अतः मे प्रसवक्लेशः विफलः जातः इत्यर्थः। उक्तम् च क्लेशः फलेन हि पुनर्नवतां विधत्ते इति। मुखे पुण्डरीके इव इति मुखपुण्डरीके। उपमित व्याघ्रादिभिरिति समासः। शिखण्डशब्देनैव इष्टसिद्धौ काकशिखण्डक इति प्रयोगे काकशब्दस्य निरर्थकत्वम्। काकपक्ष शिखण्डकः इत्यमरः। अनु + बन्ध + क्त (कर्म्मणि) = अनुबद्ध। बध्नाति; बबन्ध; अभान्त्सीत्। वि + हस् + क्त (भावे) = विहसित।

तमसा। देवतानां प्रसादात् अनुग्रहेण अस्तु परिचुम्बितं भवतु इति आशिषि लोट्।

सीता। अपत्ययोः पुत्रयोः संस्मरणेन आध्यानेन, उच्छ्वसितौ स्फीतौ प्रस्नुतौ क्षरत्क्षीरौ स्तनौ यस्याः सा उच्छ्वसितप्रस्नुतस्तनी। अपत्यस्नेहाच्छलदुग्धधारयत्-

पयोधरा तयोः पुत्रयोः जनकस्य सन्निधानेन समीपे अवस्थानेन च क्षणं मुहूर्त्तम् संसारिणी गृहस्थधर्म्ममाचरन्ती इव जाता। अन्यापि गृहिणी पत्युः सन्निधौ वर्त्तमाना पुत्रस्नेहेन स्नुतस्तनी भवति।

संसारः विद्यते अस्याः इति संसारिणी। संसार + इनि = संसारिन् स्त्रियां ङीप्। सम् + स्मृ + ल्युट् = संस्मरण। उत् + श्वस् + क्त (कर्त्तरि) = उच्छ्वसित। प्र + स्नु + क्त (कर्त्तरि)। कर्म्मणः अविवक्षातः अकर्म्मकात् कर्त्तरि क्तः। स्नौति, सुष्णाव ; अस्नावीत्।

तमसा। प्रसूयते इति प्रसवः (कर्म्मणि अप्) अपत्यम्। प्रकर्षस्य उत्कर्षस्य अतिशयस्येति यावत् पर्य्यन्तः सीमा इति प्रकर्षपर्य्यन्तः। स्नेहस्य वात्सल्यस्य प्रकर्ष-पर्य्यन्तः पराकाष्ठा इत्यर्थः। पित्रोः स्नेहः परां कोटिमधिश्रयन् अत्र सञ्चरितो भवति। जनन्याः जनकस्य च स्नेहास्पदत्वात् अपत्यं खलु तयोर्हृदये स्वस्मिन् दृढं निबध्नाति। अतएव तत् दम्पत्योः हृदययोर्बन्धनग्रन्थिरिव भवति। अन्योन्यस्य परस्परस्य संश्लेषण संयोगसाधनम्। सम् + श्लिष् + ल्युट् (करणे) = संश्लेषण।

अन्तःकरणेति। स्नेहसंश्रयात् दम्पत्योः अन्तःकरणतत्त्वस्य अपत्यमिति अयम् एकः आनन्दग्रन्थिः बध्यते ॥ १७ ॥

स्नेहस्य उभयोरेव जायापत्योः वात्सल्यस्य संश्रयात् सम्पर्कात् एकास्पदत्वात् इत्यर्थः दम्पत्योः भार्य्याभर्त्रोः अन्तःकरणतत्त्वस्य चित्तरूपपदार्थस्य अपत्यम् इति अयम् एकः अद्वितीयः आनन्दग्रन्थिः आनन्दमयः ग्रन्थिः बन्धनं बध्यते संयम्यते विधात्रा इति शेषः। अपत्यरूपेण बन्धनेन जम्पत्योः हृदये अन्योन्येन सम्बध्येते। तच्च बन्धनम् आह्लादमयम्। अपत्यजन्मना दम्पत्योः प्रेम नितरामुपचीयते इति भावः। तथाचोक्तम् कालिदासेन रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत् प्रेम परस्पराश्रयम्। विभक्त-मप्येकसुतेन तत्तयोः परस्परस्योपरिपर्य्यचीयत। जाया च पतिश्च तौ दम्पती, जम्पती, जायापती। जायायाः दम्भावो जम्भावश्च वा निपात्यते। न पतन्ति पितरः अनेन जातेन इति अपत्यम्। नञ् + पत् + यत्। बन्ध + कर्म्मणि लट् बध्यते।

वासन्ती। अतरुणेति—अचिरोद्गतमुग्धलोलबर्हः उच्छिखः मणिमुकुटः इव स एष शिखण्डी वधूसखः अतरुणमदताण्डवोत्सवान्ते कदम्बे स्वयं नदति ॥ १८ ॥

अचिरं उद्गतानि उत्पन्नानि मुग्धानि मनोहराणि लोलानि चञ्चलानि बर्हाणि पिच्छानि यस्य सः अचिरोद्गतमुग्धलोलबर्हः ; लोलश्चलसतृष्णयोः पिच्छबर्हेनपुंसके इति चामरः, अतः उद्गताः शिखाः प्रभाः यस्य स उच्छिखः उन्मयूखजालः मणिमयः मुकुटः इति मणिमुकुटः इव ; शाकपार्थिवादिवत् समासः कलापचन्द्रकाणां विसारिभिः भास्वरैः प्रभापटलैः पद्मरागेन्द्रनीलमरकतादीनां स्फुरद्रश्मिजालैः समुज्ज्वलोमुकुटइव प्रतीयमानः इत्यर्थः स एष प्राक् सीतादेव्या वर्द्धितः अयं शिखण्डी

कलापी वध्वा: सखा इति वधूसख: राजाहः सखिभ्यष्टच् पत्न्या सहित: अतरुणेन प्रवृद्धेन महता इत्यर्थ: मदेन सत्त्वजविकारेण य: ताण्डवरूप: उत्कटनृत्यरूप: उत्सव: प्रमोदातिशय: तस्य अन्ते अवसाने कदम्बे वृक्षे स्वयम् आत्मना नदति विरौति। मयूरी तु न नदति इति द्योतयितुम् स्वयमित्युपात्तम्। पुष्पिताग्रावृत्तम्। अयुजि नयुग रेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा इति लक्षणम्। उपमालङ्कार:।

ताण्डवं नटनं नाट्यं लास्यं नृत्यञ्च नर्त्तने इत्यमर:। तण्डुना शिवानुचरेण प्रोक्तम्। इति ताण्डवम्। तण्डु + अण्। उत् + सु + अप् = उत्सव। शिखण्ड: कलाप: विद्यते अस्य इति शिखण्डी। शिखण्ड + इनि।

রাম। আহা! এই সকল কথার উল্লেখে হৃদয়ের মর্ম্মস্থান ছিন্ন হইয়া যায়।

বাসন্তী। দেব, এই দিকে আসুন, এই দিকে আসুন।

সীতা। ভগবতি, সত্য সত্যই কি বনদেবতাও আমাকে দেখিতে পাইবেন না?

তমসা। বৎসে, সকল দেবতা অপেক্ষা গঙ্গাদেবীর ঐশ্বর্য্য ও শক্তি অধিক। তুমি কেন আশঙ্কা করিতেছ?

সীতা। তবে ইঁহাদিগের অনুসরণ করি। [ উভয়ে অগ্রসর হইলেন ]।

রাম। [ গমন করিয়া ] ভগবতি, গোদাবরি, আপনাকে নমস্কার করি।

বাসন্তী। [ নিপুণভাবে অবলোকন করিয়া ] দেব, দেব, আনন্দিত হউন। ঐ দেখুন দেবীর পুত্র জয়লাভ করিয়া পত্নীর সহিত বিচরণ করিতেছে।

রাম। বৎস, বিজয়শ্রী দ্বারা অলঙ্কৃত হও।

সীতা। ওমা! সেই করিশাবক এমন হইয়াছে!

রাম। দেবি, তোমার বড় ভাগ্য।

হে সুতনু, মৃণালাঙ্কুরসদৃশস্নিগ্ধশুভ্রদন্তমুকুলোদ্গমে পরিশোভমান যে করিশাবক তোমার কর্ণপূর হইতে লবলীপল্লব আকর্ষণ করিয়াছিল, তোমার পুত্র সেই হস্তী অদ্য মদস্রাবী হস্তিপতিকেও জয় করিতে সমর্থ হইয়া যৌবনে যাহা অশেষ মঙ্গলের নিদান সেই শক্তির আস্পদ হইয়াছে॥ ১৫॥

সীতা। দীর্ঘায়ুঃ বৎস এই মধুরাকৃতি বধূ হইতে অবিযুক্ত হইয়া কালাতিপাত করুক।

রাম। সখি, বাসন্তি, দেখ, দেখ, বৎস পত্নীর চিত্তানুরঞ্জনে নিপুণতাও লাভ করিয়াছে। অনায়াসে উৎপাটিত মৃণালস্তম্ব গ্রাসরূপে প্রদান করিয়া, বিকসিত পদ্ম-সৌরভে সুবাসিত জলের গণ্ডূষ ( শুণ্ডাগ্রদ্বারা বধূর মুখমধ্যে ) ঢালিয়া দিতেছে। শুণ্ডদ্বারা জলকণা বর্ষণ করিয়া ( উহার গাত্র ) পর্য্যাপ্তভাবে সিক্ত করিয়া দিতেছে, এবং সেকান্তে অবক্রনাল নলিনীপত্ররূপ ছত্র ( উহার মস্তকে ) ধারণ করিতেছে॥ ১৬॥

সীতা। ভগবতি তমসে, এই করিশিশু এইরূপ হইয়াছে। জানিনা এত দিনে তাহারা, কুশ ও লব, দেখিতে কিরূপ হইয়াছে।

তমসা। এ যেমন হইয়াছে তাহারাও সেইরূপ হইয়াছে।

সীতা। আমি এমনই মন্দভাগিনী যে আমার কেবল নিরন্তর স্বামিবিরহ ঘটিয়াছে তাহা নহে, পুত্রদিগেরও সহিত বিরহ ঘটিয়াছে।

তমসা। ভবিতব্যতা এইরূপ।

সীতা। প্রসব করিয়াই বা আমার কি ফল হইয়াছে? যেহেতু আমার পুত্রদ্বয়ের তাদৃশ ঈষদ্বিরল কোমলধবলদশনপঙ্‌ক্তিসনাথ, সমুজ্জ্বলকপোলশোভিত, নিরন্তরপ্রবৃত্ত মনোহর কাকলীওহাস্যমুখর, কাকপক্ষধর অমলমুখপুণ্ডরীকযুগল আর্য্যপুত্রকর্তৃক চুম্বিত হইল না।

তমসা। দেবতাদিগের অনুগ্রহে তোমার পুত্রদ্বয়ের বদনকমল তোমার পতিকর্তৃক চুম্বিত হউক।

সীতা। ভগবতি তমসে, পুত্রদ্বয়ের স্মরণবশতঃ আমার উচ্ছ্বসিত স্তনদ্বয় হইতে দুগ্ধধারা ক্ষরিত হইতেছে, এবং তাহাদিগের জনকও এখানে সান্নিহিত, অতএব আমি ক্ষণকালের জন্য সংসারিণী হইয়াছি।

তমসা। এ বিষয়ে আর অধিক কি বলিব। স্নেহের উৎকর্ষের সীমা অপত্যে অভিব্যক্ত হইয়া থাকে। সন্তান মাতাপিতার দৃঢ়বন্ধনস্বরূপ। বিধাতা সন্তানরূপ আনন্দময় একটি গ্রন্থি দ্বারা দম্পতীর অন্তঃকরণরূপ পদার্থ দুইটিকে বন্ধন করিয়া দেন। কারণ সন্তান উভয়েরই স্নেহের আস্পদ ॥ ১৭ ॥

বাসন্তী। দেব, এদিকে দৃষ্টিপাত করুন।

অচিরোদ্গত মনোহর চঞ্চলপুচ্ছশোভিত, উন্মুখমণিমুকুটের ন্যায় দীপ্যমান এই সেই ময়ুর নিজ পত্নার সহিত প্রভূত হযে উদ্ধত নৃত্য করিয়া কদম্বতরুশাখায় কেকাধ্বনি করিতেছে।

সীতা। [ কৌতূহলাক্রান্তচিত্তে অশ্রুবিসর্জ্জন করিয়া ] এ সেই!

*Rama* :—Alas! These references to former events are indeed cutting to the very core of my heart.

*Vasanti* :—This way, my lord, this way.

*Sita* :—Holy dame, is it indeed true that even the Sylvan deities do not see me?

*Tamasa* :—My child, superior is the power of the goddess Bhagirathi to that of all other deities. Why do you doubt it?

*Sita* :—Let us then follow them; [ *they both walk on.* ]

*Rama* :—[ *Advancing.* ] Holy Godavari, my salutations to you.

*Vasanti* :—[ *Marking attentively.* ] Rejoice, my lord, at the victory won by the son of queen Sita, with his consort.

*Rama* :—Be victorious, my long-lived child.

*Sita* :—Oh! He has grown up thus!

*Rama* :—My queen, luckily: do you prosper ; that same child of yours, O you of a beautiful shape, who with budding teeth smooth and glossy like the sprout of a lotus root pulled off the leaf of the Lavali creeper from your ear (in which it was put as an earring)—that same young elephant has now become the conqueror of excited elephants shedding ichor ; and had become the possessor of what is a blessing in the youthful age. (15)

*Sita* :—May he live long, without being separated from this elephantess of graceful appearance.

*Rama* :—Look, my dear friend Vasanti, look, my child has also learnt the art of pleasing his wife.

Since, out of affection he has made mouthfuls of water scented by blooming lotuses pass (into her mouth) along with bits of clumps of lotus-stalks uprooted in sport and offered as mouthfuls of food. Then he has besprinkled her thoroughly with particles of water showered by his trunk, and at the end of it has held (over her) as an umbrella a lotus-leaf having a straight stem. (16]

*Sita* :—Holy Tamasa, he has grown up to be such (a stout and robust elephant), I do not know how they two, Kusa and Lava, have grown up by this time.

*Tamasa* :—As he is, so they too must be.

*Sita* :—I am so unfortunate and miserable, that I have to suffer from this continuous separation not only from my husband, but also from my sons.

*Tamasa* :—So it has been fated to be.

*Sita* :—What is the good of my giving birth to my sons ? Since my husband has not kissed my sons' lotus-like clean faces with bright cheeks shining with soft, white and slightly parted teeth ; with a sweet smile ever accompanied by a charming lisping, and with tied locks of hair.

*Tamasa* :—May they be kissed through the grace of the gods.

*Sita.*—Revered Tamasa, with my breasts heaving and overflowing with milk at the recollection of my sons, and on account of the presence of their parent, I seem to have become for a moment a woman leading a worldly life.

*Tamas.*—Does it require any remark ? A child is indeed the highest pitch to which the excess of affection may reach. It is the strongest tie that unites the parents.

The hearts of the husband and the wife are joined together by one pleasant and agreeable knot, namely the child, inasmuch as it is the common object of their affection. (17)

*Vasanti.*—May your lordship be pleased to look this way. This is the same peacock with his newly grown, beautiful and restlessly spreading tail, and thus looking like an effulgent crown of gems, screams, together with his mate, on the Kadamba tree after a joyous, wild dance due to an excessive buoyancy of spirit. (18)

*Sita* :—[ *with eagerness and tears of affection.* ] It is the same peacock !

रामः। भ्रमिषु इति। भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः प्रचलितचतुरभ्रूताण्डवैः मण्डयन्त्या मुग्धया करकिसलयतालैः सुतमिव नर्त्त्यमानं त्वां वत्सलेन मनसा स्मरामि ॥ १९ ॥

भ्रमिषु, मयूरपोतकेन कृतेषु मण्डलाकारेणसञ्चरणेषु, कृता विहिता पुटस्य आवरणस्य अन्तः मध्ये मण्डलेन मण्डलाकारेण आवृत्तिः आवर्त्तनं मयूरकृतमण्डलसञ्चरणानुसारादितिभावः येन तत् कृतपुटान्तर्मण्डलावृत्ति, रचितावरणान्तर्मण्डलभ्रमणं चक्षुः नेत्रम् प्रचलिते तिर्य्यक्सञ्चारिते पर्य्यायेण ऊर्द्धमधश्च नीते इत्यर्थः चतुरे चटुले ये भ्रुवौ तयोः ताण्डवैः नटनैः मण्डयन्त्या अलङ्कुर्व्वत्या मुग्धया सरलया मे प्रियया करकिसलययोः पल्लवाताम्रहस्तयोः तालैः कालक्रियामानैः सुतमिव पुत्रमिव नर्त्त्यमानं त्वां वत्सलेन स्नेहार्द्रेण मनसा स्मरामि आध्यायामि। मालिनीवृत्तम्। प्रागनुभूतनृत्यस्मरणात् स्मरणालङ्कारः।

भ्रमी भ्रमी इत्यमरः। भ्रम् + इ ( उणादि ) = भ्रमि। मण्ड इत्यदन्तश्चुरादिः तस्मात् शतरि स्त्रियां मण्डयन्ती। करौ किसलयौ इव इति करकिसलयौ तयोः तालः संघर्षवशात् उत्पाद्यमानः कालक्रिययोर्नियमहेतुः शब्दः। इति करकिसलयतालः। तालः कालक्रियामानमित्यमरः। ( नृत् + णिच् ) + शानच् (कर्म्मणि ) – नर्त्त्यमान। मनसेति करणे तृतीया।

हन्त इति हर्षे, तिर्य्यञ्चः तिर्य्यग्योनयः पशवः पक्षिणश्च। परिचयं संस्तवम् अनुरुध्यन्ते अनुसरन्ति, प्रतिमानयन्ति इत्यर्थः।

कतिपयेति। कतिपयकुसुमोद्गमः यः कदम्बः प्रियतमया परिवर्द्धितः आसीत्। एष देव्याः गिरिमयूरः स्मरति तमितिशेषः यतः अत्र स्वजने इव प्रमोदम् एति ॥२०॥

कतिपयानि अल्पानि इत्यर्थः वृक्षस्य क्षुद्रत्वादितिभावः कुसुमानि इति कतिपयकुसुमानि तेषाम् उद्गमः विकाशः यस्मिन् स कतिपयकुसुमोद्गमः स्वल्पैः कुसुमैरलङ्कृतः यः कदम्बः तरुः प्रियया परिवर्द्धितः जलसेकेन वृद्धिं नीतः आसीत्, देव्याः सीतायाः गिरिमयूरः गिरिचरः शिखी सीतया सयत्नं पालितः एष स्मरति तं भ्रातरमिव इदानी मपि प्रत्यभिजानाति, यतः अत्र कदम्बे स्वजने निजे आत्मीये जने इव प्रमोदं हर्षमानन्दम् एति प्राप्नोति आत्मीयजनसंसर्गादिव एतत्कदम्बतरुसङ्गात् आनन्दमनुभवति। पुष्पिताग्रावृत्तम्।

कतिपयानि कुसुमानि इति विग्रहे कुसुमकतिपयानि इत्येव समस्तं पदं स्यात, जातिवाचकस्य कुसुमशब्दस्य पूर्व्वनिपातः स्यात् सूत्रे प्रथमान्तनिर्द्दिशात्, तथाच सूत्रम् पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहत्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैः जातिः। तथापि अस्य शास्त्रस्य प्रायिकत्वात् न कुसुमशब्दस्य पूर्व्वनिपातः कतिपयदिनस्थायिहंसाः दशार्णाः इत्यस्य व्याख्यानावसरे तत्रभवता मल्लिनाथेनैवमुक्तम्।

वासन्ती। आसनस्य परिग्रहः स्वीकरणम् इति आसनपरिग्रहः। अत्र उपविशतु इत्यर्थः।

एतदिति। कदलीवनमध्यवर्त्ति एतत् तत् एव कान्तासखस्य ते शयनीयशिलातलम्। यत् अत्र स्थिता सीता एभ्यः वहुशः तृणमदात् ततः हरिणकैः न विमुच्यते स्म ॥२१॥

कदलीनां वनस्य मध्ये वर्त्तते यत् तत् कदलीवनमध्यवर्त्ति रम्भारण्यपरिच्छिन्नम् एतत् तत् पूर्व्वमध्युषितं कान्तासखस्य पत्नीद्वितीयस्य ते शयनीयं शिलातलं शयनार्थां दृषत्। अत्र स्थिता शिलातले उपविष्टा सीता यत् यस्मात् एभ्यः हरिणेभ्यः वहुशः वहुवारान् तृणं शष्पमदात् व्यतारीत् ततः तस्मात् हेतोः हरिणकैः एणपोतैः एतत् शिलातलं न विमुच्यते स्म। इदं शिलातलं विहाय अन्यत्र नागम्यत। वसन्ततिलकं वृत्तम्।

कान्तायाः सखा इति कान्तासखः। राजाहःसखिभ्यष्टच्। शेते अस्मिन् इति शयनीयम्। कृत्यल्युटो वहुलम् इति शीङः अधिकरणे अनीयर्। शयनीयं शिलातलम् कर्म्मधारयः। वहु + शस् = वहुशः। It is an indeclinable particle and means many a time. वह्वल्पार्थाच्च कारकात् शस् इति शस् प्रत्ययः। विमुच्यते इति मुञ्चतेः कर्म्मणि लट्। लट् स्मे इति भूते लट् प्रयोगः।

सीता। विविधाः विस्रम्भाः विश्वासातिशयप्रवृत्ताः क्रियाः इत्यर्थः, तेषां साक्षिणः उपद्रष्टारः। इति विविधविस्रम्भसाक्षिणः। Bhavabhuti was very fond

of this expression. No less than three times the expression has been used. गोदावर्य्याः काननस्य उद्देशाः प्रदेशाः विभागाः इत्यर्थः। निर्गतः विशेषः प्रभेदः येषां ते निर्व्विशेषाः अभिन्नाः जातेभ्यः पुत्रेभ्यो निर्व्विशेषाः इति जातनिर्व्विशेषाः अपत्यनिर्व्विशेषाः। मृगाश्च पक्षिणश्च पादपाश्च इति मृगपक्षिपादपाः। पाद + पा + क = पादप। जीवलोकस्य प्राणिवर्गस्य परिवर्त्तः परिवर्त्तनम्। दशाविपर्य्यासः इत्यर्थः। वासन्ती। कुवलयेति—सततम् अपि स्वेच्छादृश्यः यः कुवलयदलस्निग्धैः अङ्गैः ते नवं नवम् एव नयनोत्सवं ददौ, विकलकरणः पाण्डुच्छायः शुचा परिदुर्व्वलः कथम अपि स इति उन्नेतव्यः तथापि दृशां प्रियः॥ २२॥

सततम् निरन्तरम् अपि स्वेच्छया यथेच्छम् इत्यर्थः दृश्यः द्रष्टुं शक्यः नतु दुर्लभदर्शनः इतिभावः, यो रामचन्द्रः कुवलयस्य नीलोत्पलस्य दलानि इव स्निग्धानि मसृणोज्ज्वलानि इति कुवलयदलस्निग्धानि, उपमानानि सामान्यवचनैरिति समासः; तैः इन्दीवरदलवन्मसृणोज्ज्वलैः अङ्गैः गात्रैः ते तव नवं नवम् अपुनरुक्तं नयनयोः उत्सवः आनन्दः तम् नयनोत्सवं नेत्रानन्दं ददौ, मुहुरीक्ष्यमाणोऽपि जनितदर्शनोत्सुकः यस्ते अनुवेलं नेत्रनिर्व्वाणं व्यतरत्, स इत्यध्याहार्य्यम् यत्तदोर्नित्यसम्बन्धात्, इदानीं विकलानि विह्वलानि करणानि इन्द्रियाणि यस्य स विकलकरणः विह्वलेन्द्रियः, करणं साधकतम क्षेत्रगात्रेन्द्रियेष्वपि इत्यमरः, पाण्डुः ईषत्शुभ्रा छाया कान्तिः यस्य स पाण्डुच्छायः, छायासूर्य्यप्रियाकान्तिः प्रतिविम्बमनातपः इत्यमरः; प्रभातचन्द्रवदापाण्डुरच्छविः शुचा शोकेन दुर्व्वलः क्षीणः अयं स एव रामचन्द्रः इति कथमपि कृच्छ्रेण उन्नेतव्यः प्रत्यभिज्ञातव्यः इत्यर्थः तथापि एवं कान्त्यपायेऽपि इत्यर्थः दृशां नयनानां प्रियः प्रीतिप्रदः; लोकोत्तरमाधुर्य्यवशात् सर्व्वावस्थास्वपि नयनाह्लादकः "अहो सर्व्वावस्थास्वपि रमणीयत्वमाकृतिविशेषाणामिति" भावः। हरिणीवृत्तम्। समासगा उपमा।

नवं नवमित्यत्र वीप्सायां द्विरुक्तिः। यदा यदा स चक्षुर्व्विषयीभूतः तदा तदैव नवां प्रीतिं विदधत्पुनरुक्तदर्शनस्पृहामजनयदित्यर्थः। सम् + तन् + क्त = सतत। Optional form सन्तत। उत् + नी + तव्य (कर्म्मणि) = उन्नेतव्य। शुच् + क्विप् (भावे) = शुच्। शुचा इति हेतौ तृतीया। प्री + क (कर्त्तरि) = प्रिय। दृश् + क्यप् (कर्म्मणि) = दृश्य। दृश + क्विप् (करणे) = दृश्। उत् + सु (स्वादि) + अप् = उत्सव।

तमसा। प्रियं भर्त्तारं पश्यन्ती ईक्षमाणा भूयाः; चिरं स्वामिनमवलोकयन्ती स्थेयाः। भर्त्रा सह ते पुनर्मेलनं भवतु इत्यर्थः। आशिषि लिङ् भूयाः।

सीता। केन सम्भावितम् उत्प्रेक्षितम्। केनापि चिन्तयितुमपि न शक्यमिदमासीत्, आवयोः परस्परस्योपरि प्रेम ईदृगेव प्रवृद्धमभूत्। स्वप्ने खलु अलौकिकाः असम्भाव्याः वृत्तान्ताः अनुभूयन्ते। वियुक्तयोरावयोर्जीवितसन्धारणसम्भाव्यता

स्वप्नेऽपि अनुभवपदवीं नाध्यगच्छत्। किमुत जागरे। अन्यत् जन्म इति जन्मान्तरम् तस्मादिव लब्धं दर्शनं यस्य तम् वत्सलं मयि अनुरक्ताम् आर्य्यपुत्रम् वाष्पसलिलानां अश्रुनिचयानामित्यर्थः अन्तरेषु अवकाशेषु परिपतन्तीष्वमान्तराले इत्यर्थः प्रेक्षे अवलोकयामि। जन्मान्तरं प्राप्येव इत्यर्थे जन्मान्तरात् इव। ल्यब्लोपे कर्म्मण्यधिकरणे इति पञ्चमी।

तमसा। [परिष्वज्य परिरभ्य, आलिङ्ग्य इति यावत्। परि + स्वन्ज् + ल्यप् = परिष्वज्य उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् इति षत्वम्।

विलुलितेति। अतिपूरैः विलुलितम् आनन्दशोकप्रभवं वाष्पम् अवसृजन्ती, तृष्णया उत्तानदीर्घा स्नेहनिस्यन्दिनी धवलवहुलमुग्धा ते दृष्टिः दुग्धकुल्या इव हृदयेशं स्नपयति॥ २३॥

अतिपूरैः प्रवलैः उच्छ्वासैः प्रवाहैरिति यावत् विगलितम् चलितम् विकीर्णम् गलितमित्यर्थः, आनन्दात् पतिदर्शनाह्लादात् शोकात् विरहदुःखाच्च प्रभवः उत्पत्तिः यस्य तम् आनन्दशोकप्रभवम्; यद्वा प्रभवति अस्मात् इति प्रभवः कारणम् आनन्दशोकौ प्रभवः कारणं यस्य तम् तथोक्तम् युगपदाह्लाददुःखहेतुकं वाष्पं अश्रुसम्भारं अवसृजन्ती पातयन्ती मुञ्चन्ती इति यावत्, तृष्णया अत्युत्कटदर्शनेच्छया उत्ताना विसारिणी दीर्घा दूरप्रसृता च इति उत्तानदीर्घा स्नेहं प्रेम निस्यन्दते क्षरति या सा स्नेहनिस्यन्दिनी स्नेहं क्षरन्तीव ताच्छील्ये णिनिः यद्वा स्नेहस्य निस्यन्दः क्षरणं विद्यते यस्याः सा स्नेहनिस्यन्दिनी, मत्वर्थीयः इनिः धवलवहुला धवलप्राया मुग्धा हारिणी च इति धवलवहुलमुग्धा, विशेषणयोः कर्म्मधारयः, ते तव दृष्टिः दुग्धस्य क्षीरस्य कुल्या कृत्रिमा सरिदिव हृदयेशं हृदयवल्लभं पतिं स्नपयति आर्द्रीकरोति। दर्शनौत्सुक्येन विस्फारिता धवलं प्रभासन्तानं विकिरन्ती स्नेहार्द्रा ते दृक् भर्त्तारं प्रति प्रेरिता तमाप्लावयतीव; अन्ये कापि शुभ्रप्रभा तव दृष्टेर्निःसृत्य तव हृदयेश्वरे निपत्य दुग्धधारेव तं स्नापयति। उत्प्रेक्षालङ्कारः। मालिनीवृत्तम्।

लुल + क्त = लुलित। लोलति। तनोतेरुपसंख्यानात् उत्पूर्व्वात् तनोतेः कर्त्तरि डः स्त्रियाम् उत्ताना। स्ना + णिच + लट् = स्नपयति। मितां ह्रस्वः इति ह्रस्वः। पक्षे स्नापयति। ग्लास्नावनुवमां च इति, अनुपसर्गादेषां मित्त्वं वा स्यात्। धवलस्य धवलगुणस्य वहुलं आधिक्यं यस्मिन् सा धवलवहुला। कुल्यातु कृत्रिमा सरित्। तृष् + नङ् = तृष्णा। अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु इति पाक्षिकः षत्वाभावः।]

वासन्ती। ददतु इति। मधुमन्तः तरवः पुष्पैः फलैश्च अर्घ्यं ददतु। स्फुटित-कमलामोदप्रायाः वनानिलाः प्रवान्तु। रत्युत्कण्ठाः शकुन्तयः अविरलं कलं क्वणन्तु। अयं हि वः रामः इदं वनं स्वयं पुनः आगतः॥ २४॥

अयं देव: राम: स्वयं अनन्यप्रेरित: इत्यर्थ: पञ्चवट्यां प्रीतिवशादितिभाव: इदं वनं पुन: भूय: आगत: ; अत: तस्य अभ्यर्थनार्थम् मधु पुष्परसं श्चोतन्ति ये ते मधुश्चुत: श्चुतिरक्षरणे इति धातो: क्विप्, मकरन्दस्राविण: तरव: वृक्षा: पुष्पै: प्रसूनै: फलैश्च स्वादुभि: मृष्टै: अर्घ्यं पूजार्थं द्रव्यम् ददतु। पुष्पाणि सुमिष्टानि फलानि च अर्घ्यरूपेण उपकल्पयन्तु, स्फुटितानां विकसितानां कमलानां पद्मानां आमोदस्य अतिनिर्हारिण: गन्धस्य प्राय: बाहुल्य येषु ते स्फुटितकमलामोदप्राया: विकसितारविन्दमकरन्दगन्ध-वाहिन: वनानिला: वनवाता: प्रवान्तु अभ्यागतस्य रामस्य अध्वश्रमविनोदनाय एनं वीजयन्तु इत्यर्थ:। रतौ क्रीडायां उत्कण्ठा: उत्सुका: शकुन्तय: पक्षिण: हर्षात् मधुरकण्ठा: इत्यर्थ: अविरलं निरन्तरम् कलम् अव्यक्तमधुरं क्वणन्तु कूजन्तु। अस्य श्रोत्रसुखाय मागधा: इव जयशब्दं कुर्व्वन्तु इति भाव:। महाराज रामचन्द्रमतिथि-मासाद्य वनभूमिरियम् परिचरतु। सर्व्वत्र अनुज्ञायां लोट्। हरिणीवृत्तम्। नसमरसलागः षड्वेदैर्हयैर्हरिणीमता इति लक्षणम्।

राम:। [ अश्रुतिमश्रवणमभिनीय अश्रुत्वा इव ]।

करेति। मैथिली करकमलवितीर्णै: अम्बुनीवारशष्पै: यान् तरुशकुनिकुरङ्गान् अपुष्यत् तेषु दृष्टेषु प्रस्तरोद्भेदयोग्य: मम हृदयस्य द्रव: इव कोऽपि विकार: भवति॥ २५॥

मैथिली मिथिलाधिपदुहिता सीता करकमलेन पद्मवदाताम्रेण करेण वितीर्णै: दत्तै: अम्बुजलं नीवार: तृणधान्यम् शष्पं कोमलतृणञ्च तानि अम्बुनीवारशष्पाणि तै: करणै: यान् तरून् वृक्षान् शकुनीन् पक्षिण: कुरङ्गान् मृगांश्च अपुष्यत् अवर्द्धयत्, जलसेकेन वृक्षान् नीवारदानेन पक्षिणो कोमलतृणैश्च हरिणान् वृद्धिमनयत्, यथा-संख्यमलङ्कार:। तेषु वृक्षादिषु दृष्टेषु सत्सु भावे सप्तमी प्रस्तरस्य उद्भेद: इति प्रस्तरोद्भेद: पाषाणद्रव: इत्यर्थ: तत्र योग्य: शक्त: योग्य: प्रवीणयोगार्होपायिशक्तेषु वाच्यवत् इति मेदिनी। हृदयस्य द्रव: इव कोऽपि अनिर्व्वचनीय: विकार: चेतसोऽन्यथा भाव: भवति। शोकवेगेण वज्रसारमपि मे हृदयं, तापतिशयात् शिलीभूततुषार-सङ्घातइव द्रवीभावमापद्यते इत्यर्थ:। मालिनीवृत्तम्। यथासंख्यमलङ्कार: हृदयस्य द्रव: इव इत्यत्र उत्प्रेक्षा च। अनयो: मिथोनैरपेक्ष्येण तिलतण्डुलवत् संसृष्टि:। हृदयस्य द्रवीकरणे समर्थ: विकार: इतिकारणस्य हृदयद्रव इति कार्य्यत्वेन उत्-प्रेक्षणात् उत्प्रेक्षालङ्कार:। प्रस्तरोद्भेदयोग्य: इति विशेषणोपादानात् हृदयं उपलवत् कठिनम् इति उपमा च व्यज्यते।

वि + तॄ + क्त ( कर्म्मणि )= वितीर्ण। नि + वृ + घञ् = नीवार। नौ वृ धान्ये इति घञ्।

রাম। বৎস তুমি সুখে থাক, আহ্লাদে দিনপাত কর।

সীতা। তাহাই হউক।

রাম। তুমি যখন মণ্ডলাকারে ভ্রমণ করিতে, তখন মুগ্ধচিত্তা প্রিয়ার চক্ষুঃ সঙ্গে সঙ্গে পুটাভ্যন্তরে গোলাকারে আবর্ত্তন করিত ; এবং মনোহর ভ্রূর চটুলনর্ত্তনে চক্ষুর কতই শোভা হইত। প্রিয়া করকিসলয়দ্বারা তাল দিয়া তোমাকে নিজ পুত্রের ন্যায় নাচাইতেন ; আমি স্নেহপূর্ণ হৃদয়ে উহা স্মরণ করিতেছি ॥ ১৯ ॥

অহো! পশুপক্ষীরাও পরিচয়ের অনুবর্ত্তন করিয়া থাকে।

কতিপয় কুসুমের উদ্গমে শোভিত যে কদম্ব বৃক্ষটি প্রিয়তমা বর্দ্ধিত করিয়াছিলেন—

সীতা। [ অবলোকন করিয়া সাশ্রুনয়নে ] আর্য্যপুত্র ঠিক চিনিয়াছেন।

রাম। দেবীর এই গিরিবিহারী ময়ূর সেই বৃক্ষটিকে স্মরণ করিয়া রাখিয়াছে। যেহেতু এ এই বৃক্ষে অবস্থান করিয়া স্বজনসঙ্গপ্রীতি অনুভব করিতেছে ॥ ২০ ॥

বাসন্তী। দেব এইস্থানে আসন পরিগ্রহণ করুন।

আপনি পত্নীর সহিত যে শিলাতলে শয়ন করিতেন, কদলীবনমধ্যবর্ত্তী এই সেই শিলাতল। হরিণগুলি এই স্থান পরিত্যাগ করিত না কারণ সীতা এই স্থানে অবস্থিত হইয়া ইহাদিগকে অনেকদিন প্রভৃত তৃণ দান করিতেন ॥ ২১ ॥

রাম। ইহা দেখিতে পারা যায় না। [ রোদন করিতে করিতে অন্যত্র উপবিষ্ট হইলেন। ]

সীতা। সখি বাসন্তি, আমাকে ও আর্য্যপুত্রকে এই স্থান দেখাইয়া তুমি এ কি করিলে ? হায়! হায়! সেই আর্য্যপুত্র, সেই পঞ্চবটী বন, সেই সখী বাসন্তী, বিবিধ বিশ্রম্ভের সাক্ষী সেই গোদাবরী কাননপ্রদেশ, অপত্যনির্ব্বিশেষ সেই মৃগপক্ষিপাদপসমূহ, সেই আমি ; কিন্তু আমি এমনই হতভাগিনী যে যদিও এগুলি আমি নিরীক্ষণ করিতেছি, তথাপি আমার পক্ষে এগুলির যেন অস্তিত্ব নাই। এমনই জীবলোকের পরিবর্ত্তন আমার ঘটিয়াছে।

বাসন্তী। সখি সীতে, রামের এই অবস্থার প্রতি কেন দৃষ্টিপাত করিতেছ না ? যিনি ইচ্ছামাত্রেই সতত দর্শনযোগ্য হইলেও কুবলয়দলস্নিগ্ধ অঙ্গদ্বারা তোমার নয়নের নব নব উৎসব বিধান করিতেন, তিনি শোকে পরিক্ষীণ, বিকলেন্দ্রিয় ও পাণ্ডুবর্ণ হইয়াছেন ; এবং ইনি যে সেই ব্যক্তি ইহা অতি কষ্টেই অনুমান করিতে পারা যায় ; তথাপি ইঁহার আকৃতি নয়নাভিরাম ॥ ২২ ॥

সীতা। দেখিতেছি, সখি, দেখিতেছি।

তমসা। স্বামীকে অবলোকন করিতে করিতেই যেন তোমার দিন যায়।

সীতা। হা ভাগ্য। ইনি আমাকে ছাড়িয়া, এবং আমি ইঁহাকে ছাড়িয়া জীবনধারণ করিতে সমর্থ হইব, ইহা কেহ স্বপ্নেও ভাবিয়াছিল কি ? জন্মান্তরের পর যেন ইঁহার দর্শন লাভ করিয়াছি ; অতএব মুহূর্ত্তের জন্যও স্নেহার্দ্র হৃদয় আর্য্যপুত্রকে অশ্রুসম্ভারের পতন ও উদ্গমনের অন্তরালে দেখিয়া লই। [ দেখিতে লাগিলেন ]

তমসা। [ সস্নেহে অশ্রুবিসর্জ্জন করিয়া এবং সীতাকে আলিঙ্গন করিয়া ]

স্বামীর দর্শনলালসাহেতু বিস্ফারিত ও দূরপ্রসারিত, ধবলপ্রায় মুগ্ধ ও স্নেহধারাবর্ষিণী

তোমার এই দৃষ্টি প্রবলোচ্ছ্বাসে বিগলিত, আনন্দ ও শোকজন্ম অশ্রুরাশি বিসর্জ্জন করিয়া দুগ্ধকুল্যার ন্যায় তোমার হৃদয়েশকে যেন স্নাত করিয়া দিতেছে ॥ ২৩ ॥

বাসন্তী। দেব রামচন্দ্র পুনর্ব্বার এই বনে স্বয়ং আগমন করিয়াছেন; অতএব মকরন্দবর্ষী তরুগণ পুষ্প ও ফলদ্বারা অর্ঘ্যসম্পাদন করুক; বিকসিতকমলসৌরভবাহী বনবায়ু প্রবাহিত হউক; এবং রত্যুৎকণ্ঠ পক্ষিকুল নিরন্তর ললিতকণ্ঠে অব্যক্ত মধুর কূজন করুক ॥ ২৪ ॥

রাম। সখি, বাসন্তি, এস এখানে উপবেশন কর।

বাসন্তী। [উপবেশন করিয়া অশ্রুবিসর্জ্জনপূর্ব্বক] মহারাজ, কুমার লক্ষ্মণের কুশল ত ?

রাম। [শ্রবণ করেন নাই এইরূপ অভিনয় করিয়া]

মৈথিলী স্বীয়করকমলদ্বারা অম্বু, নীবার ও শষ্প প্রদান করিয়া যে বৃক্ষ, পক্ষী ও কুরঙ্গদিগকে পুষ্ট করিয়াছিলেন তাহাদিগকে দর্শন করিয়া আমার কি এক হৃদয়দ্রাবী বিকার উপস্থিত হইতেছে, যাহা পাষাণকেও বিগলিত করিতে সমর্থ ॥ ২৫ ॥

*Rama* :—Rejoice, my child, rejoice.

*Sita* :—Be it so.

*Rama* :—With an affectionate heart do I remember you, as you were being made to dance like her own son by my simple-hearted wife, with clappings of her sprout-like hands,—and her eye, as it rolled within the eyelids at the time of your moving in a circle, was lent a grace by the brisk dancing of her charming eye-brows. (19).

Oh ! even birds and beasts have respect for an old acquaintance.

The *Kadamba* tree with a few flowers blooming, which was reared by my beloved—

*Sita* :—[*Marking, with tears.*] My husband has rightly recognised it.

*Rama* :—The same Kadamba tree is remembered by this mountain-peacock of my queen, for he feels so joyous here as though in the company of his own kith and kin. (20)

*Vasanti*.—Let your majesty take your seat here.

This is the same slab of stone lying in the midst of a grove of plantains, which you used to lie on in company with your dear wife. Since Sita seated on it used many a time to give grass to the deer, it is therefore that they did never leave it. (21).

*Rama* :—I am indeed incapable of looking at it. [ *Sits down elsewhere and weeps*.]

*Sita* :—My friend Vasanti, what have you done by showing it to my husband and to me ? Alas ! Alas ! my husband is still the same, the same is the Panchavati forest, the same is my friend Vasanti, these are the same forest tracts about the Godavari, the witnesses of our various confidential sports, these are the same antelopes, birds and trees differing no wise from our own children; and I too am the same and yet they, though being seen actually, seem to have no existence for me, an ill-fated wretch. Such is the change of this world of beings (so far as I am concerned.)

*Vasanti* :—My friend Sita, how is it that you do not look at the condition of Rama ? Who, though always visible to you at your pleasure, used to give a fresh and ever fresh joy to your eyes by means of his limbs soft and smooth as the petals of a blue lotus, but, now through grief, is weak and emaciated, pale in complexion ; enfeebled in his senses, and hardly to be recognised as the same person, yet lovely to behold. (22)

*Sita*.—I see it, my friend, I see it.

*Tamasa*.—May you be beholding (ever) your husband.

*Sita*.—O Fate, who ever thought, even in a dream, that he should be without me or I should be without him? Then let me see, in the intervals between the rise and fall of the tears, my affectionate husband, whose sight has been obtained as if after a fresh birth. [ *Beholds him*. ]

*Tamasa*.—[ *Affectionately embracing her with tears*. ] Your sight, wide-opened and dilated through a strong yearning, shedding tears both of joy and sorrow flowing in an abundant stream, overflowing with affection, and extremely charming by its whiteness, bathes, like a stream of milk, the lord of your heart. (23).

*Vasanti* :—Let trees dripping honey make respectful offerings with flowers and fruits. Let the forest breezes surcharged with the fragrance of blooming lotuses blow, and let birds excited with

passion ceaselessly warble sweet and melodious notes ; for his majesty Rama has come again in person to this forest (24).

*Rama.*—Come, dear friend Vasanti, sit down here.

*Vasanti* :—[ *Sits down, with tears.* ] Mighty Monarch, is it all well with Prince Lakshmana ?

*Rama* :—[ *As if he does not hear.* ] An indescribable agitation, capable of melting even a stone, comes upon me, as if it were my heart liquefied, when I see those trees birds and fawns which the Princess of Mithila reared with water, wild rice and soft grass given with her own lotus-like hands. (25)

रामः। निर्गतः प्रणयी यस्मात् तत् निष्प्रणयम् प्रणयशून्यम् स्नेहशून्यमिति यावत्। सुमित्रायाः अपत्यं पुमान् इति सौमित्रिः। बाह्वादित्वात् इञ्। सौमित्रिरेव इति सौमित्रिमात्रम्। मयूरव्यंसकादयश्चेति समासः। सौमित्रिमात्रे केवले लक्ष्मणे नतु सीतायामपि। अत्र विषयाधिकरणे सप्तमी। कुशलस्य प्रश्नः जिज्ञासा पृच्छा इति यावत् इति कुशलप्रश्नः। वाष्पेण अश्रूद्गमात् स्खलितानि विशीर्णानि अविस्पष्ट-मुच्चारितानि अक्षराणि वर्णानि यस्य स वाष्पस्खलिताक्षरः। अश्रूद्गमविशीर्णवर्णः। लक्ष्मणस्यैव नतु सीतायाः कुशलवार्त्तां पृष्टवती इयम्; प्रश्नकाले च शोकवशाद् वैक्लव्याकुलाक्षरमियमभाषत। अतः सीतायाः परित्यागवृत्तान्तमियं वेत्तीति मन्ये।

सीता। प्रियस्य प्रियवचनस्य अर्हः योग्यः इति प्रियार्हः। यद्वा प्रियं प्रियवचनमर्हति इति प्रियार्हः। कर्मण्यण् इति अण्। विशेषतः विशेषेण प्रकृत्यादिभ्यश्चेति तृतीया। तृतीयाया स्तसिः।

वासन्ती। त्वमिति। त्व मे जीवित त्व मे द्वितीयं हृदयं त्व नयनयो. कौमुदी, त्वम् अङ्गे अमृतम् इत्यादिभिः प्रियशतैः मुग्धाम् अनुरुध्य तामेव अथवा शान्तम् इह उत्तरेण किम् ॥ २६ ॥

अयि विदेहराजपुत्रि त्वं मे मम जीवितं प्राणाः त्वं मे द्वितीयं हृदयम् एकमेव आवयोर्हृदयं द्विधा स्थितमित्यर्थः। त्वं मे नयनयोः नेत्रयोः कौमुदी चन्द्रिका-प्रादुर्भावः। ज्योत्स्नेव त्वं मे लोचनयो राप्यायनी ; त्वम् मम अङ्गे गात्रे अमृतम् सुधा। तव स्पर्शः मम गात्रे अमृतधारां निषिञ्चतीव। इत्यादिभिः एवंविधैः प्रियशतैः एवमादिभिः चाटुवचनैः उपचारपदैरित्यर्थः मुग्धाम् अप्रबुद्धमनसं बालामिति यावत् सीताम् अनुरुध्य अनुवर्त्य, प्रियवचनैः तस्याश्चित्तरञ्जनं कृत्वा तामेव (निर्व्वासितवानसि इति वाक्यसमाप्तिः) अथवा इह उत्तरेण वाक्यसमापकेन उत्तरवर्त्तिपदेन

किम् साध्यं भवेदित्यर्थः। गम्यमानसाधनक्रियापेक्षया करणत्वात् तृतीया। वसन्ततिलकं वृत्तम्।

कौ पृथिव्यां मोदते जनः अस्याम् अनया वा इति कौमुदी। सप्तम्याः अलुक्। यद्वा कुमुदानामियम् प्रीणयित्री इति कौमुदी। कुमुद + अण (स्त्रियां ङीप्) = कौमुदी। नयनयोरिति विषयाधिकरणे सप्तमी।

रामः। स्थाने योग्ये अवसरे इत्यर्थः वाक्यस्य निवृत्तिरवसानं मोहः मूर्च्छा च।

वासन्ती। अकार्य्यं कर्त्तुमनर्हं निन्दितं कार्य्यमित्यर्थः।

रामः। मृष्यति सहते ; ममगृहे सीतायाः अवस्थानं न क्षमते लोकः।

वासन्ती। कस्य हेतोः किं निमित्तम्। षष्ठी हेतुप्रयोगे इति षष्ठी।

रामः। किमपि निमित्तमिति शेषः।

तमसा। तस्य लोकस्य प्रकृतिवर्गस्य उपालम्भः तिरस्कारः निर्भर्त्सनमिति यावत् उचितः न्याय्यः। अमूलकनिन्दाप्रचारेण कृतापराधः प्रकृतिवर्गः एव दण्डनीयः नतु निरपराधा सीता दण्डनीया इत्यर्थः।

वासन्ती। अयीति। अयि कठोर यशः ते प्रियं किल। ननु अतःपरं किमघोरम् अयशः। हे नाथ कथय, विपिने हरिणीदृशः किमभवत्, कथं वत मन्यसे ॥२७॥

अयि भोः कठोर निष्ठुर यशः कीर्त्तिः ते प्रियं हृद्यं किल प्राणसमायाः प्रियायाः परित्यागेनापि प्रकृतीनां रञ्जनेन अनुपमं यशः स्यादिति मत्वा त्वया सीता विवासिता। किन्तु यशस्त्वया नासादितं खलु कीर्त्यर्ज्जनप्रयासस्ते वृथैव जातः इति सम्भावयामि यतः ननु भोः राजन् चिन्तय तावदनेन नृशंसेन कर्म्मणा कीदृशी ते अकीर्त्तिर्जनिता। निरपराधायाः धर्म्मपत्न्याः त्यागेन तव यदयशो जातम् ततोऽधिकतरं अयशः किंस्यात्। विपिने दुर्गमे अरण्ये हरिण्याः इव दृक् यस्याः तस्याः हरिणीदृशः एणीनयनायाः किमभवत् असहायायाः तस्याः किं वृत्तम्, आहोवत कथं मन्यसे किमुत्प्रेक्षसे, किं सम्भावयसि तत् हे नाथ हे प्रभो कथय। जगतां नाथोऽपि गर्भभरालसायाः निरागसः प्रियपत्न्याः सहायशून्ये अरण्यवर्त्मनि परित्यागं कृत्वा कमपि रक्षणोपायं न विहितवान् अहो ते नैष्ठुर्य्यम् विचारमूढत्वञ्चेति भावः। द्रुतविलम्बितम् वृत्तम्। द्रुतविलम्बितमाह नभौ भरौ इति लक्षणम्।

अटव्यरण्यं विपिनं गहनं काननं वनम् इत्यमरः। अश्नुते इति यशः। अश् + असुन्। अशेर्देवने युट् च।

सीता। प्रदीप्तं शोकसन्तप्तं एवं प्रदीपयसि एभि र्निष्ठुराक्षरैः व्यथयसि इत्यर्थः।

तमसा। त्वयि प्रकृष्टप्रेमवशात् त्वद्भाग्यपर्य्यालोचनया महता दुःखेन च तव प्रियसखीवासन्ती एवं कथयति रामं निर्भर्त्सयति इत्यर्थः।

रामः। त्रस्तैकेति। त्रस्तैकहायनकुरङ्गविलोलदृष्टेः परिस्फुरितगर्भभरालसायाः तस्याः मृदुबालमृणालकल्पा ज्योत्स्नामयी इव अङ्गलतिका क्रव्याद्भिः नियतं विलुप्ता ॥ २८ ॥

एकः हायनः वर्षं यस्य स एकहायनः, संवत्सरो वत्सरोऽब्दो हायनोऽस्त्रीशरत् समाः इत्यमरः, त्रस्तः भीतः चकित इति यावत् एकहायनः एकवर्षः यः कुरङ्गः हरिणः तस्य इव विलोला चञ्चला दृष्टिः दृक् यस्याः सा त्रस्तैकहायनकुरङ्गविलोलदृष्टिः उपमानपूर्व्वपदोबहुव्रीहिरुत्तरपदलोपश्च, तस्याः भयविलोलहरिणीवच्चपलायताक्ष्याः परिस्फुरितेन स्पन्दमानेन गर्भस्य भरेण भारेण अलसा मन्दगमना तस्याः परिस्फुरित-गर्भभरालसायाः प्रवृद्धगर्भभारवशाद् द्रुतगमने असमर्थायाः इतिभावः तस्याः सीतायाः ज्योत्स्नामयी इव ज्योत्स्नाघटिता इव इत्युत्प्रेक्षा, अतिसुकुमारा इत्यर्थः मृदु कोमलं बालम् अपरिणतम् अजरठमिति यावत् यत् मृणालं तस्मादीषदूना इति मृदुबालमृणाल-कल्पा, ईषदसमाप्तौ कल्पप् प्रत्ययः। अङ्गलतिका तनुवल्ली क्रव्याद्भिः राक्षसादिभिः नियतं निश्चितं विलुप्ता भक्षिता इत्यर्थः। हिंस्रैः निशाचरैः श्वापदादिभिर्व्वा सा नूनं खादिता। वसन्ततिलकावृत्तम्। उपमालङ्कारः।

क्रव्य + अद् + विट् = क्रव्याद्। लतिका क्षुद्रालता। ह्रस्वार्थे कप्रत्ययः। प्रत्ययस्थात्पूर्व्वस्यात इदाप्यसुपः इति आकारस्य इत्। अङ्गं लतिका इव इति अङ्गलतिका। उपमितं व्याघ्रादिभिरिति समासः। त्रस् + क्त ( कर्त्तरि ) = त्रस्त त्रस्यति, त्रसति। वि + लुप् + क्त ( कर्म्मणि ) = विलुप्त।

लुम्पति, लुलोप, अलुपत्
लुम्पते, लुलुपे, अलुप्त

सीता। प्रिये, जीवामि ; ननु क्रव्यात्कुक्षिगता। तौदादिकात् अवस्थानार्थकात् छधातोः लट्। प्रमुक्तः कण्ठः यस्मिन् कर्म्मणि तद् यथा तथा प्रमुक्तकण्ठम् उच्चैः इत्यर्थः। धैर्य्यमुत्सृज्य उच्चैरारटति इत्यर्थः।

तमसा। साम्प्रतिकं युक्तमेव। उच्चैः रोदनम् अधुना कर्त्तव्यमेव इत्यर्थः दुःखस्य निर्वापणानि प्रशमनानि अवश्यमेव विधातव्यानि निर् + वा ( णिच् ) + ल्युट् = निर्वापण—blowing out. Here the poet tacitly compares दुःख or grief to fire. साम्प्रतिक is an ordinary base derived from the indeclinable word साम्प्रतम् meaning fit or proper, ( युक्ते द्वे साम्प्रतं स्थाने इत्यमरः) with ठञ्।

पूरोत्पीड़ इति। तड़ागस्य पूरोत्पीड़े परीवाहः प्रतिक्रिया। शोकक्षोभे च हृदयं प्रलापैः एव धार्य्यते ॥ २९ ॥

तड़ागस्य सरोवरस्य पूरोत्पीड़े जलोच्छ्वासातिशये जाते परीवाहः प्रणाल्या

कुल्याखननेन वा जलनिःसारणम् प्रतिक्रिया प्रतीकारः। प्रणालीखननेन अतिरिक्त-जलराशिं निःसार्य्यवाप्यादिकं रक्ष्यते, अन्यथा स्फीताम्बुराशिः तटभूमिमवभज्य विद्रुतः सर्व्वतः आप्लावयेत्। एवं हृदयं चित्तं शोकेन इष्टनाशजन्यदुःखेन क्षोभे विलोड़ने जाते प्रलापैः रोदनादिभिः धार्य्यते ध्वंसात् निवार्य्यते ; अन्यथा शोकावेगेन आपूर्णं हृदयं स्तम्भितं सत् दुःखभारसहनेऽशक्तम् विकम्पं भवति। अतः प्रलापादिभिः शोकस्य तनूकरणेन हृदयमवस्थापयितव्यमिति फलितार्थः। तड़ागस्य रक्षणं हृदयस्य च सन्धारणमिति एकोऽपि धर्म्मः गम्यसाम्येवाक्यद्वये पृथङ् निर्द्दिशात् प्रतिवस्तू-पमालङ्कारः। प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः। एकोऽपिधर्म्मः सामान्यो यत्र निर्द्दिश्यते पृथगिति लक्षणात्।

पद्माकरस्तडागोऽस्त्रीकासारः सरसीसरः इत्यमरः। पूरस्य जलोच्छ्वासस्य उत्पीड़ः अतिशय इति पूरोत्पीडः। यद्वा पूरस्य कर्त्तुः उत्पीडः पीडनम् प्लावनमित्यर्थः। तस्मिन् भावे सप्तमी। परि + वह + घञ् = परीवाह। घञि उपसर्गस्य बहुलम-मनुष्ये इति उपसर्गस्य दीर्घः। If the affix घञ् be used in the करण-वाच्य then the word परीवाह would mean an aqueduct or a canal. If it be used in the भाववाच्य then the word would mean flowing out. प्रति + कृ + श ( भावे ) = प्रतिक्रिया – remedy. शोकस्य कर्त्तुः क्षोभः इति शोकक्षोभः। तस्मिन्। भावे सप्तमी। क्षुभ् + घञ् = क्षोभ। प्र + लप् + घञ् = प्रलाप।

बहुतरः प्रकारः विधा येषां तानि बहुतरप्रकाराणि। तथोक्तानि कष्टानि क्लेशाः यस्मिन् स बहुतरप्रकारकष्टः। जीवानां लोकः भुवनम् इति जीवलोकः जगत् संसारइत्यर्थः।

इदमिति। इदं विश्वम् अभियुक्तेन मनसा विधिवत् पाल्यम्। प्रियाशोकः घर्म्मः कुसुमम् इव जीवं क्लमयति। स्वयं त्यागं कृत्वा विलपनविनोदः अपि असुलभः। तत् अद्यापि हि उच्छ्वासः भवति रुदितं लाभः ननु ॥ ३० ॥

इदं विश्वं जगत् अभियुक्तेन अभिनिवेशवता मनसा विधिवत् यथाशास्त्रं पाल्यम् पालनीयम्। एतत् खलु दुष्करम् प्रियाशोकेन पीड्यमानहृदयो महता कृच्छ्रेण शोकं मन्दीकृत्य दुर्भरां जगतीधुरामयं वहति। घर्म्मः निदाघतापः सुकुमारं कुसुमं यथा ग्लपयति तथा अन्तर्हृदये निरन्तरमनुभूयमानः प्रियाशोकः सीताविरहदुःखं शनैः शनैः जीवनं क्षीणशक्तिकं ध्वंसोन्मुखञ्च विधत्ते। स्वयमात्मना त्यागं परिवर्ज्जनं कृत्वा विलपनेन उच्चैः रोदनादिना विनोदः शोकापनोदनं दुःखस्य लघूकरणमित्यर्थः असुलभः दुर्लभः। रोदनादिकं कर्त्तुं न शक्यते। आत्मनैव कृतसीतापरित्यागं तदर्थं रुदन्तञ्च मां विलोक्यलोकः किं वक्ष्यति इति महती त्रपा एव तत्र विषये परिपन्थिनी।

एवं विविधक्लेशबहुलं जीवनं नयत: अपि अस्य रामस्य अद्यापि इदानीमपि उच्छ्वास: प्राणसन्धारणं हि यस्मात् भवति तत् तस्मात् हेतो: रुदितमुच्चै: क्रन्दनं लाभ: महोपकार एव ननु अत्र अवधारणे। प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु इत्यमर:। शिखरिणीवृत्तम्।

पालयते: कर्म्मणि यत् पाल्यम्। पा + णिच् = पालि। विधिमर्हति इति विधिवत्। तदर्हमिति वति। अभि + युज + क्त ( कर्म्मणि ) = अभियुक्त, concentrated. क्रम् + ( णिच् ) + लट् ति = क्रमयति। मितां ह्रस्व: इति ह्रस्व:। सु + लभ् + खल् ( कर्म्मणि ) = सुलभ। उद् + श्वस् + घञ् = उच्छ्वास। रुद् + क्त ( भावे ) = रुदित। लभ् + घञ् = लाभ।

राम:। दलतीति। गाढोद्वेगं हृदयं दलति द्विधातु न भिद्यते। विकल: काय: मोहं वहति चेतनां न मुञ्चति। अन्तर्दाह: तनूं ज्वलयति भस्मसात् न करोति। मर्म्मच्छेदी विधि: प्रहरति जीवितं न कृन्तति ॥ ३१ ॥

गाढ़: भृश: उद्वेग: शोकव्यथा यस्मिन् तत् गाढ़ोद्वेगं नितरां वियोगव्यथापीड़ितं हृदयं मम चित्तं दलति अन्तर्विदीर्णमिव भवति ; द्विधा तु न भिद्यते द्विधा विभक्त न भवति इत्यर्थ: ; भिद्यते इति कर्म्मकर्त्तरि लट् ; यद्वा कर्म्मणि लट्। विकल: विह्वल: शोकेन क्षीण: काय: शरीरं मोहं मूर्च्छां वहति आपद्यते इत्यर्थ: चेतनां संज्ञां न मुञ्चति एकान्तत: न परिहरति। अन्त: हृदयाभ्यन्तरे दाह: सन्ताप: तनूं शरीरं ज्वलयन्ति प्रदीपयति भस्मसात् न करोति कार्त्स्न्येन भस्मीभावं न प्रापयति। मर्म्म छिनत्ति: य: स मर्म्मच्छेदी अरुन्तुदो विधिर्दैवं प्रहरति आहन्ति किन्तु जीवितं प्राणान् न कृन्तति न खण्डयति। निरन्तरम् असह्यां मर्म्मपीड़ामनुभवामि प्राणास्तु न निर्यान्ति। प्राणापाये सर्व्वेषामेव क्लेशानामवसानं स्यात्। निरवधिदु:सहक्लेशभोगात् मृत्यु: श्रेयानितिभाव:। हरिणीवृत्तम्। श्लोकेऽस्मिन् परिसंख्या अलङ्कार:। साच वाच्या।

उद् + विज + घञ् = उद्वेग। दलतिरकर्म्मक:। द्वि + धाच् = द्विधा। It is indeclinable, and an adverb. चि + घञ् = काय। निवासचितिशरीरोपसमाधानेष्वादेश्च क:। इति घञ चस्य च क:। चिती संज्ञाने इति धातो: भावे युच् चेतना। ण्यासश्रन्थो युच्। चेतयते। ज्वलयति, पक्षे ज्वालयति। ज्वलह्वल ह्मलनमामनुपसर्गाद्वा इति पाक्षिकी मित्संज्ञा। उपसर्गयोगे नित्यं ह्रस्व: प्रज्वलयति। भस्म + साति = भस्मसात्। विभाषा साति: कार्त्स्न्ये इति साति प्रत्यय:। कार्त्स्न्येन भस्म सम्पद्यते इति भस्मसाद् भवति। भस्मसात् is indeclinable. च्विप्रत्यय is also allowed optionally in this sense. भस्मीभवति।

मृ + मनिन् = मर्म्मन्। मर्म्मन् + छिद् + णिनि = मर्म्मच्छेदिन्। क्रन्द् + लट् ति = क्रन्दति ; चक्रन्द ; अक्रन्दीत्, क्रन्त:।

राम:। न किलेति। गृहे देव्या: स्थानं भवताम् न किल अभिमतं तत: शून्ये वने तृणमिव त्यक्ता न चापि अनुशोचिता। चिरपरिचिता: ते ते भावा: मां परिभ्रमयन्ति। इदमशरणै: एवं रुद्यते अद्यापि प्रसीदत॥ ३२।

हे पुरवासिन: जनपदवासिनश्च प्रकृतिवर्गा: गृहे मदीये सद्मनि देव्या: सीताया: स्थानमवस्थानं वास इति यावत् भवतां युष्माकं न अभिमतमनुमोदितं किल, परगृहोषितायाः सीताया: ग्रहणं यूयं नानुमतवन्त: इति मया दुर्मुखात् श्रुतम् तत: तस्मात् कारणात् शून्ये वने विजनेऽरण्ये तृणमिव तुच्छं द्रव्यमिव त्यक्ता विसृष्टा सा देवीति शेष:। न चापि सा अनुशोचिता ; परित्यक्तायाः तस्याः कृते पश्चात्ताप: न कृत: इत्यर्थ:। किन्तु अत्र पञ्चवट्यां चिरं परिचिता: इति चिरपरिचिता: दीर्घकालनिवासेन सीतासहवाससाक्षिण: ते ते सर्व्वे एव भावा: सरिच्छैलकाननादय: मां परिभ्रमयन्ति विमोहयन्ति व्याकुलीकुर्व्वन्ति इत्यर्थ:। नास्ति शरणं रक्षिता येषां ते अशरणा: शरणं गृहरक्षित्रोरिति यादव: असहाया: अस्मिन् विषये अशरणा: इति इदमशरणा: तै: उपायहीनै: अस्माभि: एवं इत्थम् रुद्यते। अद्यापि प्रसीदत यूयं प्रसन्ना भवत। क्षन्तव्यं युष्माभिर्ममेदं हृदयवैक्लव्यमित्यर्थ:। यद्वा इदानीमपि प्रसीदत ; युष्मदनुज्ञया सीता, मृता नचेत्, प्रत्यानीयते इति व्याख्येयम्। हरिणीवृत्तम्।

किलेति वार्त्तायाम्। भवतामित्यत्र कर्त्तरि षष्ठी अभिमतमित्यत्र वर्त्तमानविहितक्तयोगात्। क्तस्य च वर्त्तमाने इति कर्त्तरि षष्ठी। अनु + शुच् (णिच्) + क्त (कर्म्मणि) = अनुशोचित। शोचति ; शुशोच ; अशोचीत्। शुच्यति ; ...अशुचत्।

বাসন্তী। হে মহারাজ, আমি জিজ্ঞাসা করিতেছি "কুমার লক্ষ্মণের কুশল ত ?"

রাম। [স্বগত] "মহারাজ" এই সম্বোধনপদটি স্নেহশূন্য ; একমাত্র সৌমিত্রির কুশলপ্রশ্ন করিবার সময় অক্ষরগুলি বাষ্পোদয়হেতু অস্পষ্ট উচ্চারিত হইল: ইহাতে মনে হয় ইনি সীতার বৃত্তান্ত অবগত আছেন। [প্রকাশ্যে] হাঁ, কুমারের কুশল। [রোদন করিতে লাগিলেন]

বাসন্তী। হে দেব, আপনি এরূপ নিষ্ঠুর হইলেন কেন ?

সীতা। সখি বাসন্তি, তুমি কেন এরূপ বলিতেছ ? আর্য্যপুত্র সকলেরই নিকট প্রিয়বাক্যে সম্ভাষিত হইবার যোগ্য ; বিশেষতঃ আমার প্রিয়সখীর নিকট।

বাসন্তী। তুমি আমার প্রাণ, তুমি আমার দ্বিতীয় হৃদয়, তুমি আমার নয়নকৌমুদী ; তুমি আমার গাত্রে অমৃতধারা, ইত্যাদি শতশত চাটুবাক্যে সেই সরলপ্রাণাকে সন্তোষিত করিয়া তাহাকেই——অথবা থাক ইহার পর আর কিছু বলিবার প্রয়োজন নাই ॥২৬॥

[মূর্চ্ছিত হইয়া পড়িলেন]

রাম। উপযুক্ত স্থানেই বাক্যের নিবৃত্তি ও মূর্চ্ছা হইয়াছে। সখি, সমাশ্বস্ত হও সমাশ্বস্ত হও।

বাসন্তী। [ সমাশ্বস্ত হইয়া ] দেব, এরূপ অকার্য্যের অনুষ্ঠান করিলেন কেন ?

সীতা। সখি বাসন্তি ; বিরত হও।

রাম। লোকে যে সহ্য করে না।

বাসন্তী। সে কি কারণে ?

রাম। তাহারাই জানে কিছু।

তমসা। তাহাদিগকেই তিরস্কৃত করা কর্ত্তব্য।

বাসন্তী। হে নিষ্ঠুর, যশই আপনার প্রিয় ; ( কিন্তু ) ইহা অপেক্ষা ঘোরতর দুর্যশ কি হইতে পারে ? হে প্রভো, বলুন, দুর্গম অরণ্যে সেই হরিণনয়নার কি দশা ঘটিয়াছে ? আপনি সে বিষয়ে কি মনে করেন ? ॥ ২৭ ॥

সীতা। সখি বাসন্তি, তুমিই নিষ্ঠুর ও কঠোর যেহেতু শোকসন্তপ্ত আর্য্যপুত্রকে এইরূপে সন্তাপিত করিতেছ।

তমসা। প্রণয় ও শোকে এইরূপ বলিতেছে।

রাম। সখি, এ বিষয়ে কি মনে করিব ?

ভয়ব্যাকুল একবর্ষবয়স্ককুরঙ্গের ন্যায় চপলায়তনেত্রা, স্পন্দমানগর্ভভারে অলসগমনা জানকীর কোমলতরুণমৃণালকল্পা জ্যোৎস্নাময়ী অঙ্গলতিকা ক্রব্যাদ্‌গণ নিশ্চয়ই গ্রাস করিয়াছে ॥ ২৮ ॥

সীতা। আর্য্যপুত্র, আমি জীবিত আছি, আমি জীবিত আছি।

রাম। হা প্রিয়ে জানকি, তুমি কোথায় ?

সীতা। হায় ! আর্য্যপুত্রও উচ্চৈঃস্বরে রোদন করিতেছেন।

তমসা। বৎসে, উহা এই অবস্থার উপযুক্তই বটে। দুঃখিতব্যক্তিদিগের দুঃখপ্রশমন করা কর্ত্তব্য। কারণ——

গভীর জলাশয়ের জলোচ্ছ্বাস অতিমাত্র বৃদ্ধিপ্রাপ্ত হইলে (প্রণালীমুখে) জল নির্গমন করাই প্রতীকার। হৃদয় গুরুশোকে ক্ষুভিত হইলে উচ্চৈঃস্বরে প্রলাপাদি করিয়া উহাকে রক্ষা করিতে হয় ॥ ২৯ ॥

বিশেষতঃ রামচন্দ্রের জীবনধারণ নানাবিধক্লেশপরিপূর্ণ।

উঁহাকে অভিনিবিষ্টচিত্তে যথোচিতভাবে এই ভূমণ্ডল পালন করিতে হয়। নিদাঘসন্তাপ কুসুমকে যেরূপ বিশুষ্ক করে, প্রিয়ার বিরহসন্তাপ উঁহার জীবনকে সেইরূপ পরিম্লান করিতেছে। বিলাপদ্বারা দুঃখপ্রশমন করা তাঁহার পক্ষে সুলভ নহে, কারণ উনি স্বয়ংই ত্যাগ করিয়াছেন। এখনও যে উনি জীবিতসন্ধারণ করিতে পারিতেছেন, সে কেবল বিলাপের জন্য ; এইজন্য রোদন মহোপকারক ও লাভই বটে ॥ ৩০ ॥

রাম। অহো কি কষ্ট ! কি যন্ত্রণা !

গাঢ় উদ্বেগে পরিপূর্ণ হৃদয় বিদলিত হইতেছে, দ্বিধা ভিন্ন হইতেছে না। বিকল ও পরিক্ষীণ দেহ মূর্চ্ছা প্রাপ্ত হইতেছে একেবারে চৈতন্য পরিত্যাগ করিতেছে না। অন্তর্দাহ

গাত্রকে সন্তাপিত করিতেছে ভস্মীভূত করিতেছে না। মর্ম্মচ্ছেদী বিধি প্রহার করিতেছেন জীবনসূত্র ছিন্ন করিতেছেন না ॥ ৩১ ॥

সীতা। এইরূপই বটে।

রাম। হে পুরবাসিবৃন্দ, হে জনপদবাসিগণ,

আমার গৃহে সীতাদেবীর অবস্থান আপনাদিগের অভিমত হয় নাই (ইহা লোক-পরম্পরায় অবগত হইয়া) তাঁহাকে নির্জ্জন অরণ্যে তৃণের ন্যায় ত্যাগ করিয়াছি; এবং তাঁহার জন্য অনুশোচনাও করি নাই। চিরপরিচিত এই সকল স্থান ও তদানুষঙ্গিক ভাব নিচয় আমাকে বিভ্রান্ত করিতেছে। এই বিষয়ে উপায়ান্তররহিত হইয়া আমি এইরূপে রোদন করিতেছি; আপনারা এখনও প্রসন্ন হউন ॥ ৩২ ॥

*Vasanti.*—Mighty monarch, I do ask you :—"Is it well with Prince Lakshmana"?

*Rama.*—[*To himself.*] Oh! This form of address couched in the words "mighty monarch" is cold and lacks affection. The query about the welfare of *Saumitri* alone is faltering in its accents and letters owing to the rise of tears. I think therefore that she is aware of the incidents regarding Sita. [*Aloud.*] Yes, it is all right with the Prince [*weeps.*]

*Vasanti.*—O my lord, why have you become (so) cruel?

*Sita.*—Dear friend, Vasanti, why do you speak in this manner? My husband deserves to be addressed in sweet and agreeable words by all, especially by my dear friend.

*Vasanti.*—"Thou art my life," "thou art my second heart," "thou art the moon-shine to my eyes," "thou art the sweet ambrosia to my body." With such like hundreds of flattering speeches you have fondled that simple-hearted lady, and her again—or peace, what is the good of any further words. (26). [*She swoons*].

*Rama.*—The stop of her speech and the fainting fit have taken place at the proper moment. Take heart, my friend, take heart.

*Vasanti*—[*Recovering herself*] Why has then your lordship done such an unworthy act?

*Sita.*—Stop, my friend Vasanti.

*Rama.*—Because the people would not tolerate it.

*Vasanti.*—And that for what reason?

*Rama.*—They themselves know something.

*Tamasa.*—It is fair that they should be rebuked.

*Vasanti.*—O ! You cruel one, it is fame that is indeed dear to you. But what can be more dreadfully scandalous than this ? What became of the gazelle-eyed Sita in the wilderness ? Tell, my lord, O tell me, what you think of it. (27).

*Sita.*—It is you, my dear Vasanti, who are cruel and hard-hearted, since you thus inflame my husband already burning with grief.

*Tamasa.*—It is her affection and grief that speak thus.

*Rama.*—What there is, my friend, to be thought of in this matter ?

Surely has the body,—gentle as a creeper, almost like a soft and young lotus-stalk, and made, as it were, of moon-light,—of her with eyes restless like those of a startled fawn one year old, and languid with the burden of her throbbing fœtus, been devoured by beasts of prey. (28).

*Sita*.—I am alive, my husband, I am alive.

*Rama.*—O my dear !

*Sita.*—Alas !

*Tamasa.*—O my child, it is quite suited to the occasion. Sorrowful persons must extinguish their grief by giving vent to it. For,—

When the mass of water is abundant and overflowing in a tank, the remedy is to let out the water by means of a canal. So when the heart is agitated with grief it is sustained by wailings alone.

It is specially the case with Rama to whom life has become full of sufferings of various kinds. (29).

This world has to be protected duly with a careful and attentive mind, while the grief of separation from his beloved has been withering his life like summer heat causing a flower to fade. It is not possible for him to beguile his sorrow by lamentation, after having himself discarded her. Therefore weeping is indeed a profit to him, since he is breathing still. (30).

*Rama.*—O ! what a woe ! what a pain !

My heart full of intense grief is breaking, but it is not being

split into twain. My enfeebled body falls into a swoon, but it does not give up consciousness altogether. The anguish within burns my body, but it does not reduce it to ashes. Cruel fate cutting to the quick strikes me, but it does not cut asunder my life (31).

*Sita.*—It is just so.

*Rama.*—O, Ye citizens and urban people, the stay of the queen in my house, it was reported, was not approved by you, therefore I abandoned her in a dreary and lonely wilderness just like a straw, and did not mourn for her. But all these objects of a long acquaintance do now move and upset me. Helpless in this matter I do weep thus. O! Be gracious now (and forgive me). (32).

तमसा। शोकः एव सागरः इति शोकसागरः दुस्तरः अपारः शोकः इत्यर्थः। तस्य आपूरणम् परिपूर्णता आभोगः इत्यर्थः। अतिगम्भीरम् अप्रमेयमापूरणम्। शोकसागरः निरतिशयं परिपूर्ण इत्यर्थः।

वासन्ती। अतिक्रान्ते अतीते विषये धैर्य्यं चित्तस्य स्थैर्य्यम् अवलम्ब्यताम् आश्रीयताम्। गतस्य शोचना नास्ति इति कृत्वा चित्तमवष्टभ्य।

रामः। किमुच्यते धैर्य्यमिति—किमहं सत्त्वोत्साहहीनः अधीरः। नहि नहीति तात्पर्य्यम्।

देव्येति—देव्या शून्यस्य जगतः द्वादशः परिवत्सरः; सीतेति नामापि लुप्तम्। रामः च न जीवति इति न॥ ३३॥

देव्या सीतया शून्यस्य हीनस्य जगतः विश्वस्य द्वादशः परिवत्सरः वर्त्तते। सीता इति नाम अपि लुप्तम् अन्तर्हितम्। सीतायाः नामापि लोकैर्विस्मृतम्। तथापि रामः न जीवति इति न अपितु जीवत्येव। सीतया विरहितः अहं द्वादश वत्सरान् प्राणान् धारयामि; नतु तच्छोकेन मृतः किमिदं मम लोकसीमातिवर्त्तिनो धैर्य्यस्य लक्षणं न। द्वादशानां पूरणः इति द्वादशः। पूरणे डट्। चशब्दः समुच्चयं विरोधञ्च द्योतयति।

सीता। आर्य्यपुत्रस्य एभिर्वचनैरहं मोहिता विमूढतां नीता। सम्प्रतिपत्तिं न लभे। मूर्च्छा मामाविशतीव।

तमसा। नैता इति।स्नेहार्द्राः शोकदारुणाः एता वाचः प्रियतमाः न। एताः सविषाः मधुनः धाराः त्वयि श्च्योतन्ति॥ ३४॥

स्नेहेन प्रेम्णा आर्द्राः सिक्ताः शोकेन दारुणाः निष्ठुराः हृदयविदारिकाः एताः पूर्व्वोक्तप्रकाराः वाचः प्रियतमाः न एकान्ततो हृद्याः न भवन्ति। एताः वाचः सविषाः

विषसम्पृक्ताः मधुनः क्षौद्रस्य धाराः त्वयि श्चोतन्ति क्षरन्ति। यथा मधुधाराः मधुरस्वभावत्वात् प्रियास्वादा अपि विषसम्पर्कात् संज्ञाविलोपिन्यः भवन्ति, तथा तव पत्युरिमाः वाच्यः अतिगभीरस्नेहस्यन्दिन्यः अपि दुःसहशोकप्रकाशकत्वात् तव हृदये कामपि वेदनां जनयन्त्यो मूर्च्छोपक्रमं विदधते। अत्र उत्तरार्द्धे रूपकालङ्कारः। श्चुतिर क्षरणे इति धातोः लटि श्चोतति। चुश्चोत ; अश्चुतत्, अश्चोतीत्।

रामः। यथेति। अन्तः प्रत्युप्तम् तिरश्चीनम् अलातशल्यं यथा सविषः दंशश्च यथा तथा तीव्रः मर्म्माणि क्रन्तन् हृदि निषक्तः, इति शेषः शोकशङ्कुः मया किं न सोढ़ः खलु ॥ ३५ ॥

अन्तः अन्तर्हृदये प्रत्युप्तं निखातं तिरश्चीनं वक्रं अलातशल्यम् ज्वलदुल्मुकनिभं दुःसहयन्त्रणाप्रदं शल्यं यथा, सविषः विषसहितः अन्तःशरीरे विषं विसर्पयन् दंशः सर्पादिदंशनं यथा तथा तीव्रः अत्युग्रः मर्म्माणि जीवस्थानानि क्रन्तन् छिन्दन् हृदि हृदये प्रविष्टः शोकशङ्कुः निशितायसकीलसङ्काशः शोकः मया किं न सोढ़ः खलु, अपितु सोढ़ एव। उपजातिः वृत्तम्। मालोपमानामालङ्कारः पूर्व्वार्द्धे। उत्तरस्मिन अर्द्धे उपमालङ्कारः। अथ न स्त्री स्यादङ्गारोऽलातमुल्मुक मित्यमरः।

अलातं शल्यमिव इति अलातशल्यम्। अलातमेव शल्यमिति वा विग्रहः न लातमिति अलातम। ला + क्त = लात। प्रति + वप् + क्त ( कर्म्मणि ) = प्रत्युप्त। वपति ; उवाप ; अवाप्सीत्। तिरस् + अञ्च् + क्विन् = तिर्य्यञ्च्। तिरसस्तिर्य्यलोपे इति तिरसः तिरि इत्यादेशः। तिर्य्यच् + ख ( स्वार्थे ) = तिरश्चीन। विभाषाञ्चेर दिक्स्त्रियामिति खः। सह + क्त ( कर्म्मणि ) = सोढ। सहिवहोरोदिति उपधास्वरस्य ओत्वम्।

सीता। पुनः भूयोऽपि आयासं क्लेशं करोति या सा आयासकारिणी क्लेशदायिनी। आङ् + यस् + घञ् = आयास। पूर्व्वं रावणकर्तृकहरणात् परं क्लेशदायिनी अभवम्। इति द्योतयितुं पुनर्ग्रहणम।

रामः। नास्ति कम्पः चलनं यस्मिन् तद् यथा तथा निष्कम्पं निश्चलं यथा तथा स्तम्भितं पर्य्यवस्थापितं धैर्य्यमापादितम् अन्तःकरणं चित्तं येन तस्य निष्कम्पस्तम्भितान्तःकरणस्य मम अयम् आवेगः चेतसः संक्षोभःसंस्तुतानि परिचितानि तानि तानि प्रियाणि वस्तूनि तेषां दर्शनात् विलोकनात् उद्दामः उद्धतः अनियन्त्रणः दुर्व्वारः इत्यर्थः जातः। सम् + स्तु + क्त ( कर्म्मणि ) = संस्तुत। संस्तवः स्यात् परिचयः। स्तम्भ् + (णिच्) + क्त ( कर्म्मणि ) = स्तम्भित।

तथाहीति। मया लोलोत्तोलक्षुभितकरणोज्जृम्भणस्तम्भनार्थं यः यः यत्नः कथमपि अन्तः आधीयते, कोऽपि चेतोविकारः अप्रतिहतरयः तोयस्य ओघः सैकतं सेतुम् इव तं तं भित्त्वा भित्त्वा बलात् प्रसरति ॥ ३६ ॥

लोलं चञ्चलम् उल्लोलमत्युद्धतं च यथा तथा क्षुभितानि आलोड़ितानि व्याकुलानि इति अर्थः यानि करणानि इन्द्रियाणि तेषां उज्जृम्भणस्य उद्रेकस्य उच्छृङ्खलत्वस्य इत्यर्थः स्तम्भनार्थं निरोधार्थं, यद्वा लोलानि च तानि उल्लोलानि चेति लोलोल्लोलानि अतिचपलानि क्षुभितानि यानि करणानि तेषाम् उज्जृम्भणस्तम्भनार्थम्, अथवा लोलाः चञ्चलाः ये उल्लोलाः महान्तः ऊर्म्मयः महत्सूर्म्मिषु उल्लोलकल्लोलौ इत्यमरः ते इव क्षुभितानि इति लोलोल्लोलक्षुभितानि, उपमानानि सामान्यवचनैरिति समासः, प्रचलन्महोर्म्मिचपलानि यानि करणानि तेषां चापल्यनिरोधार्थं, करणस्य इति पाठे लोलोल्लोलक्षुभितस्य करणस्य शोकस्य उज्जृम्भणं प्रादुर्भावः तस्य स्तम्भनार्थं प्रतिकारार्थं इति व्याख्येयम् मया अस्मद्ङ्दये यः यः यत्नः प्रयासः उद्यमः कथमपि कृच्छ्रेण आधीयते क्रियते, कोऽपि अनिर्व्वाच्यप्रभावः दुर्व्वारगतिरित्यर्थः चेतोविकारः हृदयावेगः अप्रतिहतः अनिवारितः रयः वेगः यस्य सः अप्रतिहतरयः दुर्निवारवेगः तोयस्य जलस्य ओघः पूरः राशिरित्यर्थः सैकतं सिकताभिः निर्म्मितं सेतुम् आलिमिव तम् तम् प्रयत्नं भित्त्वा भित्त्वा विफलीकृत्य बलात् प्रसरति वहिर्निर्गमी भवति इत्यर्थः। सर्व्व एव मे प्रयत्नो व्यर्थीभवति। उच्छलदम्भोवेगनिरोधने सैकतसेतुबन्धनमिव उद्दामशोकसंवेगमध्यमानेन्द्रियसंस्तम्भने मे प्रयासः अकिञ्चित्करीभवति इत्यर्थः। मन्दाक्रान्तावृत्तम्। उपमालङ्कारः।

उद् + जृम्भ + ल्युट् = उज्जृम्भण। जृम्भते ; जजृम्भे ; अजृम्भिष्ट। जृम्भितः। जृम्भ primarily means to yawn, to gape. स्तम्भ् + ल्युट् = स्तम्भन। स्तम्भते, स्तभ्नाति, स्तभ्नोति ; अनेन स्तभ्नुते सर्व्वः स्तभ्नात्यन्यश्च विद्यया। अनविद्यासक्तोऽपि न स्तभ्नोति स सज्जनः। कविरहस्यम्। तस्तम्भ, तस्तम्भे अस्तम्भीत्, अस्तभत् अस्तम्भिष्ट। स्तम्भितः, स्तब्धः। आङ् + धा + लट् (कर्म्मणि) = आधीयते। भिद् + क्त्वा = भित्त्वा। भित्त्वा इत्यत्र नित्यवीप्सयोरिति नित्यार्थे विरुक्तिः। यो यो यत्नः तम् तम् इत्यत्र वीप्सार्थे द्विरुक्तिः। नित्य means intensity or reiteration of an act. सिकता + अण् = सैकत। सिकताशर्कराभ्याञ्चेति अण्। सिकता is a feminine base and is declined in the plural number. सि + तुण् (उणादि) = सेतु। बलादिति हेतौ पञ्चमी यद्वा यवर्थे पञ्चमी।

सीता। दुर्व्वारः निवारयितुमशक्यः दारुणः भीषणः आरम्भः उपक्रमः यस्य तेन दुर्व्वारदारुणारम्भेण अप्रतिकार्य्यभीषणप्रसरेण इत्यर्थः दुःखसंवेगेन शोकावेगेन, प्रस्फुरितं उत्तरलीभूतं नवीभूतमित्यर्थः निजं दुःखं यस्य तत् प्रस्फुरितनिजदुःखम् मम हृदयं वेपते इत्यर्थः।

वासन्ती। कष्टं कृच्छ्रमापन्नः प्राप्तः देवः। अन्यतः विषयान्तरे क्षिपामि

चित्तं सन्धारयामि इत्यर्थः। जनस्थानस्य भागाः अंशाः तेषां अवलोकनेन आत्मानं विनोदयतु।

सीता। सन्दीपनानि शोकस्य संवर्द्धनानि वस्तूनि विनोदनस्य दुःखनिरासस्य उपायाः साधनानि इति प्रियसखी वासन्ती मन्यते। अहो भ्रान्तिरस्याः।

वासन्ती। अस्मिन्निति। त्वम् तन्मार्गदत्तेक्षणः अस्मिन् एव लतागृहे अभवः। सा गोदावरीरोधसि हंसैः कृतकौतुका चिरम् अभूत्। आयान्त्या तया त्वां परिदुर्मनायितमिव वीक्ष्य कातर्य्यात् अरविन्दकुड्मलनिभः मुग्धः प्रणामाञ्जलि बद्धः॥२७॥

त्वम् तस्याः सीतायाः मार्गे पथि दत्ते ईक्षणे नयने येन स तन्मार्गदत्तेक्षणः कदा सा प्रत्यागमिष्यति इति औत्सुक्येन तस्या आवृत्तिपथं विलोकयन् अस्मिन् एव लतागृहे वल्लीनिकुञ्जे अभवः आसीः। सा जानकी गोदावर्य्याः रोधसि तटे हंसैः कृतं जनितं कौतुकं कुतूहलं हर्षः इत्यर्थः यस्याः सा कृतकौतुका जनितौत्सुक्या चिरं दीर्घकालं अभूत् स्थितवती। ततः आयान्त्या प्रतिनिवर्त्तमानया तया त्वां परिदुर्मनायितम् इव, खेदाकुलितचित्तमिव वीक्ष्य दृष्ट्वा कातर्य्यात् दुःखव्याकुलतया अरविन्दस्य पद्मस्य कुड्मलेन कोरकेण सदृशः इति अरविन्दकुड्मलनिभः कमलकोरकतुल्यः मुग्धः मनोहरः प्रणामस्य अञ्जलिः प्रसादनार्थमञ्जलिः बद्धः विरचितः। अजानत्या मया अपराधः कृतः क्षमस्व नाथ ममापराधम् इति अनक्षरं व्यञ्जयन्ती शिरसि अञ्जलिपुटं न्यदधात्। शार्दूलविक्रीडितं वृत्तम्। उपमालङ्कारः। रुधाङ्कि जलमिति रोधः कूलम्। रुधेरसुन्। कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु इत्यमरः। कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलमित्यमरः। रम्यवस्तुसमालोके लोलता स्यात् कुतूहलमित्यालङ्कारिकाः।

आ+या+शतृ स्त्रियां आयान्ती, आयाती। आच्छीनद्योरिति वैभाषिकःनुम्। परिदुःस्थितं मनो यस्य स परिदुर्मनाः। परिदुर्मना इव आचरति इति परिदुर्मनायते। कर्त्तुः क्यङ् सलोपश्च। इति क्यङ् सलोपश्च। परिदुर्मन+य=परिदुर्मनाय। अकृत्सार्वधातुकयोरितिदीर्घः। "सलोपविधौ अपि वा ग्रहणं सम्बध्यते, व्यवस्थितविभाषा च भवति।"

"ओजसप्सरसो नित्यमितरेषां विभाषया।"

तेन च परिदुर्मनायते, परिदुर्मनस्यते इति रूपद्वयं सम्भवति।

परिदुर्मनाय is an intransitive verb, and admits of क्त in the active voice. अर+विद+श=अरविन्द। अरविन्दस्य कुड्मलेन सदृशः इति अरविन्दकुड्मलनिभः इति नित्यसमासः अस्वपदविग्रहश्च। अतएव अमरः स्युरुत्तरपदेत्वमी निभसङ्काशनीकाशप्रतिकाशोपमादयः। कुड्मलोमुकुलोऽस्त्रियामित्यमरः। प्रणामस्य अञ्जलिः इत्यत्र अश्वघासादिवत् तादर्थ्यषष्ठ्या समासः। ईषत् तरति इति

कातरा। ईषदर्थे कुस्थाने कादेश:। कु+तृ+अच्। स्त्रियां टाप्। कातराया: भाव: इति कातर्य्यम् गुणवचनादित्वात् ष्यञ्। तत: ङसौ पञ्चमी।

सीता। हृदयस्य मर्म्मणि गूढं प्रच्छन्नं निहितं यत् शल्य तस्य घट्टनै: सञ्चालनै: पुन: पुन. मां मम स्वामिन च व्यथयसि।

राम:। चण्डि कोपने, चण्डस्त्वत्यन्तकोपन: एवंविधस्यापि मम दर्शनेन ते मयि अनुकम्पा न जायते अत: अतिकोपनासि खलु।

हा हेति। हा हा देवि हृदय स्फुटति, देहबन्ध: स्रंसते, जगत् शून्यं मन्ये, अविरतज्वालम् अन्त: ज्वलामि ; सीदन् विधुर. अन्तरात्मा अन्धे तमसि मज्जति इव। मोह: विष्वक् स्थगयति, मन्दभाग्य: कथ करोमि ॥ ३८ ॥

हा इति खेदे अव्ययम्, हे देवि तव शोकेन मम हृदयं स्फुटति दीर्यति ; देहस्य बन्ध: शरीरस्य अवयवसंयोगस्थलमित्यर्थ: स्रंसते विशीर्णो भवति मांसपेश्यादिसहितानि हस्तपादादीनि शिथिलबन्धनानि गलितानीव भवन्ति। जगदिदं शून्य विजनं सर्व्वथा अवास्तवेय मन्ये अविरता अश्रान्ता ज्वाला शिखासन्तति यस्मिन् कर्म्मणि तद् यथा तथा अविरतज्वालम् अन्तर्हृदये ज्वलामि, सन्तापमनुभवामि इत्यर्थ:। सीदन् क्लेशपरम्परानुभवेन नितरां दीन: विधुर: कातरश्च मे अन्तरात्मा अन्धयति यत् तत् अन्धं तस्मिन् तमसि, अन्धतमसे मज्जति इव निमग्नो भवति। मोह: मूर्च्छाविष्वक् समन्तात् स्थगयति, आच्छादयति चैतन्यशक्तिं तिरोधापनेन वस्तुदर्शनं प्रतिबध्नाति। मन्दभाग्य: दुर्भाग्य: अहं कथं करोमि प्राणधारणं करोमि। मन्दाक्रान्ता वृत्तम् उत्प्रेक्षालङ्कार:। स्रन्स् स्रट्ते—स्रंसते। सस्रंसे ; अस्रंसिष्ट, अस्रसत्। स्रस्त:। सद—सीदति ; ससाद ; असदत्। सन्न:। मस्ज्—मज्जति ; ममज्ज ; अमाङ्क्षीत्। मग्न:। वि+सु+अच्+क्विन्=विष्वक्। It is indeclinable and is used here as an adverb. स्थग means to cover or veil ; it is a चुरादि root.

सीता। सकल: समग्र: जीवलोक: जगत् इत्यर्थ: तस्य मङ्गलानि तेषां आधार: आश्रय: इति सकलजीवलोकमङ्गलाधार:। जीवम् य: शश्वत् उपप्लवेभ्य: प्रजा: पितेव पाति इत्यर्थ:। तस्य। संशयितं धरिष्यते न वेति सन्देहकोटिमाश्रितं जीवित प्राणा: यस्मिन् स संशयितजीवित: अतएव दारुण: भीषण: इति संशयितजीवितदारुण:। विशेषणयो: कर्म्मधारयनिर्व्वाह:। दशाया: अवस्थाया: परिणाम: विपाक: इति दशापरिणाम: मूर्च्छोपगम: इत्यर्थ:।

तमसा। तव हस्तस्य स्पर्शेन रामभद्रस्य मूर्च्छा अपनीता भविष्यति। पाणिना स्पर्श: इति पाणिस्पर्श:। करणतृतीयया समास:। सञ्जीवनस्य प्रत्युज्जीवनस्य उपाय:।

वासन्ती। सम्भावय, शुश्रूषस्व इत्यर्थः। न उच्छ्वसिति संज्ञां न प्रतिलभते।

सीता। हृदि ललाटे च इत्युभयत्र अवच्छेदे सप्तमी।

वासन्ती। प्रत्यापन्ना पुनः प्राप्ता चेतना येन स प्रत्यापन्नचेतनः। प्रतिलब्धसंज्ञः।

रामः। आलिम्पन्निति संस्पर्शः पुनरपि अकस्मात् अन्तर्वा बहिरपि वा शरीरधातून् अमृतमयैः प्रलेपैः आलिम्पन् इव जीवयन् आनन्दात् अपरविधं मोहं तनोति ॥३९॥

संस्पर्शः स एव वैदेहीहस्तस्पर्शः पुनरपि भूयोऽपि अकस्मात् अतर्कितं यथा तथा अन्तर्वा बहिरपि वा अन्तःस्थितान् बहिःस्थितान् अपि सर्व्वानेव शरीरस्य देहस्य धातून्-पुष्टिकारिणः त्वङ्मेदोमज्जास्थिप्रभृतीन् देहपोषणपदार्थान् अमृतमयैः प्रलेपैः आलिम्पन् इव सुधारससीतला निषिञ्चन्निव जीवयन् उच्छ्वासयन् चैतन्यं सम्पादयन् इत्यर्थः आनन्दात् आह्लादसमुत्पादात् अपरा विधा यस्य सः अपरविधः तं अन्यप्रकारं मोहम् आनन्दातिरेकजन्यां मूर्च्छां जड़तामित्यर्थः तनोति विस्तारयति, कुरुते इत्यर्थः। उत्प्रेक्षालङ्कारः। प्रहर्षिणी वृत्तम्।

आङ्+लिप्+शतृ=आलिम्पत्। लिम्पति; लिलेप; अलिपत्। लिम्पते; लिलिपे; अलिप्त। लिप्तः। घञि लेपः। नञ्+मृ+क्त=अमृत। अमृत+मयट्=अमृतमय। तत्प्रकृतवचने मयट्। दधन्ति पुष्णन्ति इति धातवः। धा+तुन् (उणादि)। शॄ+ईरन्=शरीर। वि+धा+अङ्=विधा। सम्+स्पृश्+घञ्=संस्पर्श। [आनन्देन निमीलिते मुद्रिते अक्षिणी नयने यस्य स आनन्दनिमीलिताक्षः। बहुब्रीहौ अक्षिशब्दात् षच्। स्त्रियां आनन्दनिमीलिताक्षी। नि+मील+क्त (कर्म्मणि)=निमीलित।]

वासन्ती। मर्म्मणः जीवस्थानस्य छेदेन कर्त्तनेन दारुणाः इति मर्म्मच्छेददारुणाः येषां श्रवणेन हृदयादीनि जीवस्थानानि निकृत्तानीव भवन्ति। तैः प्रलापैः असम्बद्धैः उन्मत्तव्याहारैः प्रियसख्याः सीतायाः दुःखेन दग्धां सन्तप्तां अरुन्तुदां पीड़ामनुभवन्तीमित्यर्थः हतभाग्यां मां किमिति दहसि व्यथयसि इत्यर्थः। एषां प्रलापानां श्रवणेन तव प्राणलोपाशङ्का हृदये समुत्पद्यते; तदनु जीवितनाशशङ्कापि समुदेति इति तात्पर्य्यम्।

सीता। अपसर्त्तुम् अपयातुमन्यतोगन्तुमिच्छामि। चिरसद्भावेन गाढ़ानुरागेण मधुरः शीतलश्च तेन आर्य्यपुत्रस्य स्पर्शेन गात्रपरामर्शेन दीर्घं बहुकालव्यापिनं दुःसहमपि सन्तापं विरहव्यथां झटिति शीघ्रं स्पर्शक्षणे एव हरता वज्रलेपेन कालान्तरस्थायिदृढ़लेपविशेषेण उपनद्धः बद्धः संयोजित इत्यर्थः तथोक्तः इव मे हस्तः स्विद्यन् घर्म्माक्तः निःसहं कातरं यथा तथा विपर्य्यस्तः जड़तामासादितः विवशः सञ्चलनादिव्यापारे अक्षमः जातः कम्पतेच। सन् भावः इति सद्भावः अनुरागातिशयः

ভ্যর্থ:। উপ + নহ্ + ক্ত (কর্ম্মণি) = উপনদ্ধ। নহ্যতি, নহ্যতে ; ননাহ, নেহে ; অনাৎসীৎ, অনদ্ধ। স্থিদ্ + ঘঞ্ = স্থিয়ৎ। স্থিদ্যতি ; সিষ্বেদ ; অস্বিদৎ। স্বিন্ন:। নিস্ + সহ্ + অচ্ = নি:সহ। বি + পরি + অস্ + ক্ত (কর্ম্মণি)= বিপর্য্যস্ত। বজ্রলেপ is a kind of fast cement ; it is prepared in the following manner :—

আমং তিন্দুকমামং কপিত্থকং পুষ্পমপি চ শাল্মল্যা:।
বীজানি শল্লকীনাং ধন্বনবল্কো বচা চেতি ॥
এতৈ: সলিলদ্রোণ: ক্বাথয়িতব্যোঽষ্টভাগশেষশ্চ।
অবতার্য্যোঽস্য চ কল্কো দ্রব্যৈরেতৈ: সমনুযোজ্য: ॥
শ্রীবাসকরসগুগ্গুলুভল্লাতককুন্দুরুকসর্জ্জরসৈ:।
অতসীবিল্বৈশ্চ যুত: কল্কোঽয়ং বজ্রলেপাখ্য: ॥
প্রাসাদহর্ম্ম্যবলভীলিঙ্গপ্রতিমাসু কুড্যকূপেষু।
সন্তপ্তো দাতব্যো বর্ষসহস্রায়ুতস্থায়ী ॥

বৃহৎসংহিতা। সপ্তপঞ্চাশোঽধ্যায়:।

তমসা। ইঁহার শোকসাগর অতি গভীরভাবে আপূর্ণ হইয়া উদ্বেলিত হইয়াছে।

বাসন্তী। দেব, অতীত বিষয়ে (শোক করিবেন না) ধৈর্য্য অবলম্বন করুন।

রাম। সখি, কি বলিলে ধৈর্য্য ? সীতাদেবীবিরহিত জগতের আজ দ্বাদশ বৎসর উপস্থিত। সীতা এই নামও বিলুপ্ত হইয়াছে। অথচ রাম জীবিত নাই এমন নহে। ॥৩৩॥

সীতা। আর্য্যপুত্রের এই বাক্যে আমি মোহিত হইয়াছি।

তমসা। হাঁ বৎসে ; ইহা হইতে পারে ;

স্নেহসিক্ত শোকদারুণ এই বাক্যগুলি একান্ত প্রিয় ও মধুর নহে। এগুলি বিষমিশ্রিত মধুধারা তোমার উপরি বর্ষিত হইতেছে ॥ ৩৪ ॥

রাম। সখি বাসন্তি, অন্ত:শরীরে প্রবিষ্ট বক্রাকৃতি জলদঙ্গারশল্যের ন্যায়, অথবা সবিষ-দংশনের ন্যায় মর্ম্মচ্ছেদী, হৃদয়ে নিষক্ত তীক্ষ্ণ শোকশঙ্কু কি আমি সহ্য করি নাই ? ॥ ৩৫ ॥

সীতা। আমি এমনই মন্দভাগিনী যে পুনর্ব্বার আর্য্যপুত্রের ক্লেশের কারণ হইয়াছি।

রাম। আমার অন্ত:করণ অতি দৃঢ়ভাবে স্তম্ভিত ও নিয়ন্ত্রিত হইলেও পূর্ব্ব পরিচিত এই প্রিয়বস্তুসমূহ দর্শনে অদ্য আমার এইরূপ উদ্দাম আবেগ উপস্থিত হইয়াছে কারণ—

অতিচঞ্চল মহোর্ম্মিমালার ন্যায় ক্ষুভিত অন্ত:করণের আবেগ নিরোধনার্থ আমি অতিক্লেশে অন্তরে যে যে যত্ন ও উদ্যম করিতেছি, তৎসমস্ত যত্নই বলপূর্ব্বক পুন: পুন: ব্যর্থ করিয়া কেমন এক প্রবল চিত্তবিকার বাহিরে প্রকাশ হইয়া পড়িতেছে। যেন অপ্রতিহতবেগ জলস্রোত: সৈকতসেতু বিধ্বস্ত করিয়া প্রধাবিত হইতেছে ॥ ৩৬ ॥

সীতা। আর্য্যপুত্রের এই দারুণ দুর্ব্বার শোকাবেগে আমারও শোক প্রস্ফুরিত ও উদ্রিক্ত হইয়া, আমার হৃদয় কম্পিত করিতেছে।

বাসন্তী। [ স্বগতঃ ] দেব রামচন্দ্র অতি বিপন্ন হইয়া পড়িলেন ; অতএব ইঁহার চিত্ত অন্যদিকে আকৃষ্ট করি! [ প্রকাশ্যে ] চিরপরিচিত এই জনস্থানপ্রদেশগুলি অবলোকন করিয়া আপনি চিত্ত বিনোদন করুন।

রাম। তাহাই হউক। [ উত্থান করিয়া কয়েক পদ গমন করিলেন ]।

সীতা। যাহা দ্বারা দুঃখ সন্দীপিত হইবে, প্রিয়সখী তাহাই দুঃখবিনোদনের উপায় বলিয়া মনে করিতেছেন।

বাসন্তী। দেব, আপনি সীতার আগমনের পথে দৃষ্টিনিক্ষেপ করিয়া এই লতাগৃহে উপবিষ্ট ছিলেন ; সীতা হংসশ্রেণী নিরীক্ষণ করিয়া কৌতুকবশতঃ গোদাবরীতটে অনেকক্ষণ বিলম্ব করিয়াছিলেন। পরে প্রত্যাবৃত্ত হইয়া আপনাকে দুঃখিতচিত্ত দেখিয়া কাতরতাবশতঃ কমলমুকুলতুল্য মনোহর প্রণামাঞ্জলি বন্ধন করিয়াছিলেন ॥ ৩৭ ॥

সীতা। সখি বাসন্তি, তুমি অতি নিষ্ঠুর, তুমি অতি নিষ্ঠুর। যেহেতু—হৃদয়ের মর্ম্মস্থানে প্রবিষ্ট শল্যের পুনঃ পুনঃ সংঘট্টন করিয়া এই হতভাগিনীকে ও আর্য্যপুত্রকে সন্তাপিত করিতেছ।

রাম। অয়ি চণ্ডি সীতে তোমাকে যেন ইতস্ততঃ দেখিতেছি ; কিন্তু তুমি আমার প্রতি অনুকম্পা করিতেছ না।

হা হা দেবি, আমার হৃদয় বিদীর্ণ হইতেছে, দেহের বন্ধন যেন স্রস্ত হইয়া পড়িতেছে। জগৎ শূন্য বোধ হইতেছে, অবিরত জ্বালায় অন্তরে জ্বলিতেছি। অন্তরাত্মা শোকভারাক্রান্ত ও অবসন্ন হইয়া গাঢ়ান্ধকারে নিমগ্ন হইতেছে। প্রবল মোহ সমস্ত আচ্ছন্ন করিয়া ফেলিতেছে, মন্দভাগ্য আমি কি উপায় করি? [ মূর্চ্ছিত হইয়া পড়িলেন ] ॥ ৩৮ ॥

সীতা। হায়, হায়, আর্য্যপুত্র পুনর্ব্বার মূর্চ্ছিত হইয়া পড়িলেন।

বাসন্তী। দেব, আশ্বস্ত হউন, আশ্বস্ত হউন।

সীতা। হা আর্য্যপুত্র, এই হতভাগিনীর জন্যই, সকল জগতের মঙ্গলাধার আপনার বারংবার এইরূপ ভীষণ জীবনসংশয়কারী দশাপরিণাম হইতেছে। হা হতাস্মি। [ মূর্চ্ছিত হইয়া পড়িলেন ]

তমসা। বৎসে সমাশ্বস্ত হও, সমাশ্বস্ত হও। পুনর্ব্বার তোমার পাণিস্পর্শই রামভদ্রের সঞ্জীবনের উপায়।

বাসন্তী। এখনও পর্য্যন্ত আশ্বস্ত হইলেন না, হা প্রিয়সখি সীতে ; তুমি কোথায়? আপনার জীবিতেশ্বরের প্রাণরক্ষা কর।

সীতা। [ ব্যগ্রভাবে সমীপে গমন করিয়া রামচন্দ্রের হৃদয় ও ললাট স্পর্শ করিলেন ]।

বাসন্তী। সৌভাগ্যক্রমে রামচন্দ্র চৈতন্য লাভ করিয়াছেন।

রাম। সেই সংস্পর্শ, ( ত্বক্ মেদঃ মজ্জাস্থিপ্রভৃতি ) বহিঃস্থিত ও অভ্যন্তরস্থিত

শরীরধাতুগুলিকে অকস্মাৎ যেন অমৃতময় প্রলেপ দ্বারা আলিপ্ত করিয়া আমাকে পুনর্ব্বার প্রত্যুজ্জীবিত করিতেছে, এবং আনন্দাতিশয় সমুৎপাদন করিয়া অন্য প্রকারের মোহ আনয়ন করিতেছে ॥ ৩৯ ॥

[ আনন্দে মুদ্রিতনেত্র হইয়া ] সখি বাসন্তি ; ভাগ্য সুপ্রসন্ন।

বাসন্তী। দেব, কিরূপ ?

রাম। সখি, আর কি ? জানকীকে পুনঃপ্রাপ্ত হইয়াছি।

বাসন্তী। হে দেব রামভদ্র, তিনি কোথায় ?

রাম। [ স্পর্শসুখের অভিনয় করিয়া ] এই দেখ না সম্মুখেই রহিয়াছেন।

বাসন্তী। হে দেব, হতভাগিনী আমি একে প্রিয়সখীর শোকে দগ্ধ হইতেছি, তাহার পর আপনি এইরূপ দারুণ মর্ম্মচ্ছেদী প্রলাপবাক্য উচ্চারণ করিয়া পুনর্ব্বার আমাকে কেন দগ্ধ করিতেছেন ?

সীতা। এখান হইতে চলিয়া যাইতে ইচ্ছা করিতেছি ; কিন্তু দীর্ঘকালের অনুরাগ বশতঃ মধুর ও শীতল নাথদেহস্পর্শ আমার সুদীর্ঘ ও দারুণ সন্তাপ মুহূর্ত্তমধ্যে দূর করিয়া আমার হস্তকে যেন বজ্রলেপ দ্বারা সংবদ্ধ করিয়াছে। আমার হস্ত স্বেদাক্ত ও নিতান্ত জড়তা প্রাপ্ত হইয়া যেন বিবশ হইয়া কম্পিত হইতেছে।

*Tamasa.*—The deep ocean of his grief has become full to the brim.

*Vasanti.*—My Lord, have patience and firmness, since it is a matter already over.

*Rama.*—What say you, my friend ! Patience?

This is the twelfth year of the world since it has been destitute of my queen Sita. Even the very name Sita has been blotted out (from the memory of men). And yet it is not that Rama does not live. (33).

*Sita.*—These words of my husband make me faint.

*Tamasa.*—Quite so, my child.

These words, cruel with grief and though overflowing with affection, are not highly gratifying. This is a stream of honey mixed with poison which is pouring upon you. (34).

*Rama.*—O Vasanti,—

Have I not indeed borne the sharp dart of grief piercing into my heart and cutting at the vital parts, just like an oblique fire-brand driven into the body, or like the poisonous bite of (a reptile.)? (35).

*Sita.*—I am so unfortunate that I have again become a source of my husband's affliction.

*Rama.*—Though I have imperturbably fortified my heart, yet at the sight of these familiar and dear objects this violent agitation has come upon me. For,—

Whatever effort I make with considerable difficulty in order to check the outburst of my heart agitated like a restless huge billow, an indescribably strong emotion breaks through it as often as I make it and prevails with force, just as a flood of water with irresistible force rushes on, washing away a sandy dyke. (36).

*Sita.*—My heart, with its own grief becoming fresh as it were, trembles on account of the stirring of the grief of my husband, the outburst of which is irresistible and terrible.

*Vasanti.*—[ *To herself.* ] His Majesty has been reduced to a great strait. Let me divert his attention to something else. [ *Aloud.* ] Let your majesty amuse yourself by seeing these divisions of Janasthana of long acquaintance.

*Rama.*—Very well. [ *Rises up and walks about.* ]

*Sita.*—My dear friend Vasanti is mistaken in taking rather the aggravating causes of grief to be the means of diversion.

*Vasanti.*—My lord, my lord!

You waited in this very arbour of creepers directing your eyes towards her path; she on the other hand tarried long on the bank of the Godavari, her curiosity being awakened by ganders. On returning she observed you to have been a little vexed and therefore in anxiety and fright she folded her palms in making a bow, which appeared beautiful like the bud of a lotus. (37.)

*Sita.*—You are cruel, my friend Vasanti, you are cruel, who are torturing again and again my husband and my wretched self by thus stirring the javelin sunk deep in the vital parts of the heart.

*Rama.*—Resentful Janaki, you seem to be present here and there, but you do not take pity on me.

Alas! Alas! My queen, my heart bursts, the joints of the body are going to be unhinged: ("this solid flesh melts thaws and resolves itself into a dew"). I think this world to be a blank. I burn with a

ceaseless flame within. My inner soul, weary and afflicted, sinks into a blinding gloom; and a benumbing stupor shuts up all things (from my view). What can I, an ill-fated being, do? (38).

[*He falls into a swoon*]

*Sita.*—Woe! woe! My husband has again fainted.

*Vasanti.*—Take heart, my lord, take heart.

*Sita.*—Alas! My husband! It is for the sake of me, an ill-fated being, that you, the very abode of blessings to this whole world of beings, are getting once and again these fainting fits which are so terrible because of putting your life into danger. Alas! I am undone [ *swoons.* ]

*Tamasa.*—Cheer up, my child, cheer up. It is the touch of your hand again that is the means of bringing back Rambhadra to life.

*Vasanti.*—How is it that he does not yet revive? Alas! My dear friend Sita, where are you? Restore to life the lord of your life.

*Sita.*—[ *Approaching in haste touches him on the heart and the forehead.* ]

*Vasanti.*—Luckily Rambhadra has regained his consciousness.

*Rama.*—Again the same touch revives me suddenly, anointing as if with an unguent of ambrosia the constituent parts of my body, external and internal; and brings on another kind of stupor by giving rise to joy. (39).

[*With his eyes closed in joy.*] Dear friend, Vasanti, luckily do you prosper.

*Vasanti.*—How so, my lord?

*Rama.*—What else, my friend? Janaki has been got back.

*Vasanti.*—O my lord Rambhadra, where is she?

*Rama.*—[ *Gesticulating the pleasure of her touch* ] Behold! here she is in my front.

*Vasanti.*—O, my lord, why do you with these ravings, terrible and cutting to the quick, torture me again, an ill-starred being, who am already consumed by the fire of grief for my dear friend?

*Sita.*—I want to go away. But this my hand,—being fixed as

though by a hard cement by the touch of my husband which is cool and delightful on account of an enduring love and does away instantly with the long and terrible agony of grief,—is now trembling as if it has lost control over itself, is perspiring and is utterly helpless.

राम:। गृहीत इति। पूर्व्वं परिणयविधौ कङ्कणधर: य: गृहीत: ; अमृतशिशिरै: स्वेच्छास्पर्शै: य: चिरं परिचित: तुहिनकरकौपम्यसुभग: ललितलवलीकन्दलनिभ: स एव अयं तस्या: पाणि: मया लब्ध: ॥ ४० ॥

पूर्व्वं बाल्ये इत्यर्थ: परिणयविधौ विवाहकर्म्मणि कङ्कणस्य मङ्गलसूत्रस्य धर: इति कङ्कणधर: मङ्गलसूत्रालङ्कृत: कङ्कणं करभूषायां सूत्रमण्डलयोरपि इति मेदिनी, य: पाणि: मया गृहीत: आसीत् अमृतशिशिरै: सुधाशीतलै: अतिसुभगै: स्वेच्छया आत्मेच्छया ये स्पर्शा: तै: स्वेच्छास्पर्शै: अनियन्त्रणस्पर्शै: मुहुरनुभूतै: स्पर्शै: य: चिरं दीर्घकालं व्याप्य परिचित: संस्तुत: तुहिनकरकाया: वर्षोपलस्य औपम्येन सादृश्येन सुभग: मनोरम: घनोपलवत्सन्तापहर: सुभगस्पर्शश्च, ललितेन सुकुमारेण लवल्या: कन्दलेन अङ्कुरेण सदृश: इति ललितलवलीकन्दलनिभ: नित्यसमास: अस्वपदविग्रह: कन्दलं विषु कपोलेऽप्युपरागे नवाङ्कुरे इति मेदिनी। अतिसुकुमार: इत्यर्थ: स एव अयं तस्या: सीताया: पाणि: कर: मया लब्ध: आसादित। अत्र श्लोके उपमालङ्कार:। शिखरिणी वृत्तम्।

परिणयस्य विवाहस्य विधिरनुष्ठानम् इति परिणयविधि: तस्मिन्। विषयाधिकरणे सप्तमी परि + नी + अच् = परिणय। अमृतमिवशिशिरा: इति अमृतशिशिरा: उपमानानि सामान्यवचनैरिति समास:। परि + चि + क्त (कर्म्मणि) = परिचित। तुहिनस्य हिमस्य (सम्बन्धिनी) करका इति तुहिनकरका यद्वा तुहिना शीतला करका इति विग्रह:। वर्षोपलस्तुकरका इत्यमर:। उपमाया: भाव: इति औपम्यम्। ष्यञ् प्रत्यय:। अवश्यायस्तु नीहार स्तुषारस्तुहिनं हिमम्। प्रालेयं मिहिका च इत्यमर:।

सीता। आर्य्यपुत्रस्य स्पर्शेन मोहिता लुप्तप्रतिपत्ति: तस्या: मे प्रमाद: अनिष्टं संवृत्त:। यत: इदानीं आर्य्यपुत्रेण हस्ते धृताया: मे स्वेच्छया अपसरणमशक्यं जातम्।

राम:। आनन्देन सीताप्राप्तिजन्येन आह्लादेन निमीलितानि मुद्रितानि स्वव्यापारापटूनि इत्यर्थ: इन्द्रियाणि चक्षुरादीनि यस्य स आनन्दनिमीलितेन्द्रिय: च हं आश्वसेन अयेन वशी: कालात् परं आग्येन लब्धा सीता यदि पुनरपेयात् इति भिया परवान् परतन्त्र: अभिभूत: इत्यर्थ: अस्मि भवामि। परतन्त्र: पराधीन: परवान् नाथवानपि इत्यमर:।

वासन्ती। उन्माद: उन्मत्तता। उद् + मद् + घञ् = उन्माद।

[ आक्षिप्य आच्छिद्य बाहुमाकृष्य ससम्भ्रमं सत्वरं व्यग्रं यथा तथा अपसर्पति दूरं प्रयाति ]

राम:। करपल्लव इति। जड: प्रकम्पी स्विद्यन् तस्या: करपल्लव: जडात् परिकम्पिन: स्विद्यत: मम करात् सहसा एव परिभ्रष्ट:॥ ४१॥

जड: अवश: यद्वा शीतल: प्रकम्पी अत्यर्थं कम्पमान: स्विद्यन् स्वेदाप्लुत: तस्या: सीताया: स करपल्लव: मया लब्ध: पाणि: जडात् विवशात् शीतलाद्वा, परिकम्पिन: वेपमानात् स्विद्यत: घर्म्माक्तात् मम करात् सहसा हठात् परिभ्रष्ट: विच्युत: विगलित इति यावत्। उभयोरेव तुल्य: सात्त्विकविकार: प्रादुर्भूत: इति श्लोकेन अनेन गम्यते। तत्र अष्टौसात्त्विका: विकारा:—स्तम्भ: स्वेदोऽथ रोमाञ्च: स्वरभङ्गोऽथ वेपथु:। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका: स्मृता:।

आर्य्याजाति:। यस्या: पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या॥

कर: पल्लव इव इति करपल्लव:। उपमितं व्याघ्रादिभिरिति समास:। परि + भ्रन्श + क्त ( कर्त्तरि ) = परिभ्रष्ट। परि + कम्प + णिनि = परिकम्पिन्। Or परिकम्प + इनि (मत्वर्थीय) परिकम्पिन्। So प्रकम्पिन्। स्विद् + शतृ = स्विद्यत्। करादिति अपादाने पञ्चमी। सहसा अव्ययमिदं क्रियाविशेषणम्।

सीता। अनवस्थिते चञ्चले स्तिमिते निष्पन्दे, मूढे अलसे विषयग्रहणासमर्थे घूर्णती ( घूर्णन्ती ) आवर्त्तमाने नयने यस्य: स: अनवस्थितस्तिमितमूढघूर्णन्नयन:। कदाचित् चञ्चले, कदाचिद् वा निश्चलतामापन्ने ; कदाचिद् वा मूढे शून्ये विषयग्रहणासमर्थे पुनश्च मध्ये मध्ये आवर्त्तमाने अस्य नेत्रे। ईदृगवस्थ: अयम् आत्मानं पर्य्यवस्थापयितुं स्थैर्य्यमापादयितुम् प्रकृतिस्थं कर्त्तुं न शक्नोति।

स्तिम् + क्त ( कर्त्तरि ) = स्तिमित। स्तिम्यति। मुह + क्त = मूढ। मुह्यति। घूर्ण + शतृ = घूर्णत्। घूर्णति, घूर्णते। परि + अव + स्था ( णिच् ) + लट् = पर्य्यवस्थापयति।

तमसा। स्नेहेन प्रीत्या, हासेन कौतुकेन हर्षेण च सह वर्त्तमानं यथा तथा सस्नेहहासकौतुकम्।

कौतुकस्त्वभिलाषे स्यात् उत्सवे नर्म्महर्षयो:।
तथा परम्परायाते मङ्गले च कुतूहले॥
विवाहसूत्रगीतादि भोगयोरपि न द्वयो:। इति मेदिनी।

सस्वेदेति। वत्सा प्रियस्पर्शसुखेन सस्वेदरोमाञ्चितकम्पिताङ्गी मरुन्नवाम्भः-प्रविधूतसिक्ता स्फुटकोरका कदम्बयष्टिः इव जाता ॥ ४२ ॥

वत्सा जानकी प्रियस्य भर्त्तुः स्पर्शेन यत् सुखं तेन प्रियस्पर्शसुखेन भर्त्तृस्पर्शजन्यानन्देन, रोम्णां लोम्नां अञ्चः उद्गमः इति रोमाञ्चः स जातः एषां इति रोमाञ्चितानि, तारकादित्वादितच्, स्वेदेन घर्म्मजलेन सह वर्त्तन्ते इति सस्वेदानि घर्म्मजलाप्लुतानि, सस्वेदानि धर्म्माक्तानि रोमाञ्चितानि पुलकितानि कम्पितानि वेपमानानि च अङ्गानि गात्राणि यस्याः सा सस्वेदरोमाञ्चितकम्पिताङ्गी, अङ्गगात्रकण्ठेभ्यः वक्तव्यमिति स्त्रियां पक्षे ङीष्। घर्म्मोदविन्दुपुलकाञ्चितकम्पोत्तरगात्री मरुता वायुना नवैरम्भोभिः प्रथमैर्वार्षिकैरुदविन्दुभिः यथाक्रमं प्रविधूता कम्पिता सिक्ता आर्द्रीकृता च इति मरुन्नवाम्भःप्रविधूतसिक्ता स्फुटाः व्यक्तोदिताः कोरकाः कुड्मलाः यस्याः सा स्फुटकोरका स्पष्टोद्गतमुकुला कदम्बयष्टिः कदम्बवृक्षशाखा इव इत्यर्थः जाता। प्रथमैरुदविन्दुभिः सिक्ता वायुवशेन कम्पमाना उद्गतकेसरैः प्रसूनैः परिव्याप्ता कदम्बतरुशाखा इव इयं राजते। स्फुटोऽत्र उपमालङ्कारः। यष्टिग्रहणं कार्श्यद्योतनाय स्त्रीत्वनिर्व्वाहेण उपमादूषणलिङ्गवैषम्यपरिहाराय च। वृत्तमुपजातिः। उपमेयधर्म्माणां क्रमः उपमाने न सुष्ठु परिरक्षितः। सदोषेयमुपमा।

प्र + वि + धू + क्त (कर्म्मणि) = प्रविधूत। सिच + क्त (कर्म्मणि) = सिक्त। स्फुट + क = स्फुट। स्फुटति, पुस्फोट ; अस्फुटत्। स्फोटति, अस्फोटीत्।

सीता। लज्जापिता, अस्मि ; लज्जां प्रापिता अस्मि। लजप्रकाशने भ्रदन्तेषु पाठवलाददन्तत्वे वृद्धिरित्यन्ये वराटापयति, लज्जापयति। शाकटायनस्तु कथादीनां सर्व्वेषां पुकमाह तन्मते, कथापयति गणापयति लज्जापयति इत्यादि। अनेन रामेण त्वं परित्यक्ता, त्वन्तु अखिन्नोद्दृगनुरक्ता यदस्य स्पर्शमात्रेण रोमाञ्चितगात्री विवशा च जाता। हृदयस्य आसङ्गः आसक्तिः अनुराग इत्यर्थः। आङ + सञ्ज + घञ् = आसङ्ग। मन् + लृट् स्यते = मंस्यते चिन्तयिष्यति।

रामः। नास्ति करुणा दया यस्याः सा अकरुणा निर्द्दया इत्यर्थः।

सीता। विपरीतं इव ; विप्रतीप भाषसे खलु। नाहं त्वां परित्यक्तवती। त्वमेव मां परित्यक्तवान्।

वासन्ती। लोकेभ्यः उत्तरम् इति लोकोत्तरम् लोकातिशायि लोकातिगमिति यावत् तेन धैर्य्येण मनसोऽविकारित्वेन, अतिभूमिं अत्यारूढ़िं गतः विप्रलम्भः करुणविप्रलम्भः प्रियावियोगशोकः इत्यर्थः यस्य सः अतिभूमिगतविप्रलम्भः तम् ; अतिवेलविरहदुःखम् आत्मानं स्वं संस्तम्भय पर्य्यवस्थापय स्थैर्य्यमापादय इत्यर्थः।

धीर + ष्यञ् = धैर्य्य। वि + प्र + लभ् + घञ् = विप्रलम्भ। सम् + स्तम्भ + (णिच्) + लोट् हि = संस्तम्भय।

राम:। व्यक्तं स्पष्टम् निश्चितमित्यर्थ:। वि + अन्ज + क्त = व्यक्त। स्वप् + क्त (कर्त्तरि) = सुप्त। अनेके वारा: इति अनेकवारा: अनेकवारान् (व्याप्य इत्यर्थ:) परिकल्पना इति अनेकवारपरिकल्पना। अत्यन्तसंयोगे द्वितीयातत्पुरुष:। अनेकवारपरिकल्पनया निर्मित: उत्पादित: विप्रलम्भ: वञ्चनम् विसंवाद इति यावत्। विप्रलम्भो विसंवाद इत्यमर:। वञ्चनं चातिसन्धानं व्यलीकं स्यात् प्रतारणम्। विप्रलम्भो विसंवादो विप्रलापश्च कीर्त्तित: इति हलायुध:। वि + प्र + लभ् + घञ् = विप्रलम्भ। लभेश्च इति नुम्। मुहु: सीतासमागमविषयकभावनया तदङ्गस्पर्शादि: भावितादीनाञ्च चिन्तनेन अपरमार्थभूतमपि सीतागात्रस्पर्शादिकं प्रत्यक्षमिवानुभूयते। पूर्व्वज: संस्कार: पुन: पुन: चिन्तावशात् आलम्बनं विनापि अनुभूतिपदवीमवतरति इव इति कल्पनाया: अचिन्त्या शक्ति:। अतएव वस्तुत: अप्रत्यासन्नाया: अपि सीताया: स्पर्शसुखं मम हृदये कल्पनाशक्त्या प्रादुर्भूतम्। कृप् + (णिच्) + युच (भावे) = कल्पना। ण्यासश्रन्थोयुजिति युच्। अनुबध्नाति, अनुवर्त्तते, अनुसरतीति यावत्।

सीता। नायं कल्पनावशात् विप्रलम्भ: किन्तु अदृश्यरूपया मया इमं स्पृष्ट्वा अस्य हृदये एवंविधालीककारणनिर्द्देशस्य निमित्तीभूतम्। अतएव मया अयं विप्रलब्ध: प्रतारित:।

वासन्ती। पौलस्त्यस्य इति। जटायुषा विघटित: अयं पौलस्त्यस्य कार्ष्णायस: रथ: ; पश्य एते पिशाचवदना: कङ्कालशेषा: खरा: पुरत: वर्त्तन्ते इति शेष:। अरि: खड्गच्छिन्नजटायुपक्षति: ज्वलन्तीं सीतां वहन् अन्तर्व्याकुलविद्युत् अम्बुद: इव इत: खाम् अभ्युदस्थात्॥ ४३॥

हे देव पश्य जटायुषा शकुन्तराजेन विघटित: भग्न: अयं पौलस्त्यस्य पुलस्त्यनप्तु: रावणस्य कार्ष्णायस: कृष्णायसनिर्म्मित: कृष्णायसं उत्कृष्ट लौह लौहस्य जातिविशेष: अतएव अनोऽश्माय: सरसां जातिसंज्ञयोरिति समासान्त: टच्। कृष्णायसस्य विकार: इति कार्ष्णायस: रथ: स्यन्दन: पुरतो वर्त्तते। पिशाचानामिव वदनानि येषां ते पिशाचवदना: उपमानपूर्व्वपदो बहुव्रीहिरुत्तरपदलोपश्च। कङ्कालशेषा: अस्थिपञ्जरमात्रावशिष्टा: खरा: अश्वतरा: पुरतो भूमौ पतिता: सन्ति। शरीरस्यास्थि कङ्कालं तथास्यादस्थिपञ्जरम् इति हलायुध:। अरि: शत्रु: रावण: खड्गेन असिना छिन्ना निकृत्ता जटायो: पक्षति: पक्षमूलं येन स खड्गच्छिन्नजटायुपक्षति: ज्वलन्तीं स्फुरन्तीं दीप्यमानां विचेष्टमानामिति गम्यते उपमानधर्म्मानुरोधात्, वहन् अङ्के धारयन् अन्त: अभ्यन्तरे व्याकुला चञ्चला स्फुरन्ती इति यावत् विद्युत् तड़ित् यस्य स: अन्तर्व्याकुलविद्युत् अम्बुद: मेघ: इव इत: अस्मात् स्थानात् खाम् आकाशं अभ्युदस्थात् उत्पपात। शार्दूलविक्रीड़ितम् वृत्तम्। उपमालङ्कार:। रावणस्य कार्ष्ण्यादम्बुदसाम्यम्।

वि + घट ( चुरादि ) + क्त (कर्म्मणि) = विघटित । पक्ष्मात् तिः इति पक्ष्मशब्दात् तिप्रत्ययः । पक्ष्मस्य मूलमित्यर्थः । वि + द्युत् + क्विप् = विद्युत् । अम्बु + दा + क = अम्बुद । द्यामित्यत्र कर्म्मणि द्वितीया । अभ्युदस्थात् इत्यस्य कर्म्मपदम् । उपसर्गवशात् अत्र तिष्ठतेः सकर्म्मकत्वम् । पिशितं आममांसम् आचामन्ति भक्षयन्ति ये ते पिशाचाः । पिशित + आङ् + चम् + ड । बाहुलकात् डः पृषोदरादित्वात् साधु ।

सीता । अप + हृ + कर्म्मणि लट् ( first person singular ) अपह्रिये । वि + आङ् + पद ( णिच् ) + लट् ते (कर्म्मणि) = व्यापाद्यते ।

रामः । तातस्य जटायोः प्राणाः इति तातप्राणाः तातप्राणान् सीताञ्च अपहर्त्तुं शीलमस्य इति तातप्राणसीतापहारी । तत्सम्बोधने । अप + हृ + णिनि ।

वासन्ती । राक्षसानां कुलं वंशः तस्य प्रलयः नाशः तत्सूचकः धूमकेतुः उत्पातग्रहविशेषः, यद्वा अनलः इति राक्षसकुलप्रलयधूमकेतुः राक्षसकुलान्तकः इत्यर्थः । अद्यापि इदानीमपि ते मन्योः कोपस्य विषयः पात्रमस्ति किमु । मन्युर्दैन्ये क्रतौ क्रुधि इत्यमरः ।

রাম। সখি, প্রলাপবাক্য কেন হইবে? বিবাহকালে মঙ্গলসূত্রালঙ্কৃত যে পাণি গ্রহণ করিয়াছিলাম, যথেচ্ছভাবে অনুভূত অমৃতশীতল সুভগস্পর্শহেতু যে হস্ত আমার চির পরিচিত—

সীতা। আর্য্যপুত্র, আপনি এখনও সেই আর্য্যপুত্রই আছেন।

রাম। শীতল বর্ষোপলের সাদৃশ্যবশতঃ সুভগ, ও সুকুমার লবলীর অঙ্কুরতুল্য তদীয় সেই হস্ত আমি প্রাপ্ত হইয়াছি ॥ ৪০ ॥ [ সীতার হস্ত ধারণ করিলেন ]

সীতা। হায়, হায়, আর্য্যপুত্রের স্পর্শে বিমূঢ়চিত্ত হওয়াতে আমার প্রমাদ উপস্থিত হইল।

রাম। সখি বাসন্তি, আনন্দে আমার ইন্দ্রিয়গণ নিমীলিতপ্রায় হইতেছে আমি (সীতাকে হারাই) এই আশঙ্কায় অভিভূত হইতেছি। অতএব তুমি ইঁহাকে ধারণ কর।

বাসন্তী। হায় কষ্ট, ইঁহার উন্মত্তাবস্থাই উপস্থিত হইল।

সীতা। [ ব্যগ্রভাবে হস্ত টানিয়া লইয়া সরিয়া গেলেন ]।

রাম। হা ধিক্, কি অনিষ্ট ঘটিল; হা ধিক্ কি অনিষ্ট ঘটিল! স্বেদাপ্লুত, কম্পমান ও জড়তাপ্রাপ্ত তদীয় করপল্লব আমার ঘর্ম্মাক্ত, বেপমান ও অবশ হস্ত হইতে হঠাৎ পরিভ্রষ্ট হইয়া পড়িল ॥ ৪১ ॥

সীতা। হায়, হায়, এখনও উনি আপনাকে প্রকৃতিস্থ করিতে পারিলেন না; উঁহার নয়নদ্বয় কখনও চঞ্চল, কখনও নিস্পন্দ, স্বব্যাপারে অসমর্থ ও কখনও ঘূর্ণমান হইতেছে।

তমসা। [ স্নেহ, হাস্য ও আনন্দের সহিত নিরীক্ষণ করিয়া ] পতিস্পর্শে বৎসার গাত্র স্বেদাক্ত, রোমাঞ্চিত ও কম্পমান হইয়া বর্ষাকালের নববারিসিক্ত, উদ্গতকোরক, সমীরণ সঞ্চালিত কদম্বযষ্টির শোভা ধারণ করিয়াছে ॥ ৪২ ॥

সীতা। [ স্বগত ] ওমা—আমার এই অবশ দেহ আমাকে ভগবতী তমসার নিকট লজ্জিত করিল! ইনি কি মনে করিবেন; "স্বামী তোমাকে পরিত্যাগ করিলেন, আর তোমার হৃদয়ের এইরূপ আসক্তি"।

রাম। [ সকল দিকে দৃষ্টিপাত করিয়া ] হায়? কই সীতা ত এখানে নাই নিষ্ঠুরে, বৈদেহি!

সীতা। সত্যই আমি নিষ্ঠুর, যে আমি আপনাকে এতদবস্থ দেখিয়াও জীবনধারণ করিয়া আছি।

রাম। দেবি, তুমি কোথায় আছ। প্রসন্ন হও আমাকে এই অবস্থায় পরিত্যাগ করা তোমার উচিত নহে।

সীতা। আর্য্যপুত্র, আপনার এই বাক্য প্রকৃত অবস্থার বিপরীত।

বাসন্তী। দেব প্রসন্ন হউন, স্বীয় লোকোত্তর ধৈর্য্য অবলম্বনপূর্ব্বক অতি প্রবৃদ্ধ শোকে অভিভূত আত্মাকে সুস্থির করুন। এখানে আমার প্রিয়সখী সীতা কোথায়?

রাম। নিশ্চয়ই সীতা এখানে নাই। তাহা না হইলে বাসন্তীও তাহাকে কেন দেখিতে পাইবে না। তবে কি এ স্বপ্ন? কিন্তু আমিত নিদ্রিত হই নাই। রামের আবার নিদ্রা কিরূপে সম্ভবে? নিশ্চয়ই পুনঃ পুনঃ অনুশীলিত কল্পনার প্রভাবে সমুৎপন্ন এ ভ্রম আমাকে পরিত্যাগ করিতেছে না।

সীতা। নিষ্ঠুরহৃদয়া আমিই আর্য্যপুত্রকে প্রতারিত করিতেছি।

বাসন্তী। দেব, দেখুন, দেখুন—কৃষ্ণায়সনির্ম্মিত রাবণের রথ জটায়ু কর্ত্তৃক ভগ্ন হইয়া ঐ পতিত রহিয়াছে; ঐ দেখুন কঙ্কালাবশিষ্ট পিশাচবদন অশ্বতরগুলি অগ্রে নিপতিত; খড়্গ দ্বারা জটায়ুর পক্ষমূল ছিন্ন করিয়া আপনার শত্রু রাবণ দীপ্যমানকান্তি ও বিচেষ্টমানা সীতাকে অঙ্কে ধারণপূর্ব্বক, চঞ্চল চপলার দ্যুতিচ্ছটায় সমুদ্ভাসিত কৃষ্ণ-মেঘখণ্ডের ন্যায় এই স্থান হইতে আকাশে উৎপতিত হইয়াছিল ॥ ৪৩ ॥

সীতা। [ সভয়ে ] আর্য্যপুত্র, তাত জটায়ু নিহত হইতেছেন, আমিও অপহৃত হইতেছি; পরিত্রাণ করুন, পরিত্রাণ করুন।

রাম। [ বেগে উত্থান করিয়া ] আঃ দুরাত্মন্, তাতপ্রাণবিনাশিন্, সীতাপহারিন্ কোথায় যাও।

বাসন্তী। হে দেব, রাক্ষসকুলবিনাশের ধূমকেতু; এখনও আপনার ক্রোধের পাত্র আছে কি?

*Rama*—My friend, why (do you suppose these to be) ravings?

The same hand which bearing the auspicious nuptial string was taken hold of by me at the celebration of the marital rite, and which had long been familiar to me by its touch, felt as often as I liked, and cooling like the ambrosia. (40). [ *Takes hold of her hand.*]

*Sita.*—My husband, you are the very same person even now.

*Rama.*—The same hand of her, lovely on account of its resemblance to the cool hailstone, and rivalling a tender sprout of the *Lavali* creeper, has been obtained by me.

*Sita.*—Oh ! fie, fie ! Indeed a careless mistake has been made by me deluded by the touch of my husband.

*Rama.*—My dear friend Vasanti, with my senses overwhelmed with joy, I am being overcome by nervousness. Let you therefore get hold of her.

*Vasanti.*—Oh ! woe ! it is madness indeed !

*Sita.*—[ *Quickly snatches her hand away and withdraws.* ]

*Rama.*—Alack ! Alack ! what a misfortune ! Her leaf-like hand, perspiring, trembling and paralysed, has suddenly slipped off from my benumbed, tremulous and perspiring hand. (41).

*Sita.*—Alas ! Alas ! with his eyes now restless, now motionless, now dull and now rolling, he has not yet been able to compose himself.

*Tamasa.*—[ *Marking Sita, affectionately, and with a smile and curiosity.* ]

Owing to the pleasure derived from the touch of her husband my child with her body perspiring, trembling and with bristling hair bears resemblance to the branch of a Kadamba tree, shaken by the breeze, wetted by the new drops of rain, and with buds blooming. (42).

*Sita.*—[ *To herself.* ] Ah ! I have been put to shame in the presence of the venerable Tamasa by this body of mine over which I have lost control. What will she think of me ? (She will say) :—"you have been forsaken and such is the affection of your heart" !

*Rama.*—[ *Looking about on all sides* ] Alas ! How ! In sooth she is not here. O you merciless Princess of Videha !

*Sita.*—Really I am merciless, who can support her life even on seeing you in such a condition.

*Rama.*—Where are you, my queen ? Be pleased. It does not behove you to forsake me in this condition.

*Sita.*—My husband, this is quite contrary to the real state of things.

*Vasanti.*—Be gracious, my lord, be merciful; by your own extraordinary firmness of mind compose your own self in whom the grief of separation has reached its climax. Whence could my dear friend be here?

*Rama.*—Evidently she is not here; how otherwise could not even Vasanti see her? Could this indeed be a dream? But I am not asleep; or whence could sleep steal upon Rama?

In all appearance it is a hallucination brought into existence by indulging many a time in reverie or day-dreaming,—which hunts me again and again.

*Sita.*—It is indeed my own cruel self that has deluded my husband.

*Vasanti.*—Behold! my lord, behold! Here is the chariot made of black steel, belonging to Paulastya (Ravana) broken to pieces by Jatayu; see, there lie in front reduced to skeletons, the mules having faces like those of goblins. Having clipped with a sword to the very root the wings of Jatayu, from this very spot did the enemy, carrying the resplendent Sita on his arms, and therefore appearing like a piece of black cloud with lightning flashing tremulously within, spring up into the sky. (43).

*Sita.*—[ *In fear.* ] My husband, our father is being killed and I too am being carried away. Save, o, save us.

*Rama.*—[ *Rising up in haste.* ] Ah! you villain, you that have taken away the life of my father, and are abducting Sita, whither will you fly?

*Vasanti.*—Of my lord, the disastrous comet to the race of the Rakshasas, is there even now any object of your wrath?

राम:। अनुगत: अर्थ: यस्य स: अन्वर्थ: यथार्थ: एव इदानीं प्रलाप: वर्त्तते। इदानीं सत्यमेवाहं उन्मत्त इव असम्बद्धं जल्पामि इत्यर्थ:। यद्वा इदानीं प्रलाप: रोदनादिकम् एव अन्वर्थ: अर्थं प्रयोजनमनुप्राप्त: इति अन्वर्थ: अस्मिन् अवस्थान्तरे नितरामावश्यक: इत्यर्थ:।

उपायानामिति। उपायानां भावात् अविरतविनोदव्यतिकरै: वीराणां विमर्दै: जगति जनितात्यद्भुतरस: मुग्धाक्ष्या: स वियोग: रिपुघातावधि: खलु अभूत्। इदानीं तु निरवधि: विरह: कथं तूष्णीं सह्य:॥ ४४॥

उपेयन्ते आसाद्यन्ते अर्था: एभिरिति उपाया: साधनानि तेषां भावात् विद्यमान-

तया रक्षोहृतायाः सीतायाः समुद्धरणोपायानाम् अवलम्बनेन इत्यर्थः अविरतः निरन्तरः विनोदस्य विरहदुःखापनोदनस्य व्यतिकरः सम्पर्कः येषु तैः अविरतविनोदव्यतिकरैः युद्धादिव्यापारेषु चित्तव्यासङ्गात् विस्मारितवियोगदुःखैरित्यर्थः वीराणां शूराणां कपिराक्षसानां विमर्द्दैः संपरायैः जगति भुवने जनितः उत्पादितः अत्यद्भुतः रसः विस्मयः येन स जनितात्यद्भुतरसः रोमहर्षणयुद्धानां निमित्तभावात् जनानामनुपमविस्मयहेतुः मुग्धे मनोहरे अक्षिणी नयने यस्याः सा मुग्धाक्षी तस्याः मुग्धाक्ष्याः चारुनेत्रायाः, बहुव्रीहौ अक्षिशब्दात् समासान्तः षच् षिद्गौरादिभ्यश्चेति स्त्रियां ङीष्, स वियोगः विच्छेदः रिपूणां शत्रूणां घातः विनाशः अवधिः अन्तः यस्य स रिपुघातावधिः शत्रून्मूलनावसानः अभूत् ; रावणस्य विनाशात् परं तस्य विरहस्य अवसानमभूत् ; इदानीं निरवधिः नास्ति अवधिः सीमा यस्य स यावज्जीवमनपायी अयं विरहः तु कथं तूष्णीम् जोषम् सह्यः सोढुं शक्यः स्यात् । अस्य विरहस्य विनोदनोपायः कोऽपि नास्ति इति भावः । शिखरिणीवृत्तम् ।

वि + अति + कृ + अप् = व्यतिकर । हन + घञ् = घात । अव + धा + कि = अवधि । तूष्णीमित्यव्ययम्, adverb to सह्यः । सह् + यत् (कर्म्मणि) = सह्य । वि + मृद + घञ् = विमर्द्द । मृद्नाति ; ममर्द्द ; अमर्द्दीत् । मृदितः । अद + भू + डुतच् = अद्भुत । अद्भुतरस is the sentiment of wonder. जन + (णिच्) + क्त (कर्म्मणि) = जनित । वि + युज् + घञ् = वियोग । वि + नुद + घञ् = विनोद । नुदति ; नुनोद अनौत्सीत् । नुत्तः नुन्नः । अविरतविनोदव्यतिकरः इतिपाठे वियोगः इत्यस्य विशेषणत्वेन अन्वयः कार्य्यः ।

सीता । निरवधिरयं विरहः ; हा हतभागिन्याः मे नास्तिदुःखस्यावसानम् ।

रामः । व्यर्थमिति । यत्र मे कपीन्द्रसख्यम् अपि व्यर्थम्, हरीणां वीर्य्यं वृथा, जाम्बवतः अपि प्रज्ञा वृथा ; यत्र वायोः पुत्रस्य अपि गतिः न, यत्र विश्वकर्म्मतनयः नलः अपि मार्गं कर्त्तुं न क्षमः सौमित्रेः अपि पत्रिणाम् अविषये तत्र क्व भोः प्रिये असि ॥ ४५ ॥

यत्र यस्मिन् देशे मे मम कपीन्द्रेण वानरपतिना सुग्रीवेण सह सख्यम् मित्रत्वम् यद्वा कपीन्द्रस्य सुग्रीवस्य सख्यं इति विग्रहः, व्यर्थम् निष्फलम् ; विफलः अर्थः यस्य तत् व्यर्थम् ; हरीणां कपीनां वीर्य्यं सामर्थ्यं वृथा अकिञ्चित्करम् ; वृथेत्यव्ययम् जाम्बवतः भल्लूकराजस्यापि प्रज्ञा धिषणा वृथा । मनीषी जाम्बवानपि प्रज्ञाबलेन कमप्युपायं कर्त्तुं न शक्नोति । यत्र वायोः प्रभञ्जनस्य पुत्रस्य सुतस्य हनूमतः अपि, दुःसञ्चरेऽपि प्रदेशे गन्तुं समर्थस्य इति अपिकारस्यार्थः, गतिः गमनं न नास्ति, लङ्घनेन दुस्तरं मकरालयं तीर्णवानपि मारुतिं यत्र गन्तुं न समर्थः, यत्र विश्वकर्म्मणः देवशिल्पिनः तनुजः पुत्रः नलोऽपि मार्गं पन्थानं सेतुमित्यर्थः कर्त्तुं विरचयितुं न क्षमः

अर्थः: अगाधे सागरे सेतुनिर्म्माता मत्तोऽपि यत्र गमनोपायं विधातुमसमर्थः, सौमित्रेः अपि इन्द्रस्यापि विजेतुः सुरासुरत्रासस्य मेघनादस्यापि निहन्तुरतिदुष्करकर्म्मणः इति भावः लक्ष्मणस्य अपि पत्रिणां इषूणामविषये अगोचरे तत्र क्व कुत्र प्रदेशे भीः प्रिये त्वम् असि वर्त्तसे। परलोकं प्रयातासि सखलु मर्त्यानांप्रभावस्याभूमिः। केनाप्युपायेन तस्मात् त्वं प्रत्यानेतुं न शक्यसे इति भाव.। शार्द्दूलविक्रीडितम् वृत्तम्। पूर्व्वविरहात् वर्त्तमानस्य व्यतिरेककथनात् व्यतिरेकः अलङ्कारः। तनोतिवंशमिति तनयः; तन् + कयन् = तनय। प्र + ज्ञा + अङ् = प्रज्ञा। आतश्चोपसर्गे इति भावे अङ् सुमित्रायाः अपत्यं पुमान् इति सौमित्रिः। सुमित्रा + इञ्; बाह्वादित्वादिञ्। चमते इति चमः। पचाद्यजिति अच्। पत्रं कङ्कादीनां गरुत् विद्यते गतिसाधकार्थमस्य इति पत्री बाणः। कलम्बमार्गणशराः पत्रीरोप इषुर्द्वयोरित्यमरः। सख्युर्भावः इति सख्यम्। सखि + यत् = सख्य।

सीता। बहुमानिता, बहुमानं श्रद्धां कारिता इत्यर्थः।

रामः। दुःखाय दुःखमुत्पादयितुमलमित्यर्थः। किम् परिमाणमस्य इति कियत्। किम् + वतु = कियत्।

तमसा। वर्षस्य वर्द्धनं वृद्धिः इति वर्षवर्द्धनं तस्य मङ्गलानि तन्निमित्तानि देवपूजादीनि मङ्गलावहानि अनुष्ठानानि आचरितुं भागीरथ्याः पादयोः चरणयोः अन्तिकं मूलं समीपमिति यावत् गच्छामः।

रामः। अश्वमेधाय अश्वमेधं अनुष्ठातुमित्यर्थः क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः इति चतुर्थी। सह पत्या सार्द्धं धर्म्मं चरति या सा सहधर्म्मचारिणी सहधर्म्मिणी इत्यर्थः।

सीता। उत्खातम् उन्मूलितम् अवरोपितम् इति यावत् परित्यागेन परिवर्ज्जनेन या लज्जा सा एव शल्यम् इति परित्यागलज्जाशल्यम्। सीता साधुशीला इति भुवि प्रख्यापयितुम् दुर्ज्जनप्रवर्त्तितकौलीनायाः अपि सीतायाः सुवर्णमयीं प्रतिकृतिं यज्ञे सहधर्म्मचारिणीं विहितवान् यतः अतो लज्जायाः किञ्चिदपि कारणं न वर्त्तते।

अयं भावः कविना कालिदासस्य काव्यात् समाहृतः।

"सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्याम्
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्त्तुः
सा दुर्व्वारं कथमपि परित्यागदुःखं विषेहे॥"

रघुवंशम्।

रामः। तव सीताप्रतिकृती वाष्पैः अश्रुभिः दिग्धं उपचितं चक्षुः दुःखानुपूर्व्वे

नयनं निवेश्य इति शेषः विनोदयामि प्रीणयामि। प्रतिकृतिदर्शनेन कथञ्चित् विरह-विनोदनं करोमि। उक्तञ्च—

वियोगे चायोगे प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि।
तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि गदितः।

दिह + क्त ( कर्म्मणि ) = दिग्ध। देग्धि, दिग्धे ; दिदेह, दिदिहे ; अधिक्षत्, अधिक्षत।

सीता। धनं लब्धा इति धन्या धनवती लब्धा इति धनशब्दात् यत्प्रत्ययः। बहुमन्यते आद्रियते। आशायाः निबन्धनं हेतुः इति आशानिबन्धनम्। जीवति रामे जगत् मङ्गलशतानि पश्येत् इति हेतोः रामस्य जीवनरक्षित्री जीवलोकस्य मङ्गलाशायाः हेतुः। निबध्यते अनेन इति निबन्धनम्। नि + बन्ध + ल्युट् = निबन्धन।

तमसा। [स्मितेन ईषद्धासेन स्नेहेन अस्रेण अश्रुणा च सह वर्त्तमानं यथा तथा परिष्वज्य परिरभ्य आलिङ्ग्येति यावत् ] एवम् अनेन प्रकारेण आत्मा स्वः एव स्तूयते प्रशस्यते। प्रतिकृतेः प्रशंसनेन आत्मनः एव प्रशंसनं क्रियते इत्यर्थः।

सीता। [ लज्जया सह वर्त्तते इति सलज्जम् अधः मुखं यस्याः सा अधोमुखी स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधादिति ङीष् ]। परिहसिता उपहसिता उपहासार्थ-त्वात् हसतिः सकर्म्मकः।

वासन्ती। अयं व्यतिकरः सम्पर्कः समागमः इत्यर्थः महान् प्रसादः अनुग्रहः। कार्य्यस्य राजकृत्यस्य हानिः व्याघातः अतिपातः न स्यात् तथा आस्ताम् भवतु इत्यर्थः।

सीता। प्रतिकूला अनिष्टचारिणी ; रामस्य गमनं अभ्यनुजानती मम अनिष्टं आचरितवती।

तमसा। प्रत्युप्तस्येति। दयिते प्रत्युप्तस्य इव तृष्णादीर्घस्य यस्याः तव चक्षुषः आकर्षः मर्म्मच्छेदपरैः यत्नैः न समाप्यते ॥ ४६ ॥

दयिते वल्लभे, भर्त्तरि प्रत्युप्तस्य निखातस्य इव इत्युत्प्रेक्षा तृष्णया दर्शनलालसया दीर्घस्य दीर्घीकृतस्य प्रसारितस्य यस्याः तव चक्षुषः नयनस्य आत्याख्यायामिकवचनम् आकर्षः आकर्षणम् व्यावर्त्तनम् मर्म्मणः छेदः एव परं प्रधानं येषां तैः मर्म्मच्छेदपरैः अरुन्तुदव्यथाजननैः यत्नैः आयासैः चेष्टाभिरिति यावत् न समाप्यते न अवसाय्यते। तथा त्वया कथं गम्यते इति पूर्व्वेणान्वयः। येनायासेन हृदयं नितरां सन्ताप्यते तादृशं आयासं कुर्व्वती अपि चक्षुस्तावत् स्वामिनः व्यावर्त्तयितुं न शक्नोषि कथं नु गच्छेः इत्यर्थः।

प्रति + वप् + क्त ( कर्म्मणि ) = प्रत्युप्त। वपति ; उवाप ; अवाप्सीत्। दय + क्त (कर्म्मणि) = दयित। दयिते इत्याधारे सप्तमी। आकर्ष = आङ् + कृष् + घञ्

=आकर्ष। कर्षति ; चकर्ष ; अकार्षीत् अक्राक्षीत्, अकृक्षत्। चक्षुषः इति कृद्योगलक्षणा कर्म्मणि षष्ठी। सम् + आप् + लट् ते ( कर्म्मणिवाच्ये ) = समाप्यते।

सीता। अपूर्व्वैः पुण्यैः जनितं उत्पादितं दर्शनं येषां तानि अपूर्व्वपुण्यजनित-दर्शनानि तेभ्यः, अति महता पुण्येन प्राप्तदर्शनेभ्यः आर्य्यपुत्रस्य चरणकमलेभ्यः नमः। नमःस्वस्तीत्यादिना चतुर्थी। गौरवे बहुवचनम्।

सीता। मेघयोः उपरुन्धतोः जलधरयोः अन्तरेण अवकाशेन कियत्चिरं कियन्तंकालं व्याप्य पूर्णिमायाः चन्द्रस्य दर्शनं भवति अत्यल्पक्षणमेव दर्शनं भवति इत्यर्थः। सान्द्रात् मेघावरणात् क्षणं विमुक्तः भूयोऽपि जलदजालेन आव्रियमाणः पूर्णमण्डलः शशधरो यथा अत्यल्पकालमेव दृश्यते, तथा द्वादशवर्षव्यापिना वियोगेन अन्तरितदर्शनः प्रकृष्टपुण्यफलेन क्षणं लब्धसाक्षात्कारः जीवितेशोऽपि पुनर्मे लोचनयोरविषयतां गच्छन् अत्यल्पमेव कालं मया दृष्टः। अत्र अप्रस्तुतप्रशंसालङ्कारः।

तमसा। अहो इति आश्चर्य्ये अव्ययम्। संविधानं रचनावैचित्र्यम्। विविधानां घटनावलीनां देशकालाद्यवस्थाभेदेन भिन्नानामपि एकार्थप्रतिपादने प्रवणायितत्वम् इत्यर्थः। यद्वा भिन्नानामपि शृङ्गारहास्याद्भुतादीनां रसानां भावानां व्यभिचारिणाञ्च अङ्गिनोरसस्य करुणविप्रलम्भस्य अङ्गत्वमित्यर्थः।

एक इति—एक एव करुणः रसः निमित्तभेदात् भिन्नः पृथक् पृथक् इव विवर्त्तान् आश्रयते। अम्भः यथा आवर्त्तबुद्बुदमयान् विकारान् (आश्रयते) तत् समग्रं तु सलिलमेव ॥ ४७ ॥

एक एव करुणः करुणविप्रलम्भाख्यः रसः निमित्तानां कारणानां आलम्बनानां विभावानां व्यभिचारिणाञ्च भेदात् पार्थक्यात् भिन्नः विविधत्वेन प्रतीयमानः सन् पृथक् पृथक् इव नानाविधान् इव विवर्त्तान् अतत्त्वतः अन्यथा प्रथाः वागारम्भणविकारान् इत्यर्थः आश्रयते अवलम्बते। तत्त्वतः अभिन्नः अपि बहुधा रूपभेदान् आपद्यते। यथा अस्मिन्नेव अङ्के वर्णितः करुणोरसः अवस्थाभेदात् शृङ्गाराद्भुतहास्यौत्सुक्य-निर्व्वेदशङ्काकोपाद्याकारेण विवर्त्तितः। तत्र वेदान्तेषु प्रसिद्धमुदाहरणमवतारयति अम्भ इति अम्भः जलं यथा वायुक्षोभादिनिमित्तवशात् आवर्त्तः अम्भोभ्रमः बुद्बुदः जलविकारः जलविम्बम् तरङ्गः ऊर्म्मिः ते आवर्त्तबुद्बुदतरङ्गाः तद्रूपाः आवर्त्तबुद्बुदतरङ्गमयाः तान् विकारान् रूपभेदान् आश्रयते ; किन्तु तत् समग्रं सकलम् आवर्त्तादिकं सलिलं जलमेव ; तदिति विधेयप्राधान्यात् क्लीवम् भिन्नरूपाणामपि तेषां एकपदार्थत्वं द्योत-यितुमेकवचनम्। अत्र विकारशब्दः विवर्त्तार्थप्रतिपादकः पुनरुक्तिपरिहाराय कविना प्रयुक्तः ; ससत्त्वतोऽन्यथा प्रथा इति अर्थस्तु कवेरनभिमतः लोकप्रतीतदृष्टान्तेनैव स्फुटीक्रियते। जलं यथा निमित्तभेदात् आवर्त्तादिरूपभेदानवाप्नोति ; वस्तुतस्तु तत्सर्व्वं जलमेव ; तथा एक एव करुणः रसः अवस्थाभेदान् रतिहासशोकनिर्व्वेदादिरूपतां

भजते, परमार्थतस्तु स एक एव इति उपमालङ्कारः। यथेति उपमालिङ्गस्य दर्शनात्। नात्र वाक्यभेदात् दृष्टान्तालङ्कारः इति वक्तव्यम्, सलिलमेवतु तत् समयमित्यस्यैव वाक्यान्तरस्वीकारेण इष्टार्थसिद्धेः उपमालिङ्गस्य यथाशब्दस्य अन्यथा परिकल्पनं न न्याय्यम्। वसन्ततिलकं वृत्तम्।

वि + वृत् + घञ् = विवर्त्त। तॄ + अङ्गच् = तरङ्ग। आङ् + वृत + घञ् = आवर्त्त। वि + कृ + घञ् = विकार। निमित्तस्य कारणस्य भेदः इति निमित्तभेदः तस्मात्। हेतौ पञ्चमी। आवर्त्तवुद्‌वुदतरङ्गमयान् इत्यत्र मयट् तादात्म्ये।

तमसावासन्त्यौ। तमसा सीतां प्रति, वासन्ती रामं प्रति ब्रूते—

अवनिरिति—अवनिः अमरसिन्धुः अस्मद्विधाभिः सार्द्धम्, छन्दसां यः आद्यः प्रयोक्ता स च कुलपतिः अनुयातारुन्धतीकः स च मुनिः वशिष्ठः भूयसे मङ्गलाय त्वयि भद्रं वितरतु ॥ ४८ ॥

अवनिः धरित्री अमराणां देवानां सिन्धुः सरित्,देशे नदविशेषेऽब्धौ सिन्धुर्नासरिति स्त्रियाम् इत्यमरः, अमरसिन्धुः सुरसरिद्‌गङ्गा, अस्माकं विधा इव विधा प्रकारः यासां ताभिः अस्मद्‌विधाभिः सार्द्धम् सह,छन्दसां विभिन्नानां छन्दसां वेदेषु प्रयुक्तेभ्यःछन्दोभ्यः अन्येषामित्यर्थः आद्यः प्रथमः प्रयोक्ता अवतारयिता स च कुलपतिः मुनीनां दशसाहस्रस्य अध्यापयिता पालयिता च वाल्मीकिः, अनुयाता अनुगता छायेव सहचारिणी इत्यर्थः अरुन्धती यस्य स अनुयातारुन्धतीकः नद्यृतश्चेतिकः अरुन्धतीद्वितीयः स च मुनिः वशिष्ठः भुयसे प्रभूताय मङ्गलाय कल्याणाय श्रेयोविधानुमित्यर्थः त्वयि भद्रं क्षेमं वितरतु प्रयच्छतु। श्वश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् इत्यमरः। यथा वाम् पुनः समागतयोः निरवशेषकल्याणानि वर्द्धन्ते तथा एते सर्व्वेविदध्युरित्यर्थः। मालिनीवृत्तम्।

त्वयि इति अधिकरणविवक्षया सप्तमी। सम्प्रदानत्वस्य विवक्षा अत्र नास्ति। आदौ भवः इति आद्यः। आदि + यत् = आद्य। प्र + युज + तृच् = प्रयोक्तृ। बहु + ईयसु = भूयस्। मङ्गलाय इत्यत्र तादर्थ्ये चतुर्थी।

अदृश्यायाः सीतायाः छायावदवस्तुभूतायाः इव प्रवेशनात् छायेति अङ्कस्य नाम। यद्वा परमार्थतः सीता न समागता ; रामस्तु पञ्चवट्यां सीतायाः स्पर्शादिकं सङ्कल्पवशात् उत्प्रेक्षितवानिति द्योतयितुं छायेति अङ्कस्य नाम कृतं कविना।

इति तृतीयोऽङ्कः समाप्तः।

সীতা। অহো আমি উন্মত্তার ন্যায় হইয়াছি।

রাম। সম্প্রতি সত্য সত্যই প্রলাপ বাক্য উচ্চারণ করিতেছি। (অথবা এক্ষণে রোদন ও বিলাপাদি আবশ্যক হইয়া পড়িয়াছে।) সৈন্যসংগ্রহ সেতুবন্ধনাদি বিবিধ উপায়ের অবলম্বন হেতু এবং শৌর্য্যোন্মত্ত কপিরাক্ষসদিগের বহু যুদ্ধের সংঘটনা দ্বারা

জগতে নিরতিশয় অদ্ভুত রসের অবতারণা বশতঃ নিরন্তর বিয়োগদুঃখবিনোদনোপায়-বিশিষ্ট মুগ্ধাক্ষীর সেই পূর্ব্ববিরহ রিপুবিনাশের সঙ্গে সঙ্গে অবসিত হইয়াছিল। সম্প্রতি এই নিরবধি অপ্রতিকার্য্য বিরহ কিরূপে তুষ্ণীভাবে সহ্য করিব ? ॥ ৪৪ ॥

সীতা। হায় এই বিরহ নিরবধি, হতভাগিনী আমি মরিলাম। [ক্রন্দন করিতে লাগিলেন।]

রাম। হা কষ্ট! হায় প্রিয়ে তুমি এখন কোন্ দেশে রহিয়াছ? যেস্থানে কপীন্দ্রের সহিত আমার মৈত্রী কার্য্যকরী নহে, যেস্থানে কপিদিগের শক্তি নিষ্ফল, জাম্ববানেরও প্রজ্ঞা বৃথা, বায়ুরসুত্র হনুমানও যেস্থানে গমন করিতে পারে না, বিশ্বকর্ম্মার পুত্র নলও যেস্থানে যাইবার পথ প্রস্তুত করিতে অক্ষম এবং সৌমিত্রিরও বাণ যেস্থানে গমন করিতে অসমর্থ ॥ ৪৫ ॥

সীতা। পূর্ব্ববিরহ ইহা অপেক্ষা শ্রেয়ঃ ছিল।

রাম। সখি বাসন্তি, রামের সাক্ষাৎকারলাভ এখন কেবল সুহৃদ্দিগের রোদনের নিমিত্ত মাত্র। তোমাকে আর কতক্ষণ কান্দাইব। আমাকে প্রতিগমনের অনুমতি দাও।

সীতা। [উদ্‌বেগের সহিত তমসাকে অবলম্বন করিয়া] ভগবতি তমসে, আর্য্যপুত্র যে চলিলেন।

তমসা। বৎসে আশ্বস্ত হও, আশ্বস্ত হও, আমরাও আয়ুষ্মান্ কুশলবের বর্ষবৃদ্ধির উপলক্ষে মাঙ্গলিক অনুষ্ঠান সম্পাদনের জন্য ভাগীরথীর চরণোপান্তে গমন করিব।

সীতা। ভগবতি, প্রসন্ন হউন, মুহূর্ত্তের জন্যও এই দুর্লভ জনকে নিরীক্ষণ করি।

রাম। সম্প্রতি অশ্বমেধযজ্ঞের অনুষ্ঠানার্থ আমার সহধর্ম্মচারিণী আছেন।

সীতা। [উৎকম্পিত হইয়া] আর্য্যপুত্র, তিনি কে?

রাম। সুবর্ণময়ী সীতাপ্রতিকৃতি।

সীতা। [উচ্ছ্বাস সহকারে অশ্রুবিসর্জ্জন করিয়া] আপনি এখনও আমার সেই আর্য্যপুত্র। ওমা! আর্য্যপুত্র আমার পরিত্যাগলজ্জাশল্য উৎপাটিত করিয়া দিয়াছেন।

রাম। সেই সুবর্ণময়ী প্রতিকৃতিদর্শন করিয়া আমার এই বাষ্পাকুল চক্ষুঃ বিনোদিত করিব।

সীতা। আর্য্যপুত্র যাহাকে আদর করেন, এবং যিনি আর্য্যপুত্রের চিত্তবিনোদন করিয়া এই জীবলোকের আশার নিবন্ধন হইয়াছেন, তিনি ধন্য।

তমসা। [ঈষৎ হাস্যপূর্ব্বক সস্নেহভাবে ও গলদশ্রুনয়নে] বৎসে, এইরূপে তুমি নিজেরই প্রশংসা করিতেছ।

সীতা। [লজ্জিতভাবে অধোমুখী হইয়া স্বগত] ভগবতী আমাকে পরিহাস করিলেন।

বাসন্তী। এই সমাগম আমাদিগের প্রতি যথেষ্ট অনুগ্রহ প্রদর্শন বটে। প্রতিগমনের সম্বন্ধে এই কথা বলি যে যাহাতে কার্য্যহানি না হয় এইরূপ করুন।

সীতা। বাসন্তীও এক্ষণে আমার প্রতিকূলচারিণী হইল।

তমসা। বৎসে, এস, আমরা যাই।

সীতা। [ কষ্টের সহিত ] তাহাই করি।

তমসা। দর্শনতৃষ্ণায় দীর্ঘীকৃত তোমার চক্ষুঃ স্বামীর গাত্রে যেন প্রত্যুপ্ত হইয়াছে; সেই চক্ষুঃকে ফিরাইয়া লইতে যে চেষ্টা করিতেছ তাহাতে তোমার মর্ম্ম ছিন্ন হইয়া যাইতেছে, কিন্তু চক্ষুঃকে ফিরাইতে পারিতেছ না, এ অবস্থায় তুমি যাইবেই বা কিরূপে? ॥ ৪৬ ॥

সীতা। অপূর্ব্বপুণ্যফলে যাহার দর্শনলাভ ঘটিয়াছে সেই আর্য্যপুত্রের চরণকমলে নমস্কার করি। [মূর্চ্ছিত হইলেন ]

তমসা। বৎসে, সমাশ্বস্ত হও, সমাশ্বস্ত হও।

সীতা। [ আশ্বস্ত হইয়া ] জলদাবরণ নির্মুক্তি ও পুনঃ জলদোপরোধ এই উভয়ের মধ্যে কতক্ষণই বা পূর্ণচন্দ্রের দর্শনলাভ ঘটে?

তমসা। অহো কার্য্যকারণভাবের কি রচনাবৈচিত্র্য।

একই করুণ রস নিমিত্তভেদবশতঃ যেন ভিন্নাবস্থা প্রাপ্ত হইয়া পৃথক্ পৃথক্ রূপভেদ প্রাপ্ত হয়। যেমন জলরাশি আবর্ত্ত বুদ্‌বুদ্ তরঙ্গ রূপ নানা দশান্তর প্রাপ্ত হয় বটে; কিন্তু সমস্তই বস্তুতঃ সলিল ॥ ৪৭ ॥

রাম। বিমানরাজ, এইদিকে চল, এইদিকে চল। [ সকলে উত্থান করিলেন ]

তমসা ও বাসন্তী। [ যথাক্রমে সীতা ও রামের প্রতি ] অস্মদ্‌বিধ ব্যক্তিগণ সহ বসুন্ধরা, সুরনদী গঙ্গা ও বেদ হইতে বিভিন্ন ছন্দঃসমূহের প্রথম প্রবর্ত্তয়িতা সেই কুলপতি বাল্মীকি, এবং অরুন্ধতীদ্বিতীয় মহর্ষি বশিষ্ঠ তোমার প্রভৃত শ্রেয়োবিধানের জন্য শুভাশীর্ব্বাদ প্রদান করুন ॥ ৪৮ ॥

[ সকলে নিষ্ক্রান্ত ]

ছায়া নামক তৃতীয় অঙ্ক পরিসমাপ্ত।

*Sita.*—Oh! I have gone mad, as it were.

*Rama.*—Now have bewailings become indeed a real source of solace to me.

On account of the existence of means (of rescuing Sita), that former separation from my lovely-eyed beloved,—having excited the sentiment of extreme wonder in the world by means of numberless skirmishes of the warlike combatants, which had ever afforded diversions (to my laden heart)—had its termination on the destruction of my enemy. But how can this present unending separation be silently borne? (44).

*Sita.*—It is unending! Alas! I, an unfortunate wretch, am undone. [ *Weeps.* ]

*Rama.*—Oh! woe!

O my dear, in what "undiscovered country" are you which is not within the range (or reach) of the arrows of even Lakshmana, to which no road even Nala, the son of the divine architect Viswakarma, is able to construct, to which even the son of the wind-god has no access, and where the wisdom of even Jambavan is useless, where the valour and prowess of the monkeys are of no avail, and where even my friendship with the monkey-chief does not stand in good stead? (45).

*Sita*.—I have been made to think highly of the former separation.

*Rama*.—Dear friend, Vasanti. Now the sight of Rama is but for the grief of his friends. How long shall I make you weep? Therefore allow me to go.

*Sita*.—[*Supporting herself by leaning on Tamasa, in extreme distress.*]

Venerable Tamasa, my husband is going indeed!

*Tamasa*.—Be consoled, my child, be consoled, we too shall approach the feet of Bhagirathi in order to perform the auspicious rites on account of the progress in age made by the long-lived dear boys, Kusa and Lava.

*Sita*.—Holy dame, have mercy upon me. Let me see for even a moment this person whom I shall hardly find again.

*Rama*.—Now for the performance of the Horse-sacrifice I have got a partner in the practice of religious rites.

*Sita*.—[*Trembling.*] My husband, who is she?

*Rama*.—A golden image of Sita.

*Sita*.—[*Heaving a sigh of relief, with tears.*] You are even now the same husband of mine. Oh! the javelin of shame due to repudiation has been pulled up by my husband.

*Rama*.—I shall divert my eyes full of tears by looking at it.

*Sita*.—Fortunate is she who is honoured by my husband, and who diverting his mind has become the main stay of the hope of the world.

*Tamasa*.—[*Embracing her with a smile and tears of affection.*] My child, thus your ownself is praised.

*Sita.*—[*Bashfully casting down her head, to herself.*] I have been laughed at by the revered Tamasa.

*Vasanti.*—This meeting is a great favour to us. As to your departure, let it be so that no obstruction to your work or duties may take place.

*Sita.*—Now Vasanti has become unfavourable or hostile towards me.

*Tamasa.*—Come, my child, let us go.

*Sita*—[*Sorrowfully.*] Let us do so

*Tamasa.*—Or how can you go away,

The turning away of whose eyes, which have been expanded through an ardent longing for seeing (your lord), and seem to have been riveted upon your beloved husband, cannot be accomplished even with strenuous and heart-rending efforts ? (46).

*Sita.*—Salutations to the lotus-like feet of my husband, a sight of which has been obtained through uncommon merit. [*Swoons*].

*Tamasa.*—Take heart, my child, take heart.

*Sita.*—[*Recovering.*] How long can the full-moon be seen through covering clouds !

*Tamasa.*—How strange are the changes due to the operation of causes !

The one sentiment of grief (of separation), appearing to be subdivided on account of a diversity of causes and circumstances, undergoes various transformations. Just as water undergoes several phenomenal changes in the shape of eddies, bubbles, and billows, yet all this is but water. (47).

*Rama.*—Move this way, prince of aerial cars, move this way.
[*All rise up*]

*Tamasa and Vasanti.*—[*To Sita and Rama respectively.*] May the Goddess Earth, the celestial stream (Ganga) together with persons in our condition, and that preceptor of ten thousand pupils, who is the innovator of metres (other than Vedic), and also the sage Vasistha, accompanied by Arundhati, bestow blessings on you for abounding welfare (48). [*Exeunt Omnes.*]

End of the third act called the Shadow.

---

# चतुर्थोऽङ्कः ।

एक: । सुधातुरपत्यं पुमान् इति सौधातकि: । सुधातु रकङ् च ; चकारादिञ् । अपत्यार्थे सुधातृशब्दात् इञ प्रत्यय: अकङ्चान्तादेश:—सुधातृ + इञ् = सुधातृ + अकङ् + इञ् = सुधात् + अक + इञ् = सौधातकि ।

भूयिष्ठं बाहुल्येन इत्यर्थ: सन्निधापित: समुपस्थापित: अतिथिजन: अभ्यागतलोक: यस्मिन् तस्य भूयिष्ठसन्निधापितातिथिजनस्य बहुभिरतिथिभि: सनाथीकृतस्य आश्रमपदस्य आश्रमस्थानस्य ; आश्रम एव पदमिति आश्रमपदम् ; पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रि-वस्तुषु इत्यमर:, समधिकेन भूयसा आरम्भेण आतिथ्यसम्पादनार्थमायोजनेन, रमणीयता चारुता अवलोक्यताम् । अद्य भगवत: वाल्मीके: आश्रमे अनेके अतिथय: सम्प्राप्ता: तेषां समुचितातिथ्यविधानार्थं विशिष्ट: उद्योग: वर्त्तते खलु । सर्व्वे आश्रमवासिन: व्यग्रा: । भोज्यादीनाञ्च प्राचुर्य्यम् किञ्चिद् वैशिष्ट्यमपि परिलक्ष्यते । एतेन हेतुना आश्रममिदं चारुतरं प्रतिभाति ।

सम् + नि + धा ( णिच् ) + क्त ( कर्म्मणि ) = सन्निधापित । अत्र स्वार्थे णिच् । अतति इति अतिथि: । अत् + इथिन् । अतिथिरिव जन: इति अतिथिजन: । बहु + इष्ठन् = भूयिष्ठ । आङ् + रभ् + घञ् = आरम्भ ।

नीवारेति । तपोवनमृग: सद्यप्रसूताप्रियापीतात् अभ्यधिकम् उष्णमधुरं नीवारौदनमण्डं पर्य्याप्तम् आचामति । सर्पिष्मत: भक्तस्य स्फुरता गन्धेन मनाक् अनुसृत: कर्कन्धूफलमिश्रशाकपचनामोद: परिस्तीर्य्यते ॥ १ ॥

तपोवनस्य मृग: इति तपोवनमृग: आश्रममृग: सद्य: सपदि प्रसूता अपत्यं प्रसूतवती या प्रिया मृगी ; प्रसवव्यथया अतितृष्णातुरा इति भाव: तया पीतात् आतृष्णानिवृत्ते: निपीतात् निपीतप्रचुरपरिमाणात् इति तात्पर्य्यम् अभ्यधिकम् अतिरिक्तं पीतावशिष्ट-मित्यर्थ: उष्णं मधुरं स्वादुरसञ्च नीवारौदनस्य तृणधान्यान्नस्य मण्डं निस्रावं पर्य्याप्तं प्रचुरं यथा स्यात् तथा आचामति पिबति । गर्भमोचनात् तृषितामृगी प्रचुरं पीतवती मण्डम् तत्पीतावशिष्टं मण्डं मृगस्य क्षुत्तृष्णोपशान्तये पर्य्याप्तं भवति ; अनेन मण्डस्य प्राचुर्य्यं प्रभूतौदनपाकस्य गम्यते । सर्पिष्मत: घृतसिक्तस्य इत्यर्थ: भक्तस्य अन्धस: स्फुरता विसर्पता ख्यायमानेन इति यावत् गन्धेन मनाक् ईषत् अनुसृत: अनुगत: किञ्चित्-

सद्द्यताग्रगन्धवान् कर्कन्धूनां फलैः बदरैः मिश्रस्य शाकस्य यत् पचनं पाकः तस्य आमोदः गन्धः परिस्तीर्य्यते ; समन्तात् विसारितो भवति इत्यर्थः । शार्द्दूलविक्रीड़ितं वृत्तम् । सर्व्वरसाग्रे मण्डमस्त्रियाम् । मासराचामनिस्रावा मण्डे भक्तसमुद्भवे । इत्यमरः । सद्यः सपदि तत्क्षणमित्यमरः । भिःस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः इत्यमरः । मनागित्यव्ययम् ईषदर्थे वर्त्तते । किञ्चिदीषन्मनागल्पे इत्यमरः ।

परि + स्तॄ + लट् ते (कर्म्मकर्त्तरि) = परिस्तीर्य्यते । आङ् + मुद + घञ् = आमोद । अनु + सृ + क्त ( कर्म्मणि ) = अनुसृत । परि + आप + क्त ( भावे ) = पर्य्याप्त पर्य्याप्त has been used here as an adverb and it modifies the verb आचामति । आङ् + चम + लट् ति । आङि चमः वक्तव्यमिति दीर्घः । अन्यत्र निचमति, चमति । सद्यः प्रसूता इति सद्यःप्रसूता सुप्सुपेति समासः । सद्योग्रहणं तृष्णातिशयद्योतनार्थम् । सद्यःप्रसूता चासौ प्रियाचेति सद्यःप्रसूताप्रिया अत्र पुम्वद्भावस्य प्रतिषेधश्चिन्त्यः । "अपूरणीप्रियादिषु" इति निषेधस्य वहुव्रीहिसमास एव विषयः । कर्म्मधारयेतु "पुंवत्कर्म्मधारयजातीयदेशीयेषु" इति पूरणीप्रियादिषु अप्राप्तः पुंवद्भावो विधीयते । इति दीक्षितः । प्रसूताप्रिया इति पाठस्तु दुष्टएव । केचित् शाब्दिकास्तु मन्यन्ते यत् अपूरणीप्रियादिषु इति पुम्वद्भावप्रतिषेधः कर्म्मधारयेऽपि अवाधः सञ्चरति । तथाच क्रमदीश्वरस्य सूत्रम् "पुंवन्न प्रियादौ" । कर्म्मधारयसमासेऽपि एतत् सूत्रं न निरवकाशम् इति । सद्यःप्रसूताप्रियया पीतं इति सद्यःप्रसूताप्रियापीतम् । पीतम् इति नपुंसके भावे क्तः । प्रियाकर्त्तृकपाना दधिकम् इत्यर्थः । अधिकार्थशब्दयोगे, पञ्चमी विभक्ते इति वा पञ्चमी । यद्वा पीतमिति कर्म्मणि क्तः । प्रसूताप्रियापीतात् मण्डादभ्यधिकम् अतिरिच्यमानम् अवशिष्टमित्यर्थः मण्डं मृगः आचामति इति योजनीयम् । कर्कन्धूर्बदरी कोलिः कोलं कुवलफेनिले । सौवीरं बदरं घोण्टा इत्यमरः । कर्कन्धाः फलानि इति कर्कन्धूफलानि । तैः मिश्रः इति कर्कन्धूफलमिश्रः । तथोक्तः शाकः । तस्य पचनं तस्य आमोदः । परिस्तीर्य्यते इत्यत्र कर्म्मकर्त्तरि लट् ; कर्म्मणि इति वीरराघवः । वायुना इति कर्त्तृपदमूह्यम् । यद्वा अनुसृतः अनुपश्चात् उद्गच्छन् शाकपचनामोदः सर्पिष्मतः भक्तस्य गन्धेन परिस्तीर्य्यते समन्तात् प्रसार्य्यते इति वा अन्वयः कार्य्यः । गन्धेनेति कर्त्तृपदम् ।

सौधातकिः । विशेषेण उत्कर्षेण सह वर्त्तमानं इति सविशेषम् । सविशेषम् भूतम् इति सविशेषभूतम् । सुप्सुपेति समासः । विशिष्टमित्यर्थः अनध्यायस्य स्वाध्यायविरतेः कारणम् इति अनध्यायकारणम् ; शिष्टानध्याय इत्यर्थः । जीर्णकूर्च्चानां पक्वश्मश्रूणाम् आगतम् आगमनम् । गमेः भावे क्तः । अथवा जीर्णः श्लथः इत्यर्थः कूर्चः भ्रुवोर्मध्यः येषां ते जीर्णकूर्चाः तेषाम् । कूर्चमस्त्री भ्रुवोर्मध्ये कठिन-

श्मश्रुकैतवे इति मेदिनी। जीर्णानि कूर्चाणि श्मश्रूणि येषाम् तेषाम् जीर्णकूर्चानाम् इति वा व्याख्या। वृद्धानां एषाम् अतिथीनामागमनम् विशिष्टं स्वाध्यायविराम-कारणम्।

प्रथम:। बहुमान: आदर: सम्मान: इति यावत्। गुरुषु माननीयेषु अभ्या-गतेषु ते तव कोऽपि अपूर्व्व: अद्भुत: बहुमानस्य आदरस्य हेतु: कारणम्। शिथिल-भ्रूमध्यानां यद्वा पक्वश्मश्रूणामेषां आगमनेन स्वाध्यायविरति रिति ते एषु सम्मान-प्रदर्शनस्य हेतु: आश्चर्य्यमेतत्।

सौधातकि:। किं नामधेयं यस्य स किन्नामधेय:। स्थविराणां वृद्धानां सार्थ: संघात: तस्य स्थविरसार्थस्य; वृद्धसङ्घातस्य। सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके इति मेदिनी। धुरं धरति इति धुरन्धर: अग्रणी:। धरते: खच् निपातनात् सिद्धम् धुरन्धर इति पदम्। स्था + किरच् (स्थवादेश:) = स्थविर:।

भाण्डायन:। प्रहसनम् परिहासम् धिक्। धिक् शब्दयोगात् द्वितीया। अरुन्धत्या पुरस्कृता: इति अरुन्धतीपुरस्कृता: तान् दशरथस्य दारान् पत्नीम् अधिष्ठाय नीत्वा इत्यर्थ: अरुन्धतीप्रमुखानां कौशल्यादीनां नेता भूत्वा सम्प्राप्त: आगत: किमिति प्रलपसि परिहाससूचकं वाक्यं वदसि इत्यर्थ:।

सौधातकि:। हुं स्यात् प्रश्नवितर्कयोरित्यजय:। हुं संप्रश्नवितर्कयोरिति हलायुध:।

सौधातकि:। पुन: किन्तु, ज्ञातम्, बुद्धम् मतम्। वृक: द्वीपी। वृ + कक् = वृक। वृक: श्वापदकाकयो: सृवृभूशुषिमुषिभ्य: कक्। वि + आ + घ्रा + क = व्याघ्र।

भाण्डायन:। आ: इति क्रोधे अव्ययम्। गर्हितं खलुते इदृशं वाक्यम्।

सौधातकि:। परापतितेन आगतेन एव सा कल्याणी कल्याणभाजनम् इत्यर्थ: वराकिका शोच्या मड़मड़ायिता। चर्व्विता भक्षिता च। अस्थ्नां चर्व्वणेन य: शब्द: समुत्पद्यते तस्यानुकृत्या अयं शब्द: निष्पन्न:। मड़ इति अव्यक्त शब्दस्य अनुकरणम् कृतम्। तत: कृतद्विर्वचनात् मड़ इति शब्दात् डाच् प्रत्यय:। अव्यक्तानु-करणाद्द्व्यजवरार्द्धादनितौ डाच् इति डाच्। मड़मड़ा करोति। तत: लोहितादि डाज्भ्य: क्यष् इति क्यष्। मड़मड़ाय इति नाम धातु:। वा क्यष: इति पचे आत्मने-पदम्। मड़मड़ायति, मड़मड़ायते। मड़मड़ायधातो: कर्म्मणि क्त: इति मड़मड़ायिता स्त्रियां।

भाण्डायन:। मांसेन सह वर्त्तते इति समास:। मधुन: पर्क: यत्र स मधुपर्क:। मधुना पृच्यते इति वा मधुपर्क:। मधु सर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभि: प्रोच्यते मधुपर्क:।

"पितृदेवतातिथिपूजायां पशुं हिंस्यात्।
मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि ।
अत्रैव च पशुं हिंस्यान्नान्यथेत्यब्रवीन्मनुः ॥"

मांसेन सहितः मधुपर्कः अतिथये देयः इति आम्नायं वेदं सादरम् अनुवर्त्तमानाः गृहैः दारैः मेधन्ते संगच्छन्ते इति गृहमेधिनः गृहस्थाश्रमिणः अधीतवेदाय अतिथये वत्सतरीं किञ्चित्प्राप्तवयस्कां गोवत्सां महोक्षं वृषभं महान्तं अजं छागं वा निर्वपन्ति भोज्यार्थं प्रयच्छन्ति इत्येव खलु गृहस्थानां धर्म्मः इति धर्म्मसूत्रप्रणेतारः धर्म्मशास्त्राणां स्मृतीनां कर्त्तारः मन्वादयः समामनन्ति संस्मरन्ति । एष विधिर्धर्म्मशास्त्रकारैरुक्तः इत्यर्थः । अत्र वसिष्ठः—

"अथापि ब्राह्मणाय राजन्याय वा अभ्यागताय वा महोक्षं वा महाजं वा पचेदेवमस्यातिथ्यं कुर्व्वन्तीति ॥" चतुर्थः अध्यायः ।

छन्दः अधीते इति श्रोत्रियः । पक्षे छान्दसः । "श्रोत्रियंश्छन्दोऽधीते" । इति । "श्रोत्रियन्निति निपात्यते छन्दोऽधीते इत्येतस्मिन्नर्थे । नकारः स्वरार्थः । श्रोत्रियो ब्राह्मणः श्रोत्रियंश्छन्दोऽधीते इति वाक्यार्थे पदवचनं छन्दसो वा श्रोत्रभावस्तदधीत इति घश्च प्रत्ययः ।" इति काशिका ।

महान् उक्षा इति महोक्षः । अचतुरविचतुर......ऋग्यजुषजातोक्ष महोक्ष वृद्धोक्षोपशुनगोष्ठश्वाः इति निपातनात् साधुः । आङ् + म्ना + लट् अन्ति = आमनन्ति । मनति ; मम्नौ ; अम्नासीत् । म्नातः । आम्ना + घञ् = आम्नाय । निर + वप + अन्ति ( लट् ) = निर्वपन्ति = प्रयच्छन्ति ।

सौधातकिः । निगृहीतः निर्ज्जितः ।

सौधातकिः । विशसिता व्यापादिता ; निहता । वि + शस् + क्त (कर्म्मणि) = विशसित । दध्ना मधुभिश्च मधुपर्कः निर्व्वर्त्तितः सम्पादितः । विसृष्टा त्यक्ता न निहता इत्यर्थः ।

भाण्डायनः । निवृत्तं विरतं मांसं लक्षणया मांसभोजनं येषां ते निवृत्तमांसाः न निवृत्तमांसाः इति अनिवृत्तमांसाः तेषां । मांसभोजनादविरतानाम् ।

भाण्डायनः । तादृशं तथाविधम् अतिघोरमित्यर्थः । दैवस्य भाग्यस्य दुर्विपाकः दुर्विलसितम् इति दैवदुर्विपाकः दशाविपर्य्यासः इत्यर्थः तम् आकर्ण्य । स वैखानसः वानप्रस्थः जातः गृहाश्रमं त्यक्त्वा अरण्ये तरुमूलं समाश्रितवान् । कतिपये कियन्तः संवत्सरा अतीताः । तप्यमानस्य "तपस्तपःकर्म्मकस्य" इति तप्धातोः आत्मनेपदम् यक्‌च ।

भाण्डायन:। चिरं भव: इति चिरन्तन:। चिरमित्यव्ययात् ट्यु ल्। तुट् च।

भाण्डायन:। स्वयमात्मना उपेत्य गत्वा वैदेह: विदेहपतिर्जनक: द्रष्टव्य: साक्षात्कर्त्तव्य: इति कथयितुं देवी अरुन्धती वशिष्ठेन प्रहिता प्रेरिता।

सौधातकि:। वृद्धा: यथा अन्योन्यै: मिलिता: तथा वटवो वयं मिलित्वा शिष्टानध्यायरूपम् आनन्दं क्रीड़या उपभुञ्ज्महे। खेल + शतृ = खेलत्।

भाण्डायन:। प्राचेतस वाल्मीकिं वशिष्ठञ्च उपास्य अभ्यर्च्य अथ याज्ञवल्क्यशिष्य: अनूचान: राजर्षिर्जनक: आश्रमात् तपोवनाद् वहि: स्थितस्य कस्यचित् तरोर्मूलमाश्रित्य तिष्ठति—

हृदीति। य: अन्त:प्रसृमदहन: ज्वलन् वनस्पति: इव हृदिनित्यानुषक्तेन सीताशोकेन तप्यते ॥ २ ॥

अन्त: अभ्यन्तरे प्रसृम: परिव्याप्त: इत्यर्थ: दहन: अनल: यस्य स: अन्त:प्रसृमदहन: अभ्यन्तरलीनपावक: ज्वलन् दीप्यमान: वनस्पति: शमीतरुरिव य: राजर्षिर्जनक: हृदि हृदये नित्यं निरन्तरम् अनुषक्तेन लग्नेन वर्त्तमानेन इति यावत् अनारतमनुभूयमाने-नेत्यर्थ: सीताया: शोकेन सापवादपरित्यागजन्यदु:खेन तप्यते सन्धुक्ष्यते ; पीड्यते इत्यर्थ:।

वनस्य पति: इति वनस्पति: पारस्करादित्वात् सुट्। अपुष्पा: फलवन्तो ये ते वनस्पतय: स्मृता:। अनु + सञ्ज + क्त (कर्त्तरि) = अनुषक्त। उपसर्गात् सुनोतिसुवती-त्यादिनाषत्वम्। प्र + सृप् + क्त ( कर्त्तरि ) = प्रसृप्त। दह + युच् ( कर्त्तरि ) = दहन। दहति ; ददाह ; अधाक्षीत्।

চতুর্থ অঙ্ক।

[ দুই জন তাপসের প্রবেশ ]

একজন। সৌধাতকি, আজ ভগবান্ বাল্মীকির আশ্রমে অনেক গুলি অতিথির সমাগমবশতঃ তাঁহাদিগের অভ্যর্থনার নিমিত্ত সমধিক উদ্যোগহেতু আশ্রমের কেমন রমণীয়তা হইয়াছে অবলোকন কর।

দেখ—ঐ তপোবনের মৃগ সদ্যঃপ্রসূত ( তৃষ্ণাতুর) প্রিয়া কর্ত্তৃক পীতাবশিষ্ট উষ্ণ মধুর নীবারৌদনের মণ্ড পর্য্যাপ্ত পরিমাণে পান করিতেছে। বদরীফলের সহিত শাকরন্ধনের গন্ধ ঘৃতযুক্ত অন্নের সমুদ্গতগন্ধের সহিত ঈষন্মীলিত হইয়া চতুর্দ্দিকে ব্যাপ্ত হইয়া পড়িতেছে ॥ ১ ॥

সৌধাতকি। অদ্য ঐ জীর্ণকূর্চ্চ অতিথিদিগের আগমন উপলক্ষে অনধ্যায়কারণ উপস্থিত হইয়াছে।

প্রথম। [ হাস্য করিয়া ] সৌধাতকি, গুরুদিগের প্রতি তোমার সম্মান প্রদর্শনের কারণ কিছু অদ্ভুত প্রকারের দেখিতেছি।

সৌধাতকি। ওহে ভাণ্ডায়ন, এই বৃহৎ বৃদ্ধসঙ্ঘের ধুরন্ধররূপে যে অতিথি অদ্য আসিয়াছেন, উহাঁর নাম কি ?

ভাণ্ডায়ন। এই রূপ পরিহাস বাক্যপ্রয়োগ নিতান্তই গর্হিত। ইনি ভগবান্ বশিষ্ঠ অরুন্ধতীকে অগ্রে করিয়া মহারাজ দশরথের পত্নীবর্গের নেতৃত্বগ্রহণপূর্ব্বক ঋষ্যশৃঙ্গের আশ্রম হইতে আসিয়াছেন। তুমি কেন এরূপ প্রলাপ বাক্য বলিতেছ ?

সৌধাতকি। ইনি বশিষ্ঠ ?

ভাণ্ডায়ন। হাঁ।

সৌধাতকি। আমি মনে করিয়াছিলাম, এ একটা ব্যাঘ্র কিংবা বৃক।

ভাণ্ডায়ন। আঃ কি বলিতেছ ?

সৌধাতকি। তিনি আসিয়াই সেই হতভাগ্য বৎসতরীর অস্থি মাংস মড়মড় শব্দে চর্ব্বণ করিয়া ফেলিলেন।

ভাণ্ডায়ন। মাংস সহিত মধুপর্ক দান করিবে এই বেদবাক্যের প্রতি সম্মান প্রদর্শন করিয়া গৃহস্থগণ অতিথিরূপে সমাগত বেদাধ্যায়ী বিপ্র বা রাজন্যের অভ্যর্থনার নিমিত্ত বৎসতরী, মহোক্ষ, অথবা বৃহৎ ছাগ প্রদান করিয়া থাকেন। ধর্ম্মসূত্রকারগণ ইহাই ধর্ম্ম বলিয়া বিধান করিয়াছেন।

সৌধাতকি। ওহে ভাণ্ডায়ন, তোমার পরাজয় হইয়াছে।

ভাণ্ডায়ন। কিরূপে ?

সৌধাতকি। বশিষ্ঠমিশ্রের আগমনে বৎসতরী নিহত হইল। কিন্তু অদ্যই সমাগত রাজর্ষি জনকের অভ্যর্থনার্থ ভগবান্ বাল্মীকি দধি ও মধু দ্বারা মধুপর্ক দান করিলেন। বৎসতরীটিকে ছাড়িয়া দেওয়া হইল।

ভাণ্ডায়ন। যাঁহারা মাংসভোজন হইতে নিবৃত্ত হন নাই তাঁহাদিগের সম্বন্ধে ঋষিগণ এইরূপ বিধান করিয়াছেন। মাননীয় জনক কিন্তু মাংসভোজন হইতে নিবৃত্ত হইয়াছেন।

সৌধাতকি। কি নিমিত্ত ?

ভাণ্ডায়ন। সীতাদেবীর তাদৃশ দৈবদুর্ব্বিপাকের কথা শ্রবণ করিয়াই তিনি বানপ্রস্থধর্ম্ম অবলম্বন করিয়াছেন, এবং এই অবস্থায় চন্দ্রদ্বীপে তপস্যা করিতে করিতে তাঁহার কতিপয় বৎসর অতীত হইয়াছে।

সৌধাতকি। তবে কি নিমিত্ত আসিয়াছেন ?

ভাণ্ডায়ন। চিরন্তন প্রিয়সুহৃৎ বাল্মীকির সহিত সাক্ষাৎ করিতে আসিয়াছেন।

সৌধাতকি। সম্বন্ধিনীদিগের সহিত অদ্য তাঁহার সাক্ষাৎকার হইয়াছে কি ?

ভাণ্ডায়ন। সম্প্রতি ভগবান্ বশিষ্ঠ ভগবতী অরুন্ধতী দ্বারা দেবী কৌশল্যার

নিকট বলিয়া পাঠাইয়াছেন যে স্বয়ং গিয়া দেব মিথিলাধিপতির সহিত সাক্ষাৎ করিবে।

সৌধাতকি। এই বৃদ্ধগণ যেরূপ পরস্পর মিলিত হইয়াছেন, আমরাও বালকগণেরা সেইরূপ মিলিত হইয়া খেলা করিয়া এই অনধ্যায় মহোৎসব সম্পাদন করি।

[ উভয়ে অগ্রসর হইল ]

ভাণ্ডায়ন। ব্রহ্মবাদী পুরাণ রাজর্ষি জনক বাল্মীকি ও বশিষ্ঠের উপাসনা করিয়া সম্প্রতি আশ্রমের বহিঃস্থিত বৃক্ষমূলে ঐ অবস্থান করিতেছেন—যিনি হৃদয়ে, প্রতিনিয়ত বর্ত্তমান সীতাশোকে সন্তাপিত হইয়া অন্তর্লীনপাবক দীপ্যমান শমীতরুর অবস্থা প্রাপ্ত হইয়াছেন ॥ ২ ॥

[ উভয়ে নিষ্ক্রান্ত ]

বিষ্কম্ভক।

## ACT IV.

[ *Then enter two hermits* ]

*First.*—Behold, Saudhataki, the charmingness, on account of preparations on a large scale, in the hermitage of the holy Valmiki, where many guests have been caused to assemble to-day. For—

The deer of the grove of penance drinks to his full satisfaction the tepid and sweet gruel of the boiled Nibara rice, after it has been drunk by his consort that has just now brought forth a young one. And the sweet smell of pot-herbs cooked with jujube, mingled slightly with the flavour of boiled rice with ghee, is diffused all around. (1).

*Saudhataki.*—This advent of the grey-bearded people must be a special occasion for a holiday.

*First.*—[*looking*]. This is a strange reason, Saudhataki, for your respect for these respectable people.

*Saudhataki.*—What is the name, O Bhandayana, of the guest that has come to-day at the head of a large body of old people ?

*Bhandayana.*—Out upon your joke ! He is the holy Vasistha who has come here from the hermitage of Rishyasringa, escorting the queens of the great King Dasaratha with Arundhati at their head. Why do you then talk in this strain ?

*Saudhataki.*—Is he Vasistha ?

*Bhandayana.*—Yes.

*Saudhataki.*—I thought, however, that he must be a tiger or a wolf.

*Bhandayana.*—Pshaw ! What nonsense do you say !

*Saudhataki*—Arriving here he forthwith made a repast of that poor creature, the calf, crunching it by his teeth

*Bhandayana.*—Out of respect for the dictum of the Vedas that the respectful offering of honey (and curds) should be made along with meat, householders offer a calf, or a big bull, or a big goat to a guest well-read in the Vedas. And the writers on codes of law lay down it to be a (householder's) duty.

*Saudhataki.*—Oh ! You are worsted in the argument.

*Bhandayana.*—How so ?

*Saudhataki.*—On the arrival of the respectable Vasistha the heifer was killed ; but the revered Valmiki made the respectful offering of *madhuparka* to the royal sage Janaka, arrived to-day, with honey and curds alone ; but the calf was let off.

*Bhandayana.*—The sages have prescribed such rites in the case of those who have not given up eating meat : But the honoured Janaka has abstained from meat.

*Saudhataki.*—For what reason ?

*Bhandayana.*—The very moment he heard of that dire vicissitude of fortune of the queen Sita he became an anchorite. And as such he has passed some years practising austerities in a grove of penance in Chandradwipa.

*Saudhataki*—Why has he then come here ?

*Bhandayana*—To see his dear, old friend Prachetas.

*Saudhataki.*—Has he had an interview to-day with his female relations or not ?

*Bhandayana,*—Just now the holy Vasistha has sent the revered Arundhati to the queen-dowager Kausalya to tell her that she must herself come and see the king of the Videhas.

*Saudhataki.*—As these old people have met together, so let us join our young companions and make a long day of this festive holiday by sporting. [*They advance*].

*Bhandayana.*—There the aged royal sage Janaka, teacher of the Vedas, sits at the foot of a tree outside the hermitage, after having paid his respects to Valmiki and Vasistha. It is he—who with his grief for Sita ever present in his heart is consumed like a big (Sami) tree of the forest burning with the fire that has crept within it. (2).

[*Exeunt.*]

जनकः। अपत्ये इति। अपत्ये यत् तादृक् दुरितम् अभवत् महता तीव्रेण, व्रणितहृदयेन व्यथयता तेन विषक्तः पटुः धारावाही चिरेणापि नव इव, क्रकच इव मर्म्माणि निकृन्तन् मे मन्युः नहि विरमति ॥ ३ ॥

अपत्ये कन्यारूपे तोके यत् तादृक् तथाविधम् अचिन्तनीयं घोरम् दुरितम् व्यसनम् निर्व्वासनरूपः अनिष्टापातः इत्यर्थः, अभवत् महता दुर्वहेण, तीव्रेण तीक्ष्णेन व्रणितं सञ्जातव्रणं हृदयं यस्मात् येन वा तेन व्रणितहृदयेन निर्भिन्नहृदयेन व्यथयता पीड़यता सन्तपता इति यावत् तेन दुहितृविपत्पातेन विषक्तः हृदये गाढं निहितः सञ्जनितः इत्यर्थः पटुः प्रबलः हृदयोन्मथने समर्थः इत्यर्थः धारया अच्छिन्नप्रवाहेण वहतीति धारावाही निरन्तर मनुभूयमानः चिरेणापि महता कालेनातीतेनापि नव इव प्रत्यग्र इव कालात्ययेऽपि अमन्दीभूतः क्रकचः करपत्रम् इव मर्म्माणि जीवस्थानानि निकृन्तन् भिन्दन् मे मन्युः शोकः नहि विरमति न निर्व्वाणमुपैति। निरन्तरमहं दुःसहेन शोकाग्निना दन्दह्ये इति भावः। शिखरिणीवृत्तम्। उत्प्रेक्षोपमयोः संसृष्टिः।

दुर् + इण् + क्त ( भावे ) = दुरित। वृजिनं दुरितं दुष्कृतमघमंहः किल्बिषं तमः कल्कमिति हलायुधः। व्रणम् जातमस्य इति व्रणितम्। तारकादित्वादितच्। व्यथ् + ( णिच् ) + शतृ = व्यथयत्। मित्संज्ञत्वात् ह्रस्वः। वि + सन्ज् + क्त ( कर्म्मणि ) = विषक्त। उपसर्गात् सुनोति सुवतीत्यादिना षत्वम्। विषक्त literally means caused to stick fast, hence created. धारया वोढुं शीलमस्य इति धारावाही वहेः णिनिः। चिरेणेत्यव्ययम्। अपवर्गे तृतीया। व्याङ्परिभ्यो रमः इति रमेः परस्मैपदम्। क्रकचोऽस्त्रीकरपत्रम् इत्यमरः।

कष्टम् आहोवत महान् क्लेशः ; जरसा वार्द्धकेन दुरासदेन दुरभिभवेण, दुर्निवारेण इत्यर्थः दुःखेन शोकेन, भूयः पुनरपि पराकश्च सन्तापनश्च ते पराकसान्तपने,ते प्रभृतिरादिर्येषां तैः तपोभिः नानाविधैः कृच्छ्रसाध्यैः व्रतैश्च आत्ताः गृहीताः विशोषमापादिताः रसाः शोणितादयः द्रवाः धातवः शरीरपोषकाः त्वङ्मेदोमज्जप्रभृतयः यस्य स आत्तरसधातुः, शरीरक्षयकारिणा वार्द्धकेन, अनुत्तमेन शोकसन्तापेन, विविधैः उपवाससाध्यव्रतैश्च नितरां क्षीणः अपटुश्च, अतएव अनुपयुज्यमानः कुत्रापि व्यापारे

उपयोगित्वमनापद्यमान: निष्प्रयोजन: इत्यर्थ: अयं मे दग्धदेह: अद्यापि न पतति, न विशीर्य्यते इत्यर्थ:। तथैव मे शरीरधारणम् क्लेशपरम्परामनुभवत: तस्य देहस्य विनाश एवेदानीं श्रेयान्। नायं स्वयं विनाशमुपपद्यते, तर्हि किमिमं पातयामि। न हि खलु तादृशं घोरं दुष्कृतमनुष्ठातुं शक्यते। यत: ये केचिदिह आत्महत्यां कुर्व्वन्ति ते मरणादूर्द्ध्वम् सूर्य्यांशुसम्पर्कशून्ये अतिघोरेण गाढ़ान्धकारेण व्याप्ते दुरालोकपदार्थनिचये दु:सञ्चरे अतिभीमे कुत्रचिद् भुवने आपापक्षयान्निवसन्ति इति हि ऋषयोऽब्रुवन्। अत्र वाजसनेयसंहितोपनिषत् प्रमाणम्—

असूर्य्या नाम ते लोका अन्धेन तमसावृता:।
तांस्तेप्रेत्याभिगच्छन्ति ये के चात्महनो जना:॥

जॄ + अङ् ( भावे ) = जरा। ङित्वेऽपि गुण: निपात्यते; तृतीयाया एकवचने जरसा जरया इति पदद्वयम्। दुर् + आङ् + सद + खल् ( कर्म्मणि ) = दुरासद। सन्तपनमेव इति सान्तपनम्। सम् + तप + ल्युट् = सन्तपन।

गोमूत्रं गोमयं क्षीरं दधि सर्पि: कुशोदकम्।
जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनं चरन्॥
पृथक् सान्तपनद्रव्यै: षड्ह: सोपवासक:।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपन: स्मृत:।
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृत:॥
एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्र: प्रकीर्त्तित:॥
यथा कथञ्चित् त्रिगुणं प्राजापत्योऽयमुच्यते।
अयमेवातिकृच्छ्र: स्यात् पाणिपूरान्नभोजन:॥
कृच्छ्रातिकृच्छ्र: पयसा दिवसानेकविंशतिम्।
द्वादशाहोपवासेन पराक: परिकीर्त्तित:॥ इति याज्ञवल्क्यसंहिता॥

आङ् + दा + क्त ( कर्म्मणि ) = आत्त। उप + युज् ( दिवादि ) + शानच् ( कर्त्तरि ) = उपयुज्यमान। न उपयुज्यमान: इति अनुपयुज्यमान: useless. Cf. Superfluous lags the veteran on the stage. *Jhonson.*

तमस् + र = तमिस्रा। तमस: उपधाया इत्वं रश्च। स्त्रीत्वमतन्त्रम्। तमिस्रम्। ज्योत्स्नातमिस्राशृङ्गिणोर्ज्जस्विन्नूर्ज्जस्वलगोमिन्मलिनमलीमसा:। एते निपात्यन्ते। तमिस्रं तिमिरं तम: इत्यमर:। तमिस्रा तु तमस्तति:। तमिस्रमेव इति तामिस्रं स्वार्थे

अण्। अन्धयति यत् तत् अन्धम्। पचाद्यच् इति अच्। अन्धं तामिस्रं येषु ते अन्ध-तामिस्राः नास्ति सूर्य्यः येषु ते असूर्य्याः। तेभ्यः इति क्रियया यमभिप्रैति इति सम्प्रदानत्वात् चतुर्थी। आत्मानं घ्नन्ति ये ते आत्मघातिनः। आत्मन् + हन् + णिनि = आत्मघातिन् ॥

*N. B.* Howsoever learned, morally advanced and firm might Janaka have been he was after all a human being; and as such could not transcend the weakness and frailties incident to human nature. A strong and overpowering grief sways down the mind of even pious ascetics; and tormented by the anguish of excessive grief even pious men are sometimes tempted by the devil to think of suicide as a means of escape from such untold torments. The reader would be struck with the striking resemblance between the strain of thought passing in the mind of Janaka and that in the mind of Shakespeare's Hamlet :—

..............To die : to sleep ;
No more ; and, by a sleep to say we end
The heart-ache and the thousand natural shocks
That flesh is heir to, it is a consummation
Devoutly to be wished. To die, to sleep ;
To sleep : perchance to dream : ay, there's the rub ;
For in that sleep of death what dreams may come
When we have shuffled off this mortal coil,
Must give us pause. There's the respect
That makes calamity of so long life ;
For who would bear the whips and scorns of time ;

* * *

When he himself might his quietus make
With a bare bodkin ?.................
But that the dread of something after death

The undiscovered country from whose bourn
No traveller returns puzzles the will
And makes us rather bear those ills we have
Than fly to others that we know not of ?

अनेकेषां बहूनां संवत्सराणां वर्षाणाम् अतिक्रमे अत्यये सत्यपि क्षणे क्षणे इति प्रतिक्षणं प्रतिमुहूर्त्तं परिभावनया परिचिन्तनेन स्पष्टः सुव्यक्तः निर्भासः अवभासनं स्फुरणमिति यावत् यस्य स प्रतिक्षणपरिभावनास्पष्टनिर्भासः निरन्तरचिन्तनात् हृदये अव्यभिचारेण वर्त्तमानः प्रत्यग्रः नूतन इव दारुणः मर्म्मच्छेदी दुःखस्य संवेगः शोकोच्छ्वासः न प्रशाम्यति न उपशान्तो भवति न विरमति इत्यर्थः। हा मातः यज्ञभूमिसमुत्पन्ने सीते, एवंविधः तव निर्म्माणोत्कर्षः ईदृशं दशाविपर्य्यासं गतः येन त्वदर्थं स्वेच्छया उच्चैरारटनेन शोकभारं तनूकर्त्तुं न पारयामि। सापवादं परित्यक्तायाः दुहितुः कृते क्रन्दितुं जिह्रेमि।

स्पश् (णिच) + क्त = स्पष्ट, पक्षे स्पाशित, वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः इति निपातनात् सिद्धम्। निर् + भास् + घञ् = निर्भास। परि + भू + (णिच्) + युच् = परिभावना। सम् + विज् + घञ् = संवेग। परि + नम् + क्त ( कर्त्तरि ) = परिणत। लज्ज + अ ( भावे ) = लज्जा। लज्जया इति हेतौ तृतीया। स्वस्य छन्दः अभिप्रायः यस्मिन् कर्म्मणि तद् यथा तथा स्वच्छन्दम् क्रियाविशेषणमिदम्। शक् + लट् ते ( भावे ) शक्यते। निर् + मा + ल्युट् = निर्म्माण। निर्म्माणस्य भागः इति निर्म्माणभागः। भज् + घञ् = भाग।

अनियतेति। हा हा पुत्रि शिशोः ते अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रम् स्खलदसमञ्जसमञ्जुजल्पितं वदनकमलकं स्मरामि ॥ ४ ॥

हा हा वत्से शिशोः शैशवे स्थितायाः ते तव रुदितं रोदनञ्च स्मितं मन्दहास्यञ्च इति रुदितस्मिते अनियते अस्थिरे रुदितस्मिते यत्र यत् अनियतरुदितस्मितम् निर्मित्तं विनैव इदानीमेव रुदत् इदानीमेव हसच्च, दन्ताः कुड्मलाः कोरका इव इति दन्तकुड्मलाः तेषां अग्राणि इति दन्तकुड्मलाग्राणि विराजन्ति शोभमानानि कतिपयानि अल्पानि इति भावः कोमलानि सुकुमाराणि दन्तकुड्मलाग्राणि यस्मिन् तत् विराजत्कतिपयकोमलदन्तकुड्मलाग्रम् कुन्दकोरकसदृशमनोज्ञदशनैः शोभमानम् स्खलत् अस्पष्टोच्चारणात् विशीर्णाक्षरम् असमञ्जसं असम्बद्धम् मञ्जु मनोहरं मुग्धम् इति पाठे स एवार्थः जल्पितं भाषितं यस्य यस्मिन् वा तत् स्खलदसमञ्जसमञ्जुजल्पितम् विशीर्णवर्णासङ्गतार्थमुग्धभाषितं वदनकमलकं सरसिजसुन्दरमाननं स्मरामि। जातायास्ते

दृश्यमानमिदानीमपि मे नेत्रपथारूढ़मिवाभाति त्वं पुन: क्वगतासि । पुष्पिताग्रा-वृत्तम् । स्वभावोक्तिरलङ्कार: स च उपमया संसृज्यते ॥

रुद+(भावे) क्त=रुदित । स्मि+(भावे)+क्त=स्मित । वि+राज+शतृ=विराजत् । स्खल+शतृ=स्खलत् । अञ्जसा इत्यव्ययम् याथार्थ्यवर्त्तते । तत्त्वे त्वध्वाञ्जसा द्वयमित्यमर: । अञ्जसा तत्त्वं समधिगतमिति समञ्जसम् न समञ्जसमित्य-समञ्जसम् । जल्प+(भावे)क्त=जल्पित ।

The idea of the verse has been in the main borrowed from the following lines of Kalidasa :

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवच:प्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥

भगवति वसुन्धरे भूतधात्रि त्वं सत्यं निश्चितमेव अतिदृढा अतिकठिना असि । वसूनि रत्नानि धारयति या सा वसुन्धरासंज्ञायां भृतृवृजिधारिसहितपिदम इति खच् खचि ह्रस्व: इति ह्रस्व: । दृह्+क्त=दृढ । दृढ: स्थूलबलयो: इति निपात्यते ।

त्वमिति । त्वं वह्नि: मुनय: वशिष्ठगृहिणी गङ्गा च, यदि वा रघो: कुलगुरु: देव: स्वयं भास्कर: यस्या: माहात्म्य विदु: वाक् विद्यामिव भवती याम् असूत, या तद्वत् तु दैवतम्, तस्या: दुहितु: तथा विशसनं दारुणे त्वं किम् असृष्यथा: ॥ ५ ॥

त्वं विश्वस्य शरीरभूता भवती, वह्नि: पावक: मुनय: तप:प्रभावात् त्रिकालज्ञा: ऋषय: वशिष्ठस्य गृहिणी देवी अरुन्धती गङ्गा च लोकपावनी भागीरथी च, यद्विवा रघो: कुलगुरु: वंशस्य मूलपुरुष: देव: स्वयं साक्षादित्यर्थ: भास्कर: सविता यस्या: सीताया: माहात्म्यं चारित्रोत्कर्षम् पातिव्रत्यमित्यर्थ: विदु: जानन्ति । त्वं च स च तेच साच साच सच इति ने त्यदादीनां मिथ: सहोक्तौ यत् परं तच्छिष्यते इति तच्छब्दस्य शेषत्वेन अवस्थानात् क्रियापदे प्रथमपुरुषस्य वहुवचनम् । विदो लटो वेति झेरुसादेश: । वाक् भारती विद्याम् इव भवती यां सीतामसूत अजनयत् या तद्वत् तया भारत्या तुल्यमिति तद्वत् दैवतम् देवता ; तस्या स्तादृश्या: लोकोत्तर-पावित्र्यशालिन्या: दुहितु: कन्याया: तथा तेन प्रकारेण विशसनं व्यापादनम् ,विजनेऽरण्ये असहायाया: सापवादवर्ज्जनेन विनाशनमित्यर्थ:, अयि दारुणे निष्ठुरे त्वं किम् किमर्थम् असृष्यथा: सोढ़वती असि । निरपराधाया: परिवर्ज्जनं तत्फलेन हननं सर्व्वथा न समायोग्यम् । अवश्यमेव त्वया तत् निर्य्यातनीयम् । दुहितृनिकारप्रति-

मोचनमकुर्व्वत्यास्ते नैष्ठुर्य्यं सुव्यक्तमेव इति भावः। शार्द्दूलविक्रीडितं वृत्तम्। उपमालङ्कारः।

महान् आत्मा यस्याः सा महात्मा तस्याः भावः माहात्म्यम्। गुणवचनादित्वात् ष्यञ्। भासं दीप्तिं करोति इति भास्करः। कस्कादित्वात् सः। करोतेः टः। स्वयमात्मना इति तृतीयार्थे अव्ययम्। प्रकृत्यादिभ्यश्चोपसंख्यानमिति तृतीया। देवता एव इति दैवतम्। स्वार्थे अण्। वा पुंसि दैवतम्। विधेयभावात् लिङ्गस्य स्वातन्त्र्यम्। वि + शस् + ल्युट (भावे) = विशसन। मृष् + लङ् थास् = अमृष्यथाः। मृषयति न नृपाणां मृष्यते चोद्धतानामनुचित मणुमात्रं न द्विषां मर्षते यः। अपिशतमपराधान् मर्षति ब्राह्मणानांसितवसनभृतां यो मर्षयत्यागमज्ञः। मृष्यति, मृष्यते, मर्षते, मर्षति ; मर्षयति, मर्षयते ; मृषयति ; मृषति, मृषते।

जनकः। गृहिना तन्नामधेयेन कञ्चुकिना उपदिश्यमानः प्रदर्श्यमानः मार्गः पन्थाः यस्याः यस्यैवा सा उपदिश्यमानमार्गा। धर्म्मस्य पत्नी इति धर्म्मपत्नी। अश्वघासादिवत् षष्ठीसमासः। प्रियाचासौ सखीचेति प्रियसखी। प्रत्येति विश्वसिति इत्यर्थः। प्रति + इण् + लट् ति = प्रत्येति।

आसीदिति। इयं दशरथस्य गृहे श्रीः यथा आसीत्। श्रीः एव वा ; उपमानपदेन किम्। कष्टं वत सा एषा दैववशेन अन्यत् दुःखात्मकं किमपि भूतमिव जाता अहो विपाकः॥ ६॥

इयं कौशल्या दशरथस्य गृहे सद्मनि श्रीर्यथा लक्ष्मीरिव सौभाग्यस्य अधिष्ठात्री देवीव आसीत् अथवा इयं श्रीरेव राजलक्ष्मीरेव आसीत् द्वितीया राजलक्ष्मीर्नासीत्। उपमानपदेन उपमाद्योतकेन यथाशब्देन किम् औपम्यवाचकेन यथाशब्देनालम्। सर्व्वथा राजलक्ष्म्या सह अस्याः अभेदात्, भेदाभावेन'उपमायाः अनवकाशात् उपमावाचकस्यापि अनवकाशः। वत हा कष्टम् सा एषा दैववशेन प्रतिकूलभाग्यपरिणामात् दुःखमेव आत्मा स्वभावो यस्य तत् दुःखात्मकं शेषादविभाषा इति समासान्तः कः। दुःखस्वरूपं किमपि अनिर्व्वाच्यम् अन्यत् लोकविलक्षणम् भूतम् प्राणिविशेषः जाता सम्पन्ना। उद्देश्यस्य प्राधान्यात् जातेति कृदन्तक्रियापदं विधेयेन नान्वितम्। अहो विपाकः दशाविपर्य्यासः। उपमालङ्कारः रूपकञ्च। वसन्ततिलकं वृत्तम्।

उप + मा + ल्युट् = उपमान। उपमानमुपमा सादृश्यमित्यर्थः तस्य पदम् वाचकं पदमित्यर्थः इति उपमानपदम्। तेन। गम्यमानक्रियानुरोधात् करणे तृतीया। वि + पच् + घञ् = विपाक।

दशाया: अवस्थाया: विपर्य्यास: वैपरीत्यम् इति दशाविपर्य्यास:। विप्रतीपावस्थान्तरोपनिपात:। दशा वर्त्तावस्थायाम्।

य इति। य एव जन: पूर्व्वं मे मूर्त्त: महोत्सव: आसीत्। तस्य एव दर्शनम् चते चारम् इव असह्यं जातम्॥ ७॥

य एव कौशल्यालक्षण: जन: पूर्व्वं सीताया: विवासनात् प्राक् मे मम सम्बन्धे मूर्त्त: शरीरी महोत्सव: निर्भरानन्दसन्दोह: आसीत्; यस्य जनस्य दर्शनेन प्राक् हृदये कोऽपि परमानन्दप्रवाह: समुच्छलितोऽभूत्; इदानीं तस्य एव जनस्य दर्शनं साक्षात्कार: चते शस्त्रादिभि: निर्भिन्ने अङ्गे, व्रणादौ वा चारं लवणमिव असह्यं सोढुमशक्यम् नितरां क्लेशप्रदमित्यर्थ: जातम् संवृत्तम्। पूर्व्वार्द्धे रूपकालङ्कार: द्वितीयार्द्धे उपमालङ्कार:।

मूर्च्छ + क्त = मूर्त्त। महान् उत्सव: इति महोत्सव:। उत् + सु + अप् = उत्सव। चण् + क्त (कर्म्मणि) = चत। चारो रसान्तरे धूर्त्ते लवणे काचभस्मनो: इति मेदिनी। चार: काच: इति अमर:। भूतिर्भसितं भस्मचारमिति हलायुध:। एतावता चारशब्दस्य पुंनपुंसकता ज्ञेया। न सह्यमित्यसह्यम्। सह् + यत् = सह्य। शकिसहोश्चेति यत्।

अरुन्धती। ननु इति आमन्त्रणे अव्ययम् स्वयमात्मना उपेत्य समीपे गत्वा विदेहाधिपति: भवत्या साक्षात्कर्त्तव्य:। तदर्थमहं भवत्या: समीपे युष्माकं कुलगुरुणा वशिष्ठेन प्रेषितास्मि। तथापि किमर्थं त्वं गमने उत्साहं न प्रदर्शयसि; प्रत्युत अगमने एव तव प्रयत्नो दृश्यते। अध्यवसाय: स्थेयान् प्रयत्न:। अनध्यवसाय: अप्रयत्न: अनुद्यम:। अधि + अव + सो + घञ् = अध्यवसाय। पदे पदे प्रतिपदम्। वीप्सायां द्विरुक्ति:।

कञ्चुकी। आत्मानं संस्तम्भय पर्य्यवस्थापय, धैर्य्यमापादय। अनुरुध्यस्व, अनुसर पालय इत्यर्थ: कुलगुरोराज्ञाम्। सम् + स्तम्भ् (णिच्) + लोट् हि = संस्तम्भय। अनु + रुध् (दिवादि आत्मनेपदी) + लोट् स्व = अनुरुध्यस्व।

कौशल्या। समं युगपदेव, तुल्यकालमेव इत्यर्थ: सर्व्वाणि दु:खानि सीतापरित्यागपुत्रवियोगवैधव्यजनितानि दु:खानि हृदये आविर्भूय मर्म्मपीडां जनयन्ति। मन्ये मम हृदयस्य बन्धनं छिन्नमिव भवति। शोकभाराक्रान्तं मम हृदयं नितरामुद्विग्नं जातं न खल्वहं हृदयावेगं शमयितुं समर्था। उद्वर्त्तमानम् उच्छिन्नप्रायमित्यर्थ: मूलस्य बन्धनं यस्य तत् उद्वर्त्तमानमूलबन्धनम्।

अरुन्धती। सन्तानेति। मानुषाणां सद्बन्धुवियोगजानि सन्तानवाहीनि अपि दु:खानि प्रेयसि जने दृष्टे दु:सहानि स्रोत:सहस्रै: इव संप्लवन्ते॥ ८॥

मानुषाणां मनुष्याणां नराणामिति यावत् सद्भिः उत्कृष्टैः परमप्रेमास्पदैरितिभावः बन्धुभिः स्वैः वियोगात् विरहात् जायन्ते यानि तानि सद्बन्धुवियोगजानि प्रणयास्पदभ्रात्रादिमरणजन्यानि सन्तानेन धारया अविच्छेदेन इति यावत् वोढुं प्रवर्त्तितुं शीलं येषां तानि सन्तानवाहीनि निरन्तरं हृदये अनुभूयमानानि इत्यर्थः अपि दुःखानि प्रेयसि प्रियतरे प्रेमास्पदे इत्यर्थः जने दृष्टे सति दुःसहानि अविषह्यानि अरुन्तुदानि सन्ति स्रोतसां प्रवाहाणां धाराणामित्यर्थः सहस्रैः इव संप्लवन्ते उच्छलन्ति । स्वजनस्य पुरतः प्रवृद्धवेगो दुःखप्रवाहो नितरां स्फीतः सहस्रधारं प्रोच्छलति । तथाच कुमारे, स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ इन्द्रवज्रा वृत्तम् । उत्प्रेक्षालङ्कारः । उपमाच व्यज्यते ॥ सम् + तन् + घञ् = सन्तान । सन्तान + वह् + णिनि = सन्तानवाहिन् । मनोरपत्यानि ( जातिः ) इति मानुषाः पक्षे मनुष्याः मनोर्जातावञ् यतौ षुकच् । [समुदायार्थो जातिः] । सन्तः बन्धवः इति सद्बन्धवः सन्महत् परमोत्कृष्टाः इति समासः तैः वियोगः इति सद्बन्धुवियोगः । तस्मात् जायन्ते इति सद्बन्धुवियोगजानि । उपपदसमासः । सद्बन्धुवियोग + जन् + ड । प्रिय + ईयसुन् = प्रेयस् । प्रियस्थिरेत्यादिना प्रियस्य प्रादेशः । दुर् + सह् + खल् ( कर्मणि ) = दुःसह । स्रोतसां सहस्राणि इति स्रोतःसहस्राणि तैः । करणे तृतीया । सम् + प्लु + लट् अन्ते = संप्लवन्ते ।

कौशल्या । एवं गते ईदृशे दशान्तरे वृत्ते । राजर्षेः इति सम्बन्धविवक्षया षष्ठी ।

अरुन्धती । एष इति । जनकानां कुलोद्वहः एषः वः श्लाघ्यसम्बन्धी । याज्ञवल्क्यः मुनिः यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

जनकानां विदेहानां कुलोद्वहः कुलधुरन्धरः वंशावतंसः इत्यर्थः एषः राजर्षिः जनकः वो युष्माकं श्लाघ्यः श्लाघार्हः गौरवभाजनम् स्पृहणीय इत्यर्थः सम्बन्धी वैवाहिकः । याज्ञवल्क्यः संहिताकारः मुनिः यस्मै राजर्षये जनकाय यमभिप्रेत्य इत्यर्थः यस्य शिक्षार्थमितिभावः पारस्य अन्तस्य अयनं इति पारायणम्, पूर्व्वपदात् संज्ञायामग इति णत्वम्, अन्तगमनम् साकल्येन अध्ययनं अध्यापनं वा ब्रह्मणः वेदस्य पारायणम् इति ब्रह्मपारायणम् जगौ गीतवान् । याज्ञवल्क्यः समग्रं वेदं यस्मै उपदिदेश इत्यर्थः । उद्वहति इति उद्वहः कुलस्य उद्वहः इति कुलोद्वहः । उद् + वह + अच् । श्लाघा + अर्हार्थे य प्रत्यय = श्लाघ्य । Or श्लाघ + ण्यत ( कर्मणि ) = श्लाघ्य । श्लाघ्—श्लाघते ; शश्लाघे ; अश्लाघिष्ट । सम्बन्धः विद्यते अस्य इति सम्बन्धी । सम् + बन्ध् + घञ् = सम्बन्ध । सम्बन्ध + इनि = सम्बन्धिन् । यस्मै इति सम्प्रदानसंज्ञायां चतुर्थी । क्रियया यमभिप्रैतिसोऽपि सम्प्रदानमिति चतुर्थी ।

कौशल्या । हृदयस्य आनन्दः इति हृदयानन्दः । हृदयस्य आनन्दहेतुरित्यर्थः । न उपस्थितः महोत्सवः आनन्दातिशयः यस्मिन् सः अनुपस्थितमहोत्सवः तस्मिन् दिने राजर्षेरागमनेन सम्भाविता सम्मानिता अस्मि । अहो भाग्यं यद् राजर्षिः जनकः सम्मानः, किन्तु तदागमनजन्यः महोत्सवः क्वगतः । हा दैव महाराजो नास्ति, कः पुनः प्रियसुहृदागमनं सम्भावयिष्यति महोत्सवेन ।

[ তাহার পর জনকের প্রবেশ ]

জনক। আমার কন্যার ভাগ্যে যে অনর্থপাত ঘটিয়াছিল, হৃদয়নির্ভেদকারী, অতি-কঠোর, ব্যথাজনক সেই প্রবল দুর্দ্দৈবহেতু সমুৎপন্ন, অবিচ্ছিন্ন প্রবাহ, দুর্দ্দম শোকাবেগ করপত্রের ন্যায় আমার মর্ম্মপ্রদেশ ছিন্ন করিতেছে, এবং দীর্ঘ কালাত্যয়েও নূতনের ন্যায অনুভূত হইয়া উপরত হইতেছে না ॥ ৩ ॥

অহো কষ্ট, বার্দ্ধক্য, দুরতিক্রম দুঃখ,ও পরাক সান্তপন প্রভৃতি কৃচ্ছ্র সাধ্য তপোনুষ্ঠান বশতঃ শরীরের রস ও ত্বঙ্‌মেদোমজ্জা প্রভৃতি ধাতু শুষ্ক ও ক্ষীণ হওয়াতে এই দগ্ধ দেহ সর্ব্ববিষয়ে অনুপযুক্ত ও বৃথা হইয়াছে, তথাপি এখনও ইহার পতন হইতেছে না। ঋষিগণ বলেন যে যাহারা আত্মঘাতী হয় তাহাদিগকে সূর্য্যাংশুসম্পর্কবিরহিত, গাঢ়ান্ধকারাচ্ছন্ন লোকে বাস করিতে হয়। যদিও অনেক সংবৎসর অতিক্রান্ত হইয়াছে তথাপি প্রতিক্ষণ ভাবনাহেতু সুস্পষ্টভাবে অনুভূয়মান আমার এই দারুণ দুঃখবেগ নূতনের ন্যায় রহিয়াছে, এবং উপশমিত হইতেছে না। হা মাতঃ দেবযজন-সম্ভবে সীতে, তোমার সেই লোকোত্তর সৌন্দর্য্য মণ্ডিত বপুর্নির্ম্মাণের এমনই পরিণাম হইয়াছে যে লজ্জায় আমি স্বচ্ছন্দে ক্রন্দন করিতেও পারি না।

হা হা বৎসে তুমি যখন অতি শিশু ছিলে তখন তোমার যে মুখকমলে কএকটি কুন্দকোরক সদৃশ দন্তাগ্র শোভা পাইত, যাহাতে হাস্য ও রোদন অনিয়তভাবে বর্ত্তমান থাকিত, এবং যাহার অস্পষ্ট উচ্চারিত অসংলগ্ন বচন সুধাসদৃশ মধুর বোধ হইত, সেই মুখকমল আমার স্মৃতিপথে উদিত হইতেছে ॥ ৪ ॥

ভগবতি বসুন্ধরে, তুমি সত্যই অতি কঠিন। বহ্নি, মুনিগণ, বশিষ্ঠপত্নী দেবী অরুন্ধতী, দেবী ভাগীরথী, রঘুর কুলগুরু সাক্ষাৎ দেব দিনকর, ও তুমি যাহার মাহাত্ম্য অবগত আছ ; বাগ্‌দেবী বিদ্যাকে যেরূপ উৎপন্ন করিয়াছেন সেইরূপ তুমি যাহাকে প্রসব করিয়াছ, এবং বাগ্‌দেবীর ন্যায় যে দেবত্বগৌরবে মণ্ডিত সেই দুহিতার তাদৃশ নিধন, অয়ি দারুণে, তুমি কেন সহ্য করিলে ? ॥ ৫ ॥

[ নেপথ্যে ] ভগবতি, মহাদেবি, আপনারা এই দিকে আসুন, এই দিকে আসুন।

জনক। [ অবলোকন করিয়া ] এই যে ভগবতী অরুন্ধতী, গৃষ্টি ইঁহাকে পথ দেখাইয়া লইয়া আসিতেছে। [ উত্থান করিয়া ] কিন্তু কাহাকে মহাদেবী বলিয়া আহ্বান করিতেছে। [ নিপুণভাবে অবলোকন করিয়া ] হায়, ইনি কি মহারাজ দশরথের ধর্ম্মপত্নী আমার প্রিয়সখী কৌশল্যা ? কে বিশ্বাস করিবে যে ইনিই সেই ব্যক্তি ?

ইনি দশরথের গৃহে লক্ষ্মীর ন্যায় ছিলেন, অথবা উপমাবাচক পদের প্রয়োজন কি? ইনিই লক্ষ্মী ছিলেন। হা কষ্ট সেই ইনি দুর্ভাগ্যবশতঃ কেমন এক দুঃখময় অন্যবিধ জীবরূপে পরিণত হইয়াছেন। অহো দৈবদুর্ব্বিপাক! ॥ ৬ ॥

ভাগ্যের এই এক ক্লেশকর অপূর্ব্ব বিবর্ত্তন! যে ব্যক্তি পূর্ব্বে আমার পক্ষে মূর্ত্তিমান্ মহোৎসবের ন্যায় ছিলেন, এক্ষণে তাঁহারই সাক্ষাৎকার আমার পক্ষে ক্ষতপ্রদেশে লবণের ন্যায় অসহ্য হইয়াছে ॥ ৭ ॥

[ তাহার পর অরুন্ধতী, কৌশল্যা ও কঞ্চুকীর প্রবেশ ]

অরুন্ধতী। "তুমি স্বয়ং গিয়া বিদেহাধিপতির সহিত সাক্ষাৎ করিবে" ইহাই তোমাদিগের কুলগুরুর আদেশ, ইহাই তোমাকে বলিতেছি; এই জন্য আমাকে পাঠাইয়া দিয়াছেন। তবে কেন পদে পদে এইরূপ মহান্ নিরুৎসাহ দেখাইতেছ?

কঞ্চুকী। দেবি, আমি নিবেদন করি যে আপনি ধৈর্য্য ধারণ করুন এবং ভগবান্ বশিষ্ঠের আদেশ পালন করুন।

কৌশল্যা। এমন সময়ে মিথিলাধিপতির সহিত সাক্ষাৎ করিতে হইবে, এই নিমিত্ত আমার হৃদয়ে সকল দুঃখই যুগপৎ উদিত হইতেছে। আমার হৃদয়ের মূলবন্ধন যেন বিপর্য্যস্ত ও উচ্ছিন্ন প্রায় হইতেছে, আমি হৃদয়কে সমাশ্বস্ত করিতে পারিতেছি না।

অরুন্ধতী। এ বিষয়ে সন্দেহ কি? মানুষদিগের সদ্বন্ধুর বিয়োগনিমিত্ত শোকরাশি অবিচ্ছিন্ন ধারায় প্রবাহিত হইলেও প্রিয়জনের সাক্ষাৎকার ঘটিলে অবিষহ্য বেগে উচ্ছলিত হইয়া প্রধাবিত হয় ॥ ৮ ॥

কৌশল্যা। বৎসা বধূর এইরূপ ভাগ্যবিপর্য্যয়ের পর রাজর্ষির নিকট কিরূপে মুখ দেখাইব?

অরুন্ধতী। জনকবংশের কুলধুরন্ধর ইনি তোমাদিগের শ্লাঘার্হ কুটুম্ব। ঋষি যাজ্ঞবল্ক্য ইঁহাকে সমগ্র বেদে উপদেশ দান করিয়াছিলেন ॥ ৯ ॥

কৌশল্যা। মহারাজের হৃদয়ানন্দবর্দ্ধন, বৎসা বধূর পিতা ইনিই সেই রাজর্ষি। হায়, হায় অতি দুঃখের দিনেই ইঁহার আগমনে সম্মানিত হইলাম। হা অদৃষ্ট, পূর্ব্বের সে সব কিছুই নাই।

[ *Then enter Janaka.* ]

*Janaka.*—The intense grief flowing in a continuous stream, given rise to by that heart-rending, painful,bitter and dire calamity which befell my daughter, is, as if fresh even after the lapse of a long time, cutting my vitals like a saw and does not cease. (3).

Oh! What a sad lot! This accursed body of mine with its vital humours sapped by old age, unmitigable grief, and more so by penances such as *Paraka* (fasting for twelve days), *Santapana* (fasting for two days) &c., has become completely useless

and does not even now crumble into pieces. The sages say that regions devoid of the sun and enveloped in blinding gloom are allotted to those who commit suicide. The violence of my terrible grief, though many years have passed away, is vividly perceived on account of my brooding over it, every moment, and does not cease as if ever new. O mother, Sita, sprung from the sacrificial ground ; to such a lot has the excellent creation of yourself been reduced that through shame I cannot even weep for you freely.

Alas ! Alas ! my daughter,—

I remember the lotus-like face of you, while yet a child, with the tips of a few tender, budding teeth shining in it, with cries and smiles appearing in quick transition, and with its faltering, incoherent and charming lispings. (4).

Holy Earth ! Surely you are very hard-hearted. Why did you, O cruel one, tolerate the slaughter in that manner of that daughter of yours whose greatness and purity were known to you, to the Firegod, to the sages, to the wife of Vasistha, to the Sacred Ganga, and nay even to the Solar deity, the progenitor of the race of Raghu, whom you brought forth as the goddess of speech did learning, and who is as divine as these are ? (5).

[ *Behind the scenes.* ] This way, this way, your holiness and the great queen.

*Janaka* :—[ *Beholding.* ] Oh ! Here comes the holy Arundhati, being shown the way by Gristi. [ *Rising up.* ] But whom does he call the great queen ? [ *Marking carefully.* ] Alas ! How ! she is the spouse of the Emperor Dasaratha, my dear friend Kausalya ! Who can believe that it is she ?

She was like the goddess of fortune in the house of Dasaratha ; or rather she herself was the goddess of fortune. Why use the word (or the sign) of comparison ? But alas ! Oh woe ! she has become reduced, through ill luck, to an altogether different being of the very nature of grief. Oh ! What a transition ! (6)

Here is another accursed change in the condition of things. The sight of the self-same person, who was formerly to me

joy incarnate, has now become as unbearable as salt to a sore or wound. (7).

[ *Then enter Arundhati, Kausalya and the Chamberlain.* ]

*Arundhati* :—I say that the command of your family preceptor is that you should yourself go and see the king of Videha. And for that very reason I have been sent. Why then is this great hesitation at every step ?

*Chamberlain* :—O Queen, I request that you will be pleased to pacify yourself and to carry out the command of the holy Vasistha.

*Kausalya*:—All my griefs make their appearance simultaneously, since I shall have to meet the king of Mithila at such a time. I cannot compose my heart the very foundation of which has got its ties unloosened and broken.

*Arundhati*.—What doubt can there be about this ? The griefs of men due to the death of or separation from dear kinsmen and friends, though ceaselessly flowing, become unendurable at the sight of a beloved person and run wildly in thousand streams, as it were. (8).

*Kausalya*:—How shall I show my face to the royal sage after what has befallen of our dear daughter-in-law ?

*Arundhati*.—Here is your esteemed relation, the chief of the race of Janakas ; to whom did the sage Yajnavalkya sing the whole of the Vedas. (9).

*Kausalya* :—He is the same royal sage, the very delight of the heart of the great king (Dasaratha), and the father of our dear daughter-in-law,

Alas ! Alas ! I have been honoured at a time when all joy has (departed and) made no appearance. Oh ! Fate ! All those things of former days are no more !

जनक: । सीरध्वज: लाङ्गलध्वज: । सीर: ध्वज: चिह्नं यस्य स सीरध्वज: । सीरोऽर्कहलयो: पुंसि इति मेदिनी ।

यदीति । पूर्व्वेषाम् अपि गुरूणां गुरुजन: ते पति: पवित्रस्य महस: निधि: अपि

यया ( त्वया ) पूतम्मन्य: खलु ; जगद्वन्द्यां देवीम् उषसम् इव त्रिलोकीमङ्गल्यां भगवतीं तां ( त्वाम् ) अवनितललोलेन शिरसा वन्दे ॥ १० ॥

पूर्व्वेषां प्राचीनानाम् आद्यानाम् इत्यर्थ: गुरूणां श्रेष्ठानां सप्तर्षीणामित्यर्थ: अपि गुरुतम: अर्हत्तम: ते तव पति: स्वामी वशिष्ठ: पवित्रस्य विशुद्धस्य लोकपावनस्य महस: तेजस: तप:सिद्धेरित्यर्थ: निधिराधार: अपि यया त्वया यस्या: ते सङ्गादित्यर्थ: पूतम्मन्य: आत्मानं पूतं मन्यते। आत्ममाने खश्चेति खश्। अरुर्द्विषदजन्तस्येति मुम्। सप्तर्षीणां श्रेष्ठस्य लोकपावनस्यापि वशिष्ठस्य पवित्रत्वं यस्यास्ते पावित्र्यात् क्रीयते इत्यर्थ: ; तथोक्ताम् अतिपवित्राम् देवीम् उषसम् इव उष:कालाभिमानिनीं देवतामिव जगत: वन्द्याम् अर्चनीयाम्, त्रिलोक्या: त्रिभुवनस्य मङ्गल्याम् हितसाधनतत्परां इदं विशेषणद्वयम् उषसि अपि प्रयोज्यम्। भगवतीं त्वामितिशेष: अवने: भूमे: तले लोलेन चञ्चलेन भूतलस्पर्शिना इत्यर्थ: शिरसा मूर्द्ध्ना वन्दे अभिवादये प्रणमामि इत्यर्थ:। उपमालङ्कार:। शिखरिणी वृत्तम्। निधीयते अस्मिन् इति निधि: आधार: इत्यर्थ:। नि + धा + कि ( अधिकरणे ) यया इति करणे तृतीया। महपूजायामिति धातो: असुस् महम् महस्तूत्सवतेजसो रित्यमर:। त्रयाणां लोकानां समाहार: इति त्रिलोकी। समाहार: द्विगु:। द्विगो: इति अदन्तात् द्विगो: स्त्रियां ङीप। मङ्गले साधु: इति मङ्गल्या। मङ्गल + यत्। त्रिलोक्या: मङ्गलं इति त्रिलोकीमङ्गलम् तत्र साधुरिति त्रिलोकीमङ्गल्या। यद्वा त्रिलोक्या मङ्गल्या मङ्गलविधायिनी इत्यर्थ:। इति त्रिलोकीमङ्गल्या। श्रि + असुन् = शिरस्। श्रयते: स्वाङ्गे शिर: किच्च। उषस्-शब्द: स्त्रीलिङ्ग: तत्कालाभिमानिदेवतावचन:। कालवचनस्तु उष:शब्द: क्लीब-लिङ्ग:। उषा: प्रातरधिष्ठात्री देवता इति दीक्षित:। प्रतिपदापद्विपत्-संपच्छरत् संसत्परिषदुष: संवित्क्षुत्पुन्मुत्समिध:।

अरुन्धती। परम् उत्कृष्टं ज्योति: ब्रह्माख्यं ज्योति: ते तव प्रकाशताम् आविर्भवतु। ब्रह्मज्योति:साक्षात्कारं लभस्व त्वम्। य एष रज:पारे व्यवस्थितो देव: सविता उदयभाक् दीप्यते यस्य भासा सर्व्वमिदं विभाति, स त्वां पुनातु पवित्री-करोतु। अंहस: त्रायताम् इत्यर्थ:॥ रजस: पर: इति विग्रहे राजदन्तादित्वात् परशब्दस्य पूर्व्वनिपात:। सुट् च निपात्यते। पू + लोट् तु = पुनातु। आशिषि लोट्।

*N. B.* This sentence is written in imitation of the Vedic style. Arundhati is a holy personage; and her hallowed character impressed the imagination of the writer with a sense of Vedic sanctity; hence an attempt has been made to express her speech in a Vedic style.

जनकः। प्रजाः पालयति, (न तु भार्यां पालयति इति हृदयम्) इति प्रजापालः। कर्मण्यण् इति पालयतेः अण्। तस्य माता तस्याः प्रजापालमातुः।

कञ्चुकी। निर्नास्ति अवशेषः यस्मिन् कर्मणि तद् यथा तथा निरवशेषम् समग्रं निरतिशयमित्यर्थः अतिनिष्ठुरम् अतिकठोरं च यथा तथा वयम् उपालब्धाः निर्भर्त्सिताः। मुखं चन्द्र इव इति मुखचन्द्रः। रामभद्रस्य मुखचन्द्रः इति रामभद्रमुखचन्द्रः। तस्य दर्शनम्। इति रामभद्रमुखचन्द्रदर्शनम्। चिरं दीर्घकालं व्याप्य परित्यक्तं परिहृतं रामभद्रमुखचन्द्रदर्शनम यया सा ताम्। चिरपरित्यक्तरामभद्रमुखचन्द्रदर्शनाम्। सीतापरित्यागजन्येन शोकेन कौशल्या प्रियपुत्रस्य रामस्यापि मुखचन्द्रं नालोकयति। तामेतां एभिरक्षरैः तिरस्कर्त्तुं मनःखेदमापादयितुञ्च नार्हसि त्वम्। दुःखं जातमस्याः इति दुःखिता। तारकादित्वादितच् दुःखं करोति इति दुःखयति। तत् करोति तदाचष्टे इति णिच्। ततः तुमुन् दुःखयितुम। दुःखितां कर्त्तुमित्यर्थः। अर्हार्थे उपपदे तुमुन्। दैवेन पूर्व्वमनुष्ठितेन फलोन्मुखेन कर्म्मणा दुर्दैवः नियोगः नियोजनम् प्रेरणमित्यर्थः। समन्तात् सर्व्वत्र इत्यर्थः प्रवृत्ता प्रचरिता बीभत्सा जुगुप्सिता किंवदन्ती जनवादः कौलीनं इति यावत् येभ्यः येषां मुखेभ्यः इत्यर्थः ते प्रवृत्तबीभत्सकिंवदन्तीकाः। नद्युतश्चेति कः। पौराः पुरवासिनः जानपदाश्च इति पौरजानपदाः। जनपदेभ्यः आगताः इति जानपदाः। ततः आगत इत्यण्। अग्निना परिशुद्धिः देव्याः सीतायाः विशोधनम्। यद्वा अग्नौ परिशुद्धिः इति अग्निपरिशुद्धिः ताम्। हुताशने विशुद्धिं अल्पकाः क्षुद्रचित्ताः न प्रतियन्ति न श्रद्दधते। तत्र अलौकिके परमाद्भुते कर्म्मणि न विश्वस्ताः श्रद्धावन्तो वा भवन्ति इतिहेतोः राज्ञा रामेण सीतायाः परिवर्ज्जनरूपमतिघोरं कर्म्म आचरितम्।

जनकः। आः इति क्रोधे अव्ययम्। अस्माकं प्रसूत्याः दुहितुः परिशोधने विशुद्धिसम्पादने कोयमग्निर्नाम। का नाम शक्तिरनलस्य मद्दुहितुरयोनिजायाः पवित्रीकरणे। नामेति क्रोधे। यद्वा कुत्सने। ह्रीयते खलु सीतायाः अनलः इति वक्ष्ये कुत्साद्योतनाय नामशब्दः उपात्तः। एवम् अग्नौ सीतायाः विशुद्धिरिति वदति यः तेन एवंवादिना जनेन स्रष्टिना इत्यर्थः सीतां विवासितवता, रामेण परिभूताः तिरस्कृताः वयं पुनरपि परिभूयामहे अवमन्यामहे।

अस्मत्प्रसूतिपरिशोधने इति विषयाधिकरणे सप्तमी। परि + शुध् ( णिच ) + ल्युट् = परिशोधन। परि + भू + लट् महे ( कर्म्मणि वाच्ये ) = परिभूयामहे।

अरुन्धती। वत्सां सीतां प्रति अग्निरिति अक्षराणि वर्णानि परिलघूनि स्वल्पानि अल्पमात्राणि वा सीतया सह अग्नेः रौपम्ये विधीयमाने सीता एव विशिष्यते पवित्रताधर्म्मेण, अग्निस्तु ह्रीयते इत्यर्थः। सीता इति नामैव पर्य्याप्तम्। सीताया

सावित्रीत्कर्षः एतावान् खलु ; एतावद्धि तस्याः पावित्र्यम् जगति प्रथितं यत् तस्याः नामोच्चारणेनैव लोकातिगा पवित्रता श्रोतॄणां हृदयादर्शे प्रतिबिम्बिता भवति। न खलु तत्प्रतिपत्तये अस्मादिभिः प्रयोजनमस्तीत्यर्थः।

शिशुरिति। त्वमिति ; अध्याहर्त्तव्यम् शिशुः वा मम शिष्यावा यदसि तत् तथा तिष्ठतु। विशुद्धेः उत्कर्षः तु तवेति शेषः त्वयि मम भक्तिं द्रढयति। शिशुत्वं स्त्रैणं वा भवतु, ननु जगतां वन्द्या असि। गुणिषु गुणाः पूजास्थानं लिङ्गं न वयश्च न॥ ११॥

हे वत्से त्वम् शिशुः बाला अल्पवयाः अप्रबुद्धमना: असि मम शिष्या उपदेष्टव्या अन्तेवासिनी वा भवसि इति यत् तत् हीनवयस्त्वम् शिष्यात्वम् वा तथा तिष्ठतु, आस्तां तावत् तत्। विशुद्धेः पवित्रतायाः उत्कर्षः अतिरेकस्तु त्वयि विषये मम भक्तिम् अनुरागं पूज्यत्वबुद्धिम् इत्यर्थः द्रढयति ; दृढां करोति वर्द्धयति इत्यर्थः। तव शुद्ध्युत्कर्षं भावयन्त्या मे चेत स्त्वयि भक्तिप्रवणं भवति इत्यर्थः। शिशुत्वं शैशवं स्त्रैणं स्त्रीत्वम् वा तव भवतु, शिशुरपि नारी अपि त्वं जगतां भुवनानां वन्द्या अर्चनीया असि। गुणिषु गुणवत्सु विषये गुणाः एव पूजायाः अर्चायाः स्थानं आस्पदम् प्रयोजकोहेतुरित्यर्थः। लिङ्गं स्त्री पुमानिति ज्ञानमित्यर्थः न पूजास्थानं नच वयः नापि अल्पवयस्त्वं प्रवयस्त्वम् वा गौरवाधाने हेतुरित्यर्थः। तथाचोक्तम् स्त्रीपुमानित्यमास्थैषा वृत्तंहि महितं सतामिति। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः सच परिसंख्यया सङ्कीर्य्यते। शिखरिणी वृत्तम्।

शास् + क्यप् = शिष्य। स्त्रियां टाप = शिष्या। उत् + कृष + घञ् = उत्कर्ष। भज् + क्तिन् = भक्ति। पूज्येषु अनुरागी भक्तिः। दृढ + णिच् + लट् ति = द्रढयति। र ऋतो हलादेर्लघोरिति ऋकारस्य रादेशः। पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम्।

स्त्रिया भावः इति स्त्रैणम्। स्त्रीत्वम् इत्यर्थः। स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् इति स्त्रीशब्दात् नञ् प्रत्ययः अत्र भावार्थप्रत्ययः।

कौशल्या। उन्मीलन्ति—प्रादुर्भवन्ति नवीभवन्ति इति भावः।

अरुन्धती। स इति। सुहृदि त्वयि दृष्टे स राजा, तत् सौख्यं, सच शिशुजनः ते च दिवसाः तदखिलं स्मृतौ आविर्भूतम् अथ अस्मिन् घोरे विपाके तव सखी विमूढा खलु। पुरन्ध्रीणां चित्तं कुसुमसुकुमारं भवति हि॥ १२॥

सुहृदि प्रियबन्धौ त्वयि दृष्टे प्रत्यक्षीकृते सति, प्रकृतात् स राजा दशरथः तत् पूर्व्वमनुभूतम् सौख्यं सुखसन्तानः स च शिशुजनः रामचन्द्रादिः ते च अनुभूतपूर्व्वाः सुखमयाः दिवसाः इत्येतत् अखिलं सर्व्वं स्मृतौ आविर्भूतम् आरण्यपदवीमवतीर्णम्। अथ आरणात् अनन्तरम् अस्मिन् घोरे भीषणे विपाके दशाविपर्य्यासे पूर्व्वावस्थायाः

वर्त्तमानायाश्च युगपत् श्रुतिविषयत्वात् दुःसहशोकोन्मथितचित्ता तव प्रियसखी इयं कौशल्या विमूढा मोहं गता। यस्मात् पुरन्ध्रीणां चित्तं मनः कुसुममिव सुकुमारं कोमलं भवति। नारीणां चेतो दुःसहशोकशल्याघातासहिष्णु इति भावः। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः अलङ्कारः। शिखरिणीवृत्तम्।

सुखमेव इति सौख्यम्। सुख + ष्यञ् (स्वार्थे) = सौख्य। तदिति नपुंसकैक-शेषः। नपुंसकमनपुंसकेनैकवच्चास्यतरस्यामिति एकवचनम्। श्रुतौ इति विषयाधि-करणे सप्तमी। घुर + अच् = घोर। घरति। वि + पच् + घञ् = विपाक। पच् लुङ् अपाक्षीत्। वि + मुह + क्त (कर्त्तरि) = विमूढ। स्त्रियां टाप् विमूढा। मुह्यति, मुमोह, अमुहत्।

पुरं धारयति इति पुरन्ध्री। पुर शब्द पूर्व्वात् धारयते खच् स्त्रियां ङीप् पृषोदरादित्वात् साधु पचे ह्रस्व।

जनकः। नृशंसः निष्ठुरः। नॄन् शंसति हिनस्ति इति नृशंसः हिंसं सस्नेहं प्रीतिपूर्वं यथा तथा न पश्यामि विलोकयामि। दारयन्ति विच्छेदं भ्रातृभिः सह जनयन्ति इति दाराः पत्नी। पुंलिङ्गोऽयं बहुवचनान्तः। भार्य्या जाया च पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी इत्यमरः।

स इति। स श्लाघ्यः सम्बन्धी, असौ प्रियसुहृत्, तत् हृदयम्, स च साक्षादपि आनन्दः, निखिलं जीवितफलं शरीरं जीवः वा अतो वा यदधिकं तदासीत्। प्रियतमः श्रीमान् महाराजः दशरथः मम किमिव नासीत्॥ १६॥

स दशरथः मम श्लाघ्यः स्पृहणीयः सम्बन्धी वैवाहिकः आसीत्; असौ राजा दशरथः मम प्रियः परमप्रेमास्पदं सुहृत् सखा आसीत्। तत् हृदयम्; दशरथः मम द्वितीयं हृदयमिवाभवत्। तदिति विधेयप्राधान्यात् नपुंसकम्। स दशरथः साक्षात् शरीरी आनन्दः परमानन्दरूपः अभूत्, निखिलं समग्रं जीवितस्य प्राणानां प्राणधारणस्येति भावः फलं भोगापवर्गादिरूपमासीत्। किञ्च स एव मे शरीरं देहः जीवः प्राणाः, अतः आभ्यां शरीरजीवनाभ्यां यदधिकं गरीयः तदपि आसीत्। प्रियतमः सुहृत्तमः श्रीमान् राजश्रीसम्पन्नः महाराजः दशरथः मम किमिव नासीत्, अपितु सर्व्वमेवासीत्। दशरथमयं मे जीवितमभूदित्यर्थः। रूपकालङ्कारः। शिखरिणीवृत्तम्।

यद्विति। अस्याः पत्युः वा रहसि यत् परमं दूषितम् अभूत्, तदर्थमिति अध्याहार्य्यम् अहं दम्पत्योः पृथक् उपालम्भविषयः अभूवम्। तदनु प्रसादे कोपे वा विधिः मदधीनः अभूत्। तत् स्मृत्वा वा अद्य तत् हृदयम् अवसन्नं दहति॥१४॥

अस्याः कौशल्यायाः पत्युः स्वामिनः दशरथस्य वा रहसि गुप्ते रतौ वा रहस्ये

रतिगुह्ये इति मेदिनी यत् परमं भृशं दूषितं दूषणम् प्रणयस्खलितमित्यर्थः अभूत् तदर्थं मदहं दम्पत्योः जायापत्योः उभयोरेव पृथक् स्वतन्त्रं यथा स्यात् तथा उपालम्भस्य तिरस्कारस्य विषयः पात्रम् अभवम्। दशरथस्य दूषणमुद्घोष्य कौशल्या मामेव निरभत्र्सयत्; दशरथोऽपि मदन्तिकमुपेत्य इयं ते सम्बन्धिनी (वैवाहिकी) मयि इत्थमाचारितवती इति कौशल्याया दोषमुद्घाट्य मामेव निपुणमगर्हत। तदनु तदनन्तरत् प्रसादे दम्पत्योरन्योन्यचित्तनैर्मल्यसम्पादने, क्रोधहेतुककालुष्यापसारणे इत्यर्थः कोपे वा प्रणयाभिमानसमुत्थाणे इत्यर्थः विधिः विधानं व्यवस्था इत्यर्थः मदधीनः मदायत्तः अभूत्। दम्पती अन्योन्यं प्रति कोपयितुं प्रसादयितुं वा अहमेव प्रभुरासम्। तत्र विषये ममैव प्रभुत्वमव्याहतमासीत्। अथवा तत्पूर्व्वं अनुभूत सुखादिकं स्मृत्वा अलम्। पूर्व्ववृत्तान्तस्मरणेन किमपि फलं नास्ति। अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा इति अलं योगात् क्त्वाच् प्रत्ययः। यत् पूर्व्ववृत्तान्तस्मरणम् हृदयं चित्तम् अवस्कन्द्य अभिभूय दहति सन्तापयति मथ्नाति इत्यर्थः। पूर्व्वेषां वृत्तान्तानाम् अनुध्यानेन हृदयं केवलं निर्मथितं भवति अन्यत् किमपि फलं नास्ति इति तात्पर्य्यम्। शिखरिणीवृत्तम्।

दुष् (णिच्)+क्त (भावे) = दूषित। जाया च पतिश्च इति जायापती जायाया दम्भावो जम्भावो वा निपात्यते। उप+आङ्+लभ्+घञ् = उपालम्भ। अनु इति कर्म्मप्रवचनीययोगात् तदित्यत्र द्वितीया। मयि अधि इति सप्तमीसमासे अध्युत्तरपदादिति खप्रत्ययः। अधिशब्दस्य शौण्डादिगणे अन्तर्भावात्, सप्तमी शौण्डादिभिरिति समासः। अव+स्कन्द्+ल्यप् = अवस्कन्द्य। स्कन्दति, चस्कन्द, अस्कान्त्सीत्, अस्कदत। स्कन्नः।

अरुन्धती। अतिचिरं दीर्घकालं निरुद्धैः निवारितगतिभिः निश्वासैः मुख-नासिकासञ्चारिमारुतैः हेतुभिः निष्ठुरं निश्चलम् अस्याः हृदयम्। निश्वासोपरोधात् अस्याः हृदयं निस्पन्दमास्ते।

कमण्डलुः तापसानां उदकपात्रं तस्य उदकं तत्स्थितं जलमित्यर्थः तेन कौशल्यायाः मूर्च्छापनोदनाय सिच्यति। कमण्डलुः करकेस्यात् न स्त्री ना प्लक्षपादपे इति मेदिनी।

कञ्चुकी। विधिः सुखप्रदः सुहृत् इव प्रथमम् एकरसाम् अनुकूलतां प्रकटय्य पुनः अहो अकाण्डविवर्त्तनदारुणः मनोरुजं विशिनष्टि॥ १५॥

विधिः दैवं सुखं प्रददाति इति सुखप्रदः प्रेदाज्ञः इति ददातेः कः सुखसम्पादनपरः सुहृत् मित्रम् इव प्रथमं पूर्व्वम् एकः अविमिश्रः दुःखादिभिरनिर्भिन्नः इत्यर्थः रसः सुखास्वादो यत्र सा एकरसा ताम् सान्द्रसुखसन्तानानिर्भराम् अनुकूलतामानुकूल्यं

प्रियकारितामित्यर्थः प्रकटय्य आविष्कृत्य प्रदर्श्य इत्यर्थः पुनरन्तो बत अकाण्डे अनवसरे अयोग्ये समये विवर्त्तनेन परिवर्त्तनेन आनुकूल्यभङ्गेन इत्यर्थः प्रतीपाचरणेन इति फलितार्थः दारुणः नृशंसः इति अकाण्डविवर्त्तनदारुणः मनसः रुजम् पीडां खेदमिति यावत् विश्लिनष्टि विश्लेषेण वर्द्धयति। निरन्तरसुखानुभवात् परमिदानीं प्रतिकूलभाग्यवशादुत्तरोत्तरक्लेशपरम्परामिव सहे इत्यर्थः। आद्ये अर्द्धे उपमालङ्कारः। द्रुतविलम्बितं वृत्तम्। द्रुतविलम्बितमाह नभौ भरौ।

कूलमनुगतः इति अनुकूलः प्रादिसमासः। अनुकूलस्य भावः इति अनुकूलता। वि + वृत् + ल्युट् = विवर्त्तन। रुज् + क्विप् (भावे) = रुज्। रुक्, रुग्, रुजौ, रुजः। रुजति ; रुरोज ; अरौक्षीत्। रुग्नः। प्रपूर्व्वात् काटयतेः ल्यप् णेरयादेशः। वि + श्लिष् + लट्ति = विश्लिनष्टि, शिश्लेष, अश्लिक्षत्। श्लिष्टः। काण्डोऽस्त्री-दण्डबाणार्व्व वर्गावसर वारिषु इत्यमरः।

कौशल्या। विवाहस्य परिणयस्य लक्ष्मीः शोभा इति विवाहलक्ष्मीः तस्याः परिग्रहः स्वीकारः आदानमित्यर्थः स एव एकं मुख्यं मण्डनम् अलङ्करणं यस्य तत् विवाहलक्ष्मीपरिग्रहैकमण्डनम्। प्रस्फुरता विलसता शुभ्रेन उज्ज्वलेन विहसितेन हासेन मुग्धं मनोहरं मुखपुण्डरीकम् आननशतपत्रम् अहं स्मरामि।

चन्द्रस्य चन्द्रिका ज्योत्स्ना इति चन्द्रचन्द्रिका आस्फुरन्ती प्रकाशमाना या चन्द्र-चन्द्रिका सा इव सुन्दराणि इति आस्फुरच्चन्द्रचन्द्रिकासुन्दराणि, उपमानानि सामान्य-वचनैरिति समासः। चन्द्रिका इत्यनेनैव अभिप्रेतार्थलाभे पुनश्चन्द्रग्रहणम् विस्पष्टार्थम्। उतसङ्गं क्रोडम् उद्‌द्योतय उपवेशनेन उद्‌भासय। रघोः कुले ये महत्तराः श्रेष्ठा मान्याः इत्यर्थः पूर्व्वपुरुषाः तेषामिव वधूः। अभिन्नहृदयस्य जनकस्य दुहिता इयं ममापि दुहिता न वधूः। जनकेन सम्बन्धः इति जनकसम्बन्धः सहसुपेति समासः। तेन हेतुना। महान्तः इति महत्तराः। महत् + तरप् = महत्तर।

জনক। [অগ্রসর হইয়া] ভগবতি, অরুন্ধতি, সীরধ্বজ বৈদেহ আপনাকে অভিবাদন করিতেছে।

পূর্ব্ববর্ত্তী গুরুদিগের মধ্যে শ্রেষ্ঠ আপনার পতি বশিষ্ঠ তপঃসম্ভূত পবিত্র প্রভাবের আধার হইয়াও যাঁহার সংসর্গে নিজকে পবিত্র মনে করেন ; উষঃকালাধিষ্ঠাত্রীদেবীর ন্যায় ত্রিভুবনের মঙ্গলসাধনরতা জগদ্‌বন্দ্যা সেই আপনাকে অবনীতলে মস্তক প্রলুণ্ঠিত করিয়া প্রণাম করিতেছি ॥ ১০ ॥

অরুন্ধতী। উৎকৃষ্ট ব্রহ্মজ্যোতিঃ আপনার অন্তঃকরণে প্রতিভাত হউক। রজঃপারে ব্যবস্থিত ঐ যে দেব গগনে অভ্যুদিত হইয়া কিরণ বিতরণ করিতেছেন উনি আপনাকে পবিত্র করুন ॥

জনক। আর্য্যগৃষ্টি, প্রজাপালকের জননীর কুশল ত ?

কঞ্চুকী। [ স্বগত ] ইনি আমাদিগকে অতিনিষ্ঠুরভাবে যৎপরোনাস্তি তিরস্কার করিলেন। [ প্রকাশ্যে ] রাজর্ষি, দেবী এই শোকেই দীর্ঘকাল ব্যাপিয়া প্রিয়পুত্র রামচন্দ্রের মুখচন্দ্রদর্শন করেন নাই, মর্ম্মস্পর্শী দুঃখে তিনি ব্যথিত, তাঁহাকে এরূপ নিষ্ঠুর বাক্যে ব্যথিত করা আপনার উচিত নহে। কি এক দুর্দ্দৈবের প্রেরণায় রামচন্দ্রেরও এরূপ প্রবৃত্তি হইয়াছিল ক্ষুদ্রচিত্ত পৌর ও জানপদগণ অগ্নিশুদ্ধিতে আস্থা স্থাপন না করিয়া সর্ব্বত্র অতি বীভৎস অপবাদ ঘোষণা করিতে লাগিল এই নিমিত্ত তিনি এই নৃশংসকার্য্যের অনুষ্ঠান করিলেন।

জনক। আঃ, অগ্নি আমার কন্যাকে বিশুদ্ধ করিবার কে? হা দুর্ভাগ্য। যে ব্যক্তি এইরূপ কথা বলিতেছে সে রামকর্ত্তৃক অবমানিত আমাদিগের পুনর্ব্বার অবমাননা করিল।

অরুন্ধতী। [ নিশ্বাসত্যাগ করিয়া ] ইহা সত্য। বৎসা সীতার তুলনায় অগ্নি অতি হীন। সীতা এই কয়টি অক্ষর ( বিশুদ্ধির প্রমাণ পক্ষে ) পর্য্যাপ্ত। হা বৎসে— তুমি বয়ঃকনিষ্ঠা অথবা আমার শিষ্যা সে বিষয়ের উল্লেখ করিবার প্রয়োজন নাই। কিন্তু তোমার চরিত্রের পবিত্রতার উৎকর্ষে তোমার প্রতি আমার ভক্তি আকৃষ্ট ও দৃঢ়ীকৃত হয়। শিশুত্ব বা নারীত্ব ( বিচার্য্য বিষয় নহে উহা ) থাক্; তুমি জগন্মণ্ডলের বন্দনীয়। গুণই গুণবান্‌দিগের গৌরবের হেতু; স্ত্রী কিংবা পুরুষ এই লিঙ্গভেদ, অথবা বয়ঃক্রম গৌরবের কারণ নহে ॥ ১১ ॥

কৌশল্যা। ওমা! বেদনা নূতন হইয়া উঠিতেছে [ মূর্চ্ছিত হইলেন ]

জনক। হায় কষ্ট, এ কি ?

অরুন্ধতী। রাজর্ষি, আর কি ?

আপনি ইহার অতি প্রিয়সুহৃদ্, আপনার দর্শনে সেই রাজা দশরথ, সেই সুখ, সেই শিশুজন, সেই সুখের দিন এই সমস্ত ইঁহার স্মৃতিপথে উদিত হইয়াছে। অনন্তর এই ঘোর বিপাকের যাতনায় আপনার প্রিয়সখী মূর্চ্ছিত হইয়াছেন। যেহেতু পুরন্ধ্রীগণের চিত্ত কুসুমের ন্যায় সুকুমার ॥ ১২ ॥

জনক। হায়, হায় আমি অত্যন্তই নিষ্ঠুর হইয়াছি; যেহেতু বহুকালের পর দৃষ্ট প্রিয়সুহৃদ্ দশরথের প্রিয়পত্নীকে প্রীতিস্নিগ্ধভাবে বিলোকন করি নাই।

দশরথ আমার শ্লাঘ্য কুটুম্ব, তিনি আমার প্রিয় সুহৃদ্, তিনি আমার ( দ্বিতীয় ) হৃদয়, তিনি আমার মূর্ত্তিমান্ আনন্দ এবং জীবিতধারণের সমগ্র ফলস্বরূপ; তিনি আমার শরীর অথবা জীবন, অথবা ইহা অপেক্ষা যাহা অধিক তিনি আমার তাহাই ছিলেন। শ্রীমান্ প্রিয়তম মহারাজ দশরথ আমার কি ছিলেন না ? ॥ ১৩ ॥

হা কষ্ট ইনিই সেই কৌশল্যা !

ইঁহার অথবা ইঁহার পতির যে কোন গুহ্য প্রণয়াপরাধ হইত, তজ্জন্য আমাকে দম্পতীর নিকট পৃথক্ পৃথক্ ভাবে তিরস্কারের পাত্র হইতে হইত। তদনন্তর প্রসন্নতা

সম্পাদনের অথবা কোপসঙ্কুক্ষণের ব্যবস্থা আমারই আয়ত্ত ছিল। অথবা যাহা হৃদয়কে অভিভূত করিয়া দগ্ধ করিতেছে তাহা স্মরণ করিয়া কোন ফল নাই ॥ ১৪ ॥

অরুন্ধতী। হা কষ্ট ; অতি দীর্ঘকাল নিশ্বাস নিরুদ্ধ হওয়াতে ইঁহার হৃদয় স্পন্দনহীন হইয়াছে।

জনক। হায়! প্রিয়সখি।

[ কমণ্ডলুর জলদ্বারা সিক্ত করিতে লাগিলেন ]

কঞ্চুকী। বিধাতা প্রথমে সুখবিধান তৎপর সুহৃদের ন্যায় একতান অবিমিশ্র আনুকূল্য প্রদর্শন করিয়াছিলেন কিন্তু হায় অকাণ্ডে ভাবান্তর অবলম্বনপূর্ব্বক ভীষণ প্রতিকূলতাচরণ দ্বারা কেবল মনোব্যথা বর্দ্ধন করিতেছেন ॥ ১৫ ॥

কৌশল্যা [ সংজ্ঞালাভ করিয়া ] হা বৎসে জানকি। তুমি কোথায় আছ? বিবাহ সময়ে আবির্ভূত শোভাবিশেষদ্বারা সমধিক অলঙ্কৃত, সমুজ্জ্বল হাস্যবিকাশে পুণ্ডরীক প্রতিম তোমার সেই মনোহর মুখমণ্ডল আমার স্মৃতিপথে উদিত হইতেছে। হে বৎসে, সুবিমল শশধরের প্রস্ফুরিত জ্যোৎস্নার ন্যায় অভিরাম অঙ্গ দ্বারা আমার ক্রোড়দেশে পুনর্ব্বার সমুদ্ভাসিত কর। মহারাজ সর্ব্বদা বলিতেন "এই জানকী রঘুকুলের মহত্তরদিগের বধূ ; জনকের সহিত সম্বন্ধবশতঃ এ আমার কন্যা ভিন্ন আর কেহ নয়।"

*Janaka.*—[*Approaching.*] Revered Arundhati, the king of the Videhas whose ensign is a ploughshare offers his salutations to you.

With my head bending down to the surface of the ground I bow to your reverence as to the divine Dawn, blissful to the three worlds, and adored of the whole world ; you by whom your husband, the most revered of the venerable primeval sages, and himself a receptacle of pure and hallowed light thinks himself to have been sanctified. (10)

*Arundhati.*—May the supreme light manifest itself to you, and may the god who is blazing and is beyond the reach of the principle of evil purify you !

*Janaka.*—Noble Gristi, is it all well with the mother of that protector of men ?

*Chamberlain.*—[*To himself*]. Thoroughly and most mercilessly have we been reproached.

[ *Aloud* ]. Royal sage, it does not behove you to aggrieve the queen who is very much afflicted and has on account of this very grief long foregone (the pleasure of) the sight of the moon-like face of Ramabhadra. And to Rambhadra too it was some evil

turn of fate. As the mean-minded townsfolks and the country-people would not believe in the ordeal of fire, and began to spread all around an abominable slander, this cruel act was done by his majesty.

*Janaka.*—Ah! what is this fire in the matter of purifying my progeny? Oh woe! Already insulted by Rama, we are being again insulted by him who speaks thus.

*Arundhati.*—[*Heaving a sigh*]. Quite so. Fire is but a small and insignificant thing, (its purifying power being taken into account) in reference to my dear child. The very name Sita is quite a sufficient (pledge of sanctity). Ah! My dear child, that you are but a child to me or a disciple of mine, let that be as it may. But the pre-eminence of your purity confirms my reverence for you. Childhood or womanhood is of no consideration whatever. You are indeed to be adored by all the worlds. In virtuous men it is merit and not age or sex that is the object of admiration. (11)

*Kausalya.*—Oh, my agonies are (as if) being renewed! [*She faints away.*]

*Janaka.*—Ah! Alas! what is this?

*Arundhati.*—Royal sage, what else can it be?

The King Dasaratha, that happiness, the young children, those (joyful) days, all this has been recalled to her mind at the sight of you, a beloved friend. Then under this terrible shock your friend has fainted away. For tender as a flower is the heart of matrons. (12)

*Janaka.*—Alas! Alas! By all means I have become a heartless fellow, since I do not cast an affectionate look at the dear wife of my dear friend, seen after a long time.

Dasaratha was my esteemed relation, my dear friend, my (second) heart, my joy incarnate, the accomplishment of the entire aim of my life, my very body or my soul, or any other thing that is more precious than they; what there is that my dearest friend, the great king Dasaratha, was not to me? (13)

Alas! She is that very Kausalya.

I became separately an object of reproach from each of the couple for any great conjugal offence committed either by herself

or by her husband. And then the matter as to pacification or exasperation was entirely under my control. No use recollecting these things which overpower the heart and burn it. (14).

*Arundhati.*—Oh ! Misfortune ! Her heart is motionless and still on account of her breath being stopped for a long while.

*Janaka.*—Alas ! My dear friend !

[*Besprinkles her with the water in his gourd.*]

*Chamberlain.*—Like a friend disposed to minister joy, fate has at first shown an unmixed and uniform favourableness ; and then being cruel on account of a sudden and inopportune change aggravates, alas, our mental anguish. (15).

*Kausalya.*—[*Recovering herself*] Alas ! my daughter Janaki, where are you ? I remember your lotus-like face, charming on account of the appearance of a bright smile, and having for its sole adornment the peculiar grace due to nuptial rites. My child, brighten once more my lap with your limbs beautiful as the beaming light of the moon. The great king often used to say, "This is the daughter-in-law of the noble elders in the race of Raghu ; but on account of our relation to Janaka she is only a daughter to us."

कञ्चुकी। पञ्चेति। पञ्चप्रसूतेः अपि राज्ञः सुबाहुशत्रुः विशेषेण प्रियः आसीत्। आत्मा यथा हि प्रिया तनूजा वधूचतुष्के अपि सीता तथा एव आसीदिति शेषः ॥ १६ ॥

प्रसूयन्ते या ताः प्रसूतयः सन्ततयः, बाहुलकात् कर्मणि क्तिन् पञ्च शान्ताकन्या रामादयश्चत्वारः भ्रातरः इति पञ्चसंख्यकाः प्रसूतयः अपत्यानि यस्य स पञ्चप्रसूतिः तस्य पञ्चप्रसूतेः एकाधिकचतुरपत्यस्य अपि राज्ञः दशरथस्य सुबाहोः मारीचसहचरस्य राक्षसस्य शत्रुः निहन्ता इति सुबाहुशत्रुः रामः विशेषेण इतरेभ्यः आधिक्येन प्रियः स्नेहास्पदम् आसीत्। शान्ता यथा प्रिया परमस्नेहास्पदं तनूजा दुहिता वधूनाम् चतुष्के चतुष्टये सीता अपि तथैव प्रिया आसीत्। दुहितेव स्नेहभाजनं बभूव। उपजातिः वृत्तम् ॥ १६ ॥

विशेषेण प्रकृत्यादिभ्यश्चोपसंख्यानमिति तृतीया। तन्वा जायते या सा तनूजा। पञ्चम्यामजातौ इति जनेर्डः। स्त्रियां मूर्तिस्तनुस्तनूरित्यमरः। तनू + जन् + ड = तनूज। स्त्रियां टाप् = तनूजा।

चतस्रः परिमाणमस्य इति, चतुष्कः सङ्घः गणः इत्यर्थः। वधूनां चतुष्कः इति वधूचतुष्कः तत्र वधूचतुष्के निर्द्धारे सप्तमी। चतुःशब्दात् सङ्घार्थे कन्प्रत्ययः। संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु इति कन्प्रत्ययः।

जनकः। सर्व्वैः प्रकारैः विधाभिः हृदयङ्गमः हृद्यः प्रीत्यास्पदमित्यर्थः इति सर्व्वप्रकारहृदयङ्गमः। हृदय + गम् + खच् = हृदयङ्गम। गमेः सुप्युपसंख्यानमिति खच् प्रत्ययः। वि + स्मृ = लट् से ( कर्म्मणि वाच्ये ) = विस्मर्य्यसे।

कन्याया इति। कन्यायाः पितरः जामातुः आप्त जन पूजयन्ति किल। सम्बन्धे ( आवयोरितिशेषः ) मयि ते तत आराधन विपरीतम् एव अभूत्। तथाविधः त्वं कालेन अपहृत., तत् सम्बन्धवीजस्य अपहृतमिति शेषः। घोरे अस्मिन् जीवलोक-नरके पापस्य मे जीवितं धिक्॥ १७॥

कन्यायाः दुहितुः पितरः जनकादयः आत्मीयजना इत्यर्थः जामातुः कन्याभर्त्तुः आप्तं हित जन पितादिकमात्मीयं जनं पूजयन्ति अर्च्चयन्ति किल, एषा एव रीतिः चिरन्तनी इत्यर्थः। सम्बन्धे आवयोरस्मिन् यौने सम्बन्धे जाते मयि कन्यापितरि ते जामातर्पितृ. तव तत् आराधनमर्च्चन विपरीतम् लोकप्रचलितरीतेरननुरूपमेव अभूत्। मया अर्च्चयितव्यस्त्वं मामर्च्चितवान् इति चिरन्तन्याः रीतेर्व्यत्ययः समजनि। तथाविधः मद्गुणग्रामनिलयः उदारहृदयस्त्वम् कालेन कृतान्तेन दुरतिक्रमेण समयेन वा अपहृतः लोकान्तरं नीतः असि तत् सम्बन्धवीजस्य सम्बन्धस्य मूल अस्मद्दुहिता अपि इत्यर्थः अपहृतम्। घोरे भीषणे निरतिशयक्लेशबहुले इत्यर्थः अस्मिन् जीवलोकनरके संसाररूपे निरये पापस्य अपुण्यकृतः मम जीवितं प्राणान् धिक्। भवादृशस्य सुहृदः मरणात् कन्यायाश्च ईदृगचिन्तितदुर्विपाकात् परं यदिदानीमपि प्रियं तत् खलु मे दुष्कृतस्य फलम्। शोच्यं मे जीवितमिति भावः। शार्द्दूलविक्रीडितं वृत्तम्।

जायां मिमीते इति जामाता। जाया + मा + तृच्। पृषोदरादित्वात् साधुः। आप् + क्त = आप्त। आप्तः प्रत्ययितः हितः इत्यर्थः। वि + परि + इण् + क्त = विपरीत। मयि इति विषयाधिकरणे सप्तमी। जीवानां प्राणिनां लोकः भुवन-मिति जीवलोकः। जीवलोक एव नरकः इति जीवलोकनरकः। जीवितमिति धिक् शब्दयोगात् द्वितीया। किलेति वार्त्तायाम्। किलसम्भाव्यवार्त्तयोः।

कौशल्या। जाते वत्से, पुत्रि इति यावत्। दृढेन कालान्तरस्थायिना वज्र-लेपेन लेपविशेषेण घटितः विहितः यो बन्धः संयोगः तेन निश्चलं स्थिरं प्रयाणे अशक्त-मित्यर्थः इदं मे दग्धजीवितं मां न मुञ्चति। प्राणा मां न जहति। तवापाये जीवितसन्धारणं विफलमिति भावः।

अरुन्धती। वाष्पाणां विरामः विच्छेदः अवसानमिति यावत् अन्तराले अन्तरा मध्ये इत्यर्थः कर्त्तव्यः। अविश्रान्तरोदनेन महान् अनर्थपातः सम्भाव्यते खलु। युष्मत्-

कुलगुरोर्वचनं सत्यत्वेन परिणतम्। कल्याणः शुभावहः उदर्कः उत्तरं फलं यस्य तत् कल्याणोदर्कम् शुभपरिणामं भविष्यति उदर्कः फलमुत्तरम्। उत्पूर्व्वात् ऋच्धातोः घञ् = उदर्कः यद्वा अर्कयतेः घञ्।

कौशल्या। मनसो रथ इव इति मनोरथः अभिलाषः अतिक्रान्तः अतीतः। अपुनराहत्तयोगतः।

अरुन्धती। राजपुत्रि, राजकन्ये, क्षत्रियकुमारि इत्यर्थः। तत् युष्मत्कुलगुरुवचनम् मृषोद्यम् मिथ्यावाक्यम्, अनृतभाषितम् इत्यर्थः मृषा + वद + क्यप् (भावे) = मृषोद्य। मृषा मिथ्या तस्य वचनमित्यर्थः। वदः सुपि क्यप् च। चकारात् अनुपसर्गे सुपि उपपदे यत्। मृषोद्यम मृषावद्यम्। हे सुक्षत्रिये सत्कुलप्रसूते क्षत्रिये एवं न चिन्तयितव्यम्; अवश्यमेव तेन वाक्येन सत्येन भाव्यमित्यर्थः। क्षतः नाशात् त्रायते इति क्षत्रः। क्षत्रस्य अपत्यम् इति क्षत्रियः। क्षत्राद्घः इति क्षत्रियः। तज्जातीया स्त्री इति क्षत्रिया पक्षे क्षत्रियाणी अर्य्यक्षत्रियाभ्यां वा स्वार्थे। इति पक्षे आनुक्। पुंयोगे तु क्षत्रियी। क्षण् + क्विप् = क्षत्। क्षत् + त्रै + क = क्षत्र। क्षत्र + घ = क्षत्रिय। क्षत्रिय + टाप् = क्षत्रिया।

आविर्भूतेति। आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहाराः तेषु संशयः माभूत्। एषां वाचि भद्रा लक्ष्मीः निषक्ता हि; एते वितथां वाचं न व्याहरन्ति ॥ १८ ॥

आविर्भूतं ज्ञानविषयीभूतमित्यर्थः ज्योतिः सत्त्वाख्यं ब्रह्माख्यं वा ज्योतिः येषां तेषां आविर्भूतज्योतिषां अवाप्तब्रह्मसाक्षात्काराणां ब्राह्मणानां ब्रह्मज्ञानां विप्राणां ये व्याहाराः उक्तयः तेषु संशयः सन्देहः विचिकित्सा इति यावत् मा भूत् मा अस्तु। एषां ब्राह्मणानां वाचि वाक्ये भद्रा मङ्गल्या अवितथेत्यर्थः लक्ष्मीः श्रीः निषक्ता नियतं सन्निहिता वर्त्तते। एते ब्राह्मणाः वितथां वृथाभिधेयां अयथार्थां वाचं गिरं न व्याहरन्ति न भाषन्ते।

अत्र श्लोके शालिनीवृत्तम्। मात्तौगौचेच्छालिनी वेदलोकैः। भद्रास्येषामिति चरणम् महाभाष्यात् समुद्धृतम्। तथाच महाभाष्यधृत वचनम्—

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

द्युत् + इसिन् = ज्योतिस्। द्युतेरिसिन्नादेश्च जः। ब्रह्म + अण् = ब्राह्मण। वि + आङ् + हृ + घञ् = व्याहार। उक्तिर्व्याहारोलपितम्। तेषु इत्यत्र विषयाधिकरणे सप्तमी। सम् + शी + अच् = संशयः। माङि लुङ् इति लुङ्। मा भूत्। न माङ्योगे इति अडागमप्रतिषेधः। नि + सञ्ज + क्त (कर्त्तरि) = निषक्त। उपसर्गात्सुनोतिसुवतीत्यादिना षत्वम्। वि + प्लु + क्त = विप्लुत।

जनकः। शिष्टानां वेदविदां ऋषीणामित्यर्थः आगमनजन्यः अनध्यायः वेदादिपाठाभावः इति शिष्टानध्यायः।

न पाणिपादचपलो न नेत्रचपलो भवेत्।
न वाङ्चपलो विप्रः इति शिष्टस्य गोचरः॥
पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥
वशिष्ठसंहिता षष्ठः अध्यायः।

उद्धतं अत्यर्थं भृशमिति यावत् खेलतां क्रीडताम् वटूनां ब्राह्मणकुमाराणां कलकलः अस्फुटध्वनिः उच्चरति इति शेषः। उत् + हन् + क्त = उद्धत। खेल + शतृ = खेलत्।

कौशल्या। सुलभं अनायासलभ्यं सांसारिकचिन्तादेरभावात् इत्यर्थः सौख्यं सुखं यस्मिन् तत् सुलभसौख्यम्। रामभद्रस्य लक्ष्मीः देहशोभा तया परिशोभितैः अलङ्कृतैः अवष्टम्भेन सौष्ठवेन सह वर्त्तमानानि इति सावष्टम्भानि सौष्ठवयुक्तानि मुग्धानि मनोहराणि ललितानि सुन्दराणि तैः सावष्टम्भमुग्धललितैः सौष्ठवमाधुर्य्यचारुत्वोपेतैः। सौष्ठवं स्यादवष्टम्भः इति हलायुधः। ललितं त्रिषु सुन्दरे। अव + स्तम्भ + घञ् = अवष्टम्भ। अवाच्चालम्बनाविदूर्य्ययोरिति षत्वम्। शीतलानि करोति इति शीतलयति। तत्करोति तदाचष्ट इति णिच्। शीतल + णिच् + लट् शीतलयति।

अरुन्धती। [अपवार्य्य—अपवारितलक्षणं वक्ष्यते,—कौशल्याप्रभृतिभि रज्ञायमानं यथा तथा इत्यर्थः। हर्षेण उत्कण्ठया औत्सुक्येन च सह वर्त्तमानं यथा तथा सहर्षोत्कण्ठम्] भागीरथ्या गङ्गया निवेदितं कथितं रहस्यं गूढ़विवरणं यस्य तत् भागीरथीनिवेदितरहस्यं कर्णयोः श्रवणयोः अमृतम्,—अमृतवदाह्लादकं रामचन्द्रपुत्रजन्मरूपं वचनमित्यर्थः। आयुष्मती: कल्याणिनोः कुशलवयोर्मध्ये अयं कतरः कुशो वा लवो वा इति न विद्मः जानीमः। किम् + डतर = कतर।

जनकः। कुवलयेति। कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनः पुण्यश्रीकः श्रिया वटुपरिषदं सभाजयन् इव, पुनः शिशुः भूतः स मे वत्सः रघुनन्दनः इव कः अयं दृष्टः झटिति दृशोः अमृताञ्जनं कुरुते॥ १९॥

कुवलयस्य इन्दीवरस्य दलानि पत्राणि इव स्निग्धश्यामः मसृणश्यामवर्णः इति कुवलयदलस्निग्धश्यामः इन्दीवरदलकोमलद्युतिः इन्द्रनीलमणिसच्छायः शिखण्डकाः काकपक्षाः मण्डनं भूषणं यस्य स शिखण्डकमण्डनः काकपक्षधरः, पुण्या पवित्रा श्रीः शोभा यस्य स पुण्यश्रीकः, समासान्तः कः वैभाषिकः, पवित्रलक्ष्मीकः श्रिया स्वकान्त्या वटूनां ब्राह्मणकुमाराणां परिषदं गोष्ठीं सभाजयन् अलङ्कुर्व्वन् इव, पुनः भूयः अपि शिशुः भूतः कौमारमापन्नः स मे वत्सः पुत्रकः रघुनन्दनः राम इव कः अयं शिशुः

हष्ट: विलोकित: झटिति शीघ्रं दर्शनक्षणे एव इत्यर्थ: हशौ: नयनयो: अमृताञ्जनम् अमृतेन सुधया अञ्जनं विलिपनं कुरुते अमृतवर्त्त्या चक्षुषी अनक्ति लिम्पतीव इति प्रतीयमानोत्प्रेक्षा। श्रिया सभाजयन्निव इत्यत्र वाच्या उत्प्रेक्षा। पुन:श्रियुर्भूत: रघुनन्दन इव इत्यत्र अक्षुतोपमा इति प्राचीना: उत्प्रेक्षा इति नव्या:। कुवलयदल-स्निग्धश्याम: इत्यत्र समासगा उपमा। एषां मिथोनिरपेक्ष्येणावस्थानात् संसृष्टि:। हरिणीवृत्तम्। परि + सद् + क्विप् = परिषद् सदिरप्रते: इति षत्वम्। समाज-संसदास्थानी सभा स्यात् परिषत्सद: इति हलायुध:। सभाज इत्यदन्तस्चुरादि: तस्मात् शतृप्रत्यय:। पुंसि सौ सभाजयन्निति पदम्।

কঞ্চুকী। দেবী যেরূপ বলিলেন তাহা সত্যই। রাজা দশরথের পাঁচটি অপত্য থাকিলেও সুবাহুশত্রু (রাম) তাঁহার সবিশেষ প্রিয় ছিলেন। এবং শান্তা তাঁহার যেরূপ প্রিয় কন্যা বধূচতুষ্টয়ের মধ্যে সীতাও সেইরূপ ছিলেন ॥ ১৬ ॥

জনক। হায়, প্রিয়সুহৃদ দশরথ। তুমি সর্ব্বপ্রকারে আমার এইরূপ হৃদয়ঙ্গম ছিলে; তোমাকে কিরূপে ভুলিব। কন্যার পিতৃপক্ষীয়গণই জামাতার আপ্তজনকে অর্চ্চিত করিয়া থাকেন ইহাই লোকব্যবহার। কিন্তু আমাদিগের মধ্যে যৌনসম্বন্ধ স্থাপিত হওয়ার পর তুমি যে আমাকে সেইরূপ অর্চ্চিত করিতে ইহা লোকব্যবহারের বিপরীতই ছিল। তাদৃশ সজ্জন তুমি কালকর্ত্তৃক অপহৃত হইয়াছ; সম্বন্ধের বীজও অপহৃত হইয়াছে। এই অতিভীষণ জীবলোকরূপ নরকে আমি জীবিত রহিয়াছি; পাপাত্মা আমি আমার জীবনে ধিক্ ॥ ১৭ ॥

কৌশল্যা। বৎসে জানকি! কি করিব; আমার এই দগ্ধ জীবন যেন অতি দৃঢ় বজ্রলেপ দ্বারা নিবদ্ধ হইয়া নিশ্চল হইয়া রহিয়াছে, এই হতভাগিনীকে পরিত্যাগ করিতেছে না।

অরুন্ধতী। রাজপুত্রি আশ্বস্ত হও। মধ্যে মধ্যে অশ্রুপাতের বিশ্রান্তি সম্পাদন করা কর্ত্তব্য। আর ঋষ্যশৃঙ্গাশ্রমে তোমাদিগের কুলগুরু যাহা বলিয়াছিলেন তাহা কি তোমার স্মৃতিপথে উদিত হয় না। তাহাই ত ঘটিয়াছে। কিন্তু ইহার পরিণাম শুভ হইবে।

কৌশল্যা। ভগবতি, মনোরথ অতিক্রান্ত হইয়াছে।

অরুন্ধতি। তবে কি, রাজপুত্রি তুমি মনে কর যে সে মিথ্যাবাক্য। হে সৎক্ষত্রিয়কুলজাতমহিলে ইহার অন্যথা হইবে এরূপ মনে করা উচিত নহে; ইহা নিশ্চিতই ঘটিবে।

যে ব্রাহ্মণগণ ব্রহ্মজ্যোতির সাক্ষাৎকার লাভ করিয়াছেন তাঁহাদিগের উক্তিতে কোনরূপ সন্দেহ করিও না। তাঁহাদিগের বাক্যে শুভাবহা লক্ষ্মী নিহিত থাকেন; তাঁহারা কদাপি মিথ্যা বা বিপরীতার্থ বাক্য উচ্চারণ করেন না ॥ ১৮ ॥

[ নেপথ্যে কল কল ধ্বনি ]

সকলে শ্রবণ করিতে লাগিলেন।

জনক। অদ্য শিষ্টব্যক্তিদিগের আগমনহেতু অনধ্যায়; এই জন্য ব্রাহ্মণ

কুমারগণ উদ্ধতভাবে ক্রীড়া করিতেছে; তাহাদিগেরই এই কলকলধ্বনি।

কৌশল্যা। বাল্যকালে সুখ অতীব সুলভ। [নিপুণভাবে অবলোকন করিয়া] ওমা! ইহাদিগের মধ্যে ঐ বালকটি কে যে রামভদ্রের শরীরের শোভার স্থায় শোভা দ্বারা সমলঙ্কৃত, সৌষ্ঠবমাধুর্য্যসৌন্দর্য্যসম্পন্ন অঙ্গ দ্বারা আমাদিগের লোচন শীতল করিতেছে।

অরুন্ধতী। [জনান্তিকে হর্ষ ও উৎকণ্ঠার সহিত, স্বগত] ভাগীরথী কর্ণে অমৃতবর্ষী, অতি গোপনীয় যে বৃত্তান্ত বলিয়াছিলেন ইহা তাহাই। কিন্তু জানিনা দীর্ঘায়ুঃ কুমারদ্বয় কুশ ও লবের মধ্যে এ কোনটি।

জনক। ইন্দীবরদলবৎ স্নিগ্ধ শ্যামবর্ণ, শিখণ্ডক দ্বারা বিভূষিত মুখমণ্ডল, পুণ্যশ্রী এই বালকটি কে? স্বীয় দেহশোভা দ্বারা ব্রাহ্মণবালকমণ্ডলীকে যেন অলঙ্কৃত করিতেছে; ইহাকে দেখিলে মনে হয় যেন আমার বৎস রামচন্দ্র পুনর্ব্বার শিশু হইয়াছেন; এবং ইহাকে দেখিবামাত্র নয়নদ্বয় যেন অমৃতাঞ্জন দ্বারা বিলিপ্ত হইতেছে ॥ ১৯ ॥

*Chamberlain.*—It is just as the Queen Dowager says—

The slayer of Subahu ( Rama ) was a special favourite ( son of ) the king though he had five children. And of the four daughters-in-law, Sita was as much dear to him as his own beloved daughter Santa. (16)

*Janaka.*—Ah! My dear friend, great king Dasaratha, you were in every respect such a bosom friend. How can I forget you?

The parents of the bride do homage, as the custom goes, to the kinsmen of the bridegroom. But in the connection between us your respectful behaviour towards me was just the reverse of the customary practice. You, who were such (a noble fellow) have been taken away by death ;and likewise the root of our connection. Woe worth my life,Oh fie upon me,who am a base sinner dragging a ( miserable ) existence in the frightful hell of this world of beings (17).

*Kausalya.*—My child Janaki, what can I do? My accursed life firmly fixed by a fast adamantine glue does not leave me, a miserable wretch.

*Arundhati.*—Be consoled, Princess. You should cause the ceaseless flow of tears to be stopped at times. And moreover don't you remember what your family priest told in the hermitage of Rishyasringa? That very thing has come to pass ; but it shall have an auspicious end.

*Kausalya.*—Venerable lady, my hopes are gone.

*Arundhati.*—Do you think, O Princess, that it was an untrue statement. No, you good Kshatriya woman, you should not think it to be otherwise. It is bound to be true.

Let there be no doubt about the truth of the statements made by Brahmans to whom the supreme light has been revealed. There is a benign grace inhering in their words. Never do they utter words which are to be falsified. (18).

[ *An indistinct noise behind the scenes. All listen.* ]

*Janaka.*—To-day is a holiday in honour of the distinguished learned guests ; and therefore the Brahman boys are playing boisterously, from whom proceeds this confused noise.

*Kausalaya.*—In childhood happiness is how easily attained ! [*Marking with attention.*]

Ah ! Who is that boy in their midst that delights our eyes with symmetrical, beautiful and lovely limbs bearing the grace of the body of Ramchandra ?

*Arundhati.*—[*Aside, with joy and eagerness, to herself.*]

This is that secret information given by Bhagirathi, which was sweet as nectar to the ears. But I do not know which one of the two dear ones, Kusa and Lava, that boy is.

*Janaka.*—Of a smooth, dark complexion like the petals of a blue lotus, having forelocks imparting a charming grace to his form possessed of pure and holy grace, adorning, as it were, with his beauty, the whole group of boys, and looking like my dear Rama truned once more a boy, who is this boy that being beheld all at once refreshes my eyes with an ointment of ambrosia ? (19).

कञ्चुकी। ब्रह्म चरति इति ब्रह्मचारी कृतोपनयनः गुरुकुलेवसन् वेदमधीयानः इत्यर्थः। क्षत्रियश्चासौ ब्रह्मचारी चेति क्षत्रियब्रह्मचारी। अयं दारकः बालकः कश्चित् क्षत्रियकुमारः ब्रह्मचर्यमनुतिष्ठति।

चूडेति। पृष्ठतः अभितः चूडाचुम्बितकङ्कपत्रं तूणीद्वयं भस्मस्तोमपवित्रलाञ्छनम् उरः रौरवीं त्वचं मौर्व्या मेखलया नियन्त्रितं माञ्जिष्ठिकम् अधोवासः पाणौ कार्मुकम् अक्षसूत्रवलयं तथा पैप्पलम् दण्डं च धत्ते ॥ २० ॥

तथाहि अयं कुमारः पृष्ठतः अभितः पृष्ठस्य उभयोः भागयोः चूडाभिः शिखण्ड-कैरित्यर्थः चुम्बितानि स्पृष्टानि कङ्कस्य तदाख्यस्य पक्षिविशेषस्य पत्राणि वाणावी

मूलप्रदेशे गतिलाघवार्थं निवेशितानि यस्य तत् चूडाचुम्बितकङ्कपत्रं तूणीद्वयम् इषुधि-युगलं तूणीपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः तूण्यामिति अमरः। लम्बमानशिखाभिः संस्पृष्टसायकमूलं तूणीरयुगलम्, भस्मनां भसितानां क्षौमः पुञ्जः पवित्रं पूतं लाञ्छनं चिह्नं यस्य तत् भस्मक्षौमपवित्रलाञ्छनम्, पवित्रेण क्षौमानलभस्मना अङ्कितमित्यर्थः उरः वक्षःस्थलम् रुरुः मृगविशेषः तस्य इयमिति रौरवी ताम् ऐणेयीं त्वचं चर्म्म,उत्तरीय-मित्यर्थं मौर्व्व्या मेखलया धनुर्गुणरूपया काञ्च्या वासोबन्धनरज्ज्वा इत्यर्थः नियमितं कटितटे निबद्धम् माञ्जिष्ठिकं मञ्जिष्ठारागरक्तम् अधोवासः अन्तरीयकम् च पाणौ हस्ते कार्म्मुकं धनुः अक्षाणां जपार्थरुद्राक्षाणां सूत्रस्य वलयम्, वलयीकृतं अक्षसूत्रम् जपमालामित्यर्थः तथा किञ्च पैप्पलम् अश्वत्थशाखानिर्म्मितं दण्डं ललाटसम्मितां यष्टिं धत्ते। एतानि खलु क्षत्रियब्रह्मचारिभिर्धारणीयानि। एभिर्लिङ्गैरयं क्षत्रियब्रह्म-चारीति ज्ञायते। शार्दूलविक्रीडितं वृत्तम। दूरात् दुरुपलक्ष्यभेदम् उपवीतं कविना नात्रोल्लिखितम्। ब्रह्मचर्यविट् ब्रह्मचारिभिः धारणीयं मेखलादिकमाह मनुः—

"कार्ष्णरौरव वास्तानि चर्म्माणि ब्रह्मचारिणः।
वसीरन्नानुपूर्व्व्येण शाणक्षौमाविकानि च॥
मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।
क्षत्रियस्य तु मौर्व्वीज्या वैश्यस्य शणतान्तवी॥
कार्पासमुपवीतं स्याद्विप्रस्योर्द्धवृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्।
ब्राह्मणो वैल्वपालाशौ क्षत्रियो वाटखादिरौ।
पैलवोदुम्बरौ वैश्यो दण्डानर्हन्ति धर्म्मतः॥"

वटवृक्षः अश्वत्थजातीयः। अतएव कविः पैप्पलं दण्डं धत्ते इत्याह।

अभि + तस् = अभितः; पर्य्यभिभ्यां सर्व्वोभयाभ्यामिष्यते इति उभयार्थे तसिः। पृष्ठतः पृष्ठे पृष्ठस्य वा इत्यस्मिन्नर्थे सप्तम्याः षष्ठ्याः वा तसिः। सार्व्वविभक्तिकस्तसिः। अत्र अभितः शब्दयोगात् द्वितीया नाप्नोति। अभिशब्दस्य भागार्थत्वात्। अभिर-भागे इति सूत्रेण द्वितीयायाः बाधः अभ्युपेतव्यः। अन्यथा अभितः परितः समया निकषा हा प्रतियोगेऽपि इति वार्त्तिकेन द्वितीया स्यात्। रुरु + अण् = रौरव; (स्त्रियां ङीप्) रौरवी। मूर्व्वा तृणविशेषः मूर्व्वादेवी मधुरसा इत्यमरः। तन्निर्म्मिता ज्या मौर्व्वी। मूर्व्वा + अण् (स्त्रियां ङीप्) = मौर्व्वी। मौर्व्वी ज्या शिञ्जिनीगुणः इत्यमरः। यन्त्रयतेः कर्म्मणि क्तः यन्त्रितम्। अन्तरीयकमधोवासः। वस् + असुन् = वासस्। वस्ते; ववसे; अवसिष्ट। वसितः। मञ्जिष्ठा + ठक् = माञ्जिष्ठिक। अत ठक् प्रयोगश्चिन्त्यः। तेन रक्तं रागात् इत्यनेन अण् प्रवीणः एव

साधीयान्। मञ्जिष्ठया रक्तम् माञ्जिष्ठम्। माञ्जिष्ठमेव इति माञ्जिष्ठकम्। स्वार्थे क प्रत्ययः। माञ्जिष्ठकमितिपाठः सम्यक्। माञ्जिष्ठिकमिति पाठे "लाक्षारोचनात् ठक्" इति सूत्रस्य अतिदेशेन शैषिकेण वा ठक् प्रत्ययेन साधनीयम्। पिप्पलस्य अयम् इति पैप्पलः। कर्म्मणे प्रभवति इति कार्म्मुकम्। कर्म्मन्+उकञ्=कार्म्मुक। धनुश्चासौ धन्वशरासनकोदण्डकार्म्मुकमित्यमरः।

किमुत्प्रेक्षसे किंमन्यसे अयम् कुतस्त्यः कुतः आगतः इति कुतस्त्यः अव्ययात्त्यप् इति त्यप् प्रत्ययः।

अरुन्धती। अद्यैवागतावयम्। This is an evasive answer. She gives this reply to the query of Janaka; the natural conclusion from the sense of her reply is that she could not say anything as she came to the hermitage that very day, but she does not say so; for that would be telling a direct lie. She leaves Janaka to conclude as best as he may from her reply.

जनकः। प्रकृष्टं वयो येषां ते प्रवयसः। वृद्धाः। द्रष्टुमिच्छवः दिदृक्षवः। दृश्+सन्=दिदृक्ष। दिदृक्ष+उ=दिदृक्षु। सनाशंसभिक्षः उः।

अरुन्धती। ईदृशस्य एवंविधस्य निर्म्माणस्य उत्कृष्ट यथा तथा निर्म्मितस्य आकृतिविशेषस्य, कृदभिहितो भावः द्रव्यवत् प्रकाशते; सद्वृत्तम् शीलं साधु आचरणम् भिद्येत विच्छिद्येत, विलुप्येत इत्यर्थः। सम्भावनायां लिङ्। कर्म्मकर्त्तरिप्रयोगः। Cf. "यत्राकृतिस्तत्र गुणावसन्ति"; "यदुच्यते पार्व्वति पापवृत्तये नरूपमित्यव्यभिचारि तद्वचः"।

कौशल्या। विसृष्टाः परित्यक्ताः स्त्रैणां दारकाः बालकाः कुमाराः येन स विसृष्टर्षिदारकः। निशामितम् आकर्णितं गृष्टेर्वचनं येन स निशामितगृष्टिवचनः। शम आलोचने इति धातोः मित्वनिषेधात कर्म्मणिः क्तः निशामितम्।

जनकः। [ निर्व्वर्ण्य निपुणं विलोक्य, निर्व्वर्णनन्तुनिध्यानमित्यमरः ]

महिम्नामिति। विनयशिशुतामौग्ध्यमसृणः विदग्धैः न पुनः अविदग्धैः निर्ग्राह्यः महिम्नाम् अतिशयः एतस्मिन् वर्त्तते इति शेषः। परिलघः अयस्कान्तशकलः अयोधातुं यद्वत् तथा इति शेषः बलवान् सम्मोदः स्थिरम् अपि मे मुहुः हरति एव ॥ २१ ॥

विनयः प्रश्रयः शिशुता शैशवं बाल्यमितियावत मौग्ध्यं मौन्दर्य्यम् आर्ज्जवं वा इति विनयशिशुतामौग्ध्यानि तैः मसृणः श्लक्ष्णः हृद्य इति भावः। इति विनयशिशुतामौग्ध्यमसृणः सौशीलशैशवसारल्यमनोहरः विदग्धैः विद्वद्भिः विचक्षणैरित्यर्थः अविदग्धैः अनिपुणैरविद्वद्भिः पुनः किन्तु न निर्ग्राह्यः निःशेषेण बोद्धव्यः ज्ञेयः इति यावत्, विदग्धस्छेको उच्यते इति हलायुधः महिम्नां माहात्म्यानाम् अतिशयः

आधिक्यम् अतिरेक इति यावत् एतस्मिन् शिशौ वर्त्तते इति शेषः। परिलघुः अत्यल्पोऽपि अयस्कान्तस्य लौहाकर्षकमणिविशेषस्य शकलः खण्डः यद्वत् यथा अयोधातुं लौहं हरति आकर्षति तथा बलवान् प्रबलः महानिति यावत् सम्मोदः मे मम शिशुं विलोकयतः इति शेषः स्थिरं निश्चलमक्षोभ्यमपि मनश्चित्तं हरति कर्षति उत्तरलीकरोति एव।' उपमालङ्कारः। हृदयमर्म्मच्छेदिभिः संसारभावैर्मम-मनोलौहवत् कठिनं जातमिति अलङ्कारेण वस्तुध्वनिः। तादृशमपि चित्तमानन्देन परवशमुद्वेलितञ्च सवृत्तमित्यहो सम्मदस्य प्रकर्ष इति भावः शिखरिणीवृत्तम्।

महत् + इमनिच् (भावे) = महिमन्। वि + नी + अच् = विनय। मुग्धस्य भावः इति मौग्ध्यम्। मुग्ध + ष्यञ्। वि + दह + क्त = विदग्ध। निर् + ग्रह + ण्यत् = निर्ग्राह्य। अति + शी + अच् = अतिशय। सम् + मुद + घञ् = सम्मोद। मोदते ; मुमुदे ; अमोदिष्ट। मुदितः। अयः एव धातुः इति अयोधातुः। धा + तुन् = धातु। ' अयस्कान्त; मणिविशेष: load-store, magnet. अयसः कान्तः इव कान्तवदाकर्षकः इत्यर्थः इति अयस्कान्तः। यद्वा काम्यते यः स कान्तः। अयः कान्तो यस्य सः अयस्कान्तः।

কঞ্চুকী। আমার মনে হয় নিশ্চিতই এই বালক ব্রহ্মচর্য্যব্রতধারী কোন ক্ষত্রিয়-কুমার।

জনক। ইহা সত্য। কারণ– ইহার পৃষ্ঠের উভয়ভাগে তূণীরদ্বয় লম্বমান রহিয়াছে, দীর্ঘ শিখাগুচ্ছ তূণীরনিহিত বাণগুলির মূলপ্রদেশে অবস্থিত কঙ্কপত্রকে স্পর্শ করিতেছে। ইহার বক্ষঃস্থল ভস্মরাশিরূপ পবিত্র লাঞ্ছনে চিহ্নিত ; রৌরব চর্ম্ম ইহার উত্তরীয়, এবং মঞ্জিষ্ঠারাগরক্ত অধোবাস মৌর্ব্বীরূপ মেখলাদ্বারা (ইহার কটিদেশে) নিবদ্ধ। এবং ইহার হস্তে কার্ম্মুক, অক্ষমালিকাবলয়, ও অশ্বত্থনির্ম্মিত দণ্ড রহিয়াছে॥ ২০॥

ভগবতি, অরুন্ধতি, এই বালক কোথা হইতে আসিয়াছে এ সম্বন্ধে আপনি কি মনে করেন?

অরুন্ধতী। আমরা অদ্য এই স্থানে আসিয়াছি।

জনক। আর্য্য গৃষ্টি, আমার অত্যন্ত কৌতুক উৎপন্ন হইয়াছে। অতএব আপনি ভগবান্ বাল্মীকির সমীপে গমন করিয়া ইহার বিষয় জিজ্ঞাসা করুন ; এবং এই বালককে বলুন যে কতিপয় বৃদ্ধ তোমাকে দেখিতে ইচ্ছা করেন।

কঞ্চুকী। যে আদেশ করেন। [ নিষ্ক্রান্ত ]।

কৌশল্যা। আপনারা কি মনে করেন যে ঐ বালকটী এইরূপে অভিহিত হইলে এখানে আগমন করিবে।

অরুন্ধতী। ঈদৃশ আকৃতি কি বিনয়াদিশীলবিবর্জ্জিত হইতে পারে ?

কৌশল্যা। [ অবলোকন করিয়া ] ঐ বালকটি বিনীতভাবে গৃষ্টির বাক্যশ্রবণ করিয়া ঋষিবালকদিগকে পরিত্যাগ পূর্ব্বক এই দিকেই যে আসিতেছে।

জনক। [দীর্ঘকাল নিরীক্ষণ করিয়া] অহো কি অনির্ব্বচনীয় আশ্চর্য্যজনক ভাব। এই বালকে বিনয়, শৈশবও মাধুর্য্যহেতু হৃদয়গ্রাহী নিরতিশয় মহিমা পরিলক্ষিত হইতেছে, যাহা বিদগ্ধ জনেরই বুদ্ধির বিষয়ীভূত ; কিন্তু অবিদগ্ধজনে বুঝিতে পারে না। অতি ক্ষুদ্র অয়স্কান্ত মণিখণ্ড যেরূপ নিশ্চল লৌহ ধাতুকে আকৃষ্ট করে, সেইরূপ প্রবল আনন্দ আমার নিশ্চল চিত্তকে উদ্বেলিত করিতেছে ॥ ২১ ॥

*Chamberlain.*—I think that the boy surely belongs to the warrior caste and is in the first stage of life, that is to say, a student's stage of life.

*Janaka.*—Exactly so. For,—

He has on both sides of his back two quivers of arrows, the feathers of the Kanka birds at the hafts of which are being kissed by the tuft of his hair, his breast has the holy mark of a plaster of ashes, and he wears the hide of the Ruru deer, his lower garment dyed red with madder (*Manjistha*) is fastened by a girdle of the bow-string (generally made of Murba grass), and he has in his hands a bow, a rosary of *Rudrakshas*, and a staff made of (a branch of) the *Pippala tree.* (20).

Revered Arundhati, what do you think ? Whence may he have come from ?

*Arundhati.*—We have come here this very day.

*Janaka.*—Revered Gristi, great is my curiosity ; therefore please go and ask the holy Valmiki ; and tell this boy also that certain old men are desirous of seeing him.

*Chamberlain.*—As you command. [*Exit*].

*Kausalya.*—What do you think ? Will he come, being told thus ?

*Arundkati*—Can such a form be without noble conduct ?

*Kausalya.*—[*Marking with attention*]. How wonderful ! Having listened with modesty to the words of Gristi, the boy comes this way, after having dismissed the boys of the anchorites.

*Janaka.*—[*Observing with attention for a long time.*] Oh ! It must be something very strange ! There is an excess of greatness in this boy, which is softened and smoothed by modesty, boyishness and frankness, and which can be discerned by skilful men and not by undiscerning persons. A strong joy carries away my

mind, calm though it is ; just as a small bit of loadstone draws the metal of iron. (21).

लव:। नाम आख्या, क्रम: पूज्यत्वस्य पर्य्याय:, अभिजन: वंशश्च इति नामक्रमाभिजना: न विज्ञाता नामक्रमाभिजना: येषां तान् अविज्ञातनामक्रमाभिजनान्। स्वत: स्वयं स्वबुद्ध्या उद्भाव्य इत्यर्थ: कथं वन्दिष्ये कोनुखलु वन्दनाप्रकार: स्यात्। अविरुद्ध: लोकत: शास्त्रतश्च अगर्हणीय: प्रकार: रीतिरित्यर्थ:। प्रणामाणां पर्य्याय: क्रम: इति प्रणामपर्य्याय: यथापूज्यमभिवादनमित्यर्थ:। परि + इण् + घञ् = पर्य्याय।

अरुन्धती। सीताया: पुत्रं क्रोडे करिष्यामि इति सुचिरं हृदये पोषित: अभिलाष: अद्य परिपूर्ण: क्रोड़श्च अस्य शिशोरध्यासेन परिपूर्ण:।

कौशल्या। दरं मनाक् अल्पमित्यर्थ: विकसत् उन्मीलत् यत् नीलम् उत्पलम् इन्दीवरमित्यर्थ: तत् दरविकसन्नीलोत्पलम् ईषद्विकसितकुवलयम्। तदिव श्यामल: उज्ज्वलश्च उपमानानि सामान्यवचनैरिति समास:। तथोक्तेन देहबन्धेन शरीरघटनेन। अरं शीघ्रं विन्दते वृद्धिं लभते इति अरविन्दम् पद्मम्। यद्वा अरम् अराकारं चक्रमित्यर्थ: विन्दते अन्तर्लभते इति अरविन्दम्। विन्दते: श:। तस्य केशरा: किञ्जल्का इति अरविन्दकेशरा: कवलितै: भक्षितै: अरविन्दकेशरै: कषाय: रक्त: मधुर इत्यर्थ: कण्ठ: लक्षणया स्वर: यस्य स कवलितारविन्दकेशरकषायकण्ठ: तथोक्तस्य कलहंसस्य अव्यक्तमधुरध्वने: राजहंसस्य निनाद: ध्वनि: कवलितारविन्दकेशरकषायकण्ठकलहंसनिनाद: स इव दीर्घदीर्घ: दीर्घप्रकार: प्रकारे गुणवचनस्य इति द्विर्भाव: इति द्वित्वम् कर्म्मधारयवदुत्तरेषु इति सुब्लोप:। तेन स्वरेण कण्ठध्वनिना रामभद्रस्य अनुहरति अनुकरोति। अस्य बालस्य देह: वर्णेन घटनासौष्ठवेन च रामभद्रस्य देहस्य सदृश: ; किञ्चास्य स्वरोऽपि रामभद्रस्य स्वरसदृश:। किञ्च अस्य गात्रस्य स्पर्श: अपि रामगात्रस्पर्श इव अमृतायमान:। कठोरस्य उपचितावयवस्य कमलस्य पङ्केरुहस्य गर्भ: अभ्यन्तरदलमिव पक्ष्मल: सुकुमार:। अतिकोमलत्वात् दन्तुरत्वाच्च सरसिजाभ्यन्तरदलानां स्पर्श: नेत्रलोम्नां स्पर्श इव सुकुमार:। तदिह सौकुमार्य्यं पक्ष्मलशब्देन लक्षणापुच्छभूतया व्यञ्जनया उपस्थाप्यते। पक्ष्मशब्दात् सिध्मादिभ्यश्चेति लच्। (बाष्पेण आनन्दाश्रुणा आकूतेन अभिप्रायेण च सह वर्त्तते इति सबाष्पाकूतम्] निपुणं सावधानमित्यर्थ: निरूप्यमाणं निरीक्ष्यमाणमस्य मुखं वत्साया: सीताया: मुखचन्द्रेण सह संवदति सदृशीभवति। साम्यं प्रकटयति। दरशब्द: त्रासार्थे गर्त्तार्थे च अमरेण मेदिनीकोषकारेण च पठित: ईषदर्थे दरशब्द: अव्ययम् मेदिनीकोषे दृश्यते। अभिधान रत्नमालायाम् "भृष्टा यवास्तु धाना दरपक्व: कथ्यतेऽभ्यूष:" इत्यत्र दरशब्द: ईषदर्थे प्रयुक्त:। कवलं करोति इति कवलयति ▸

तत् करोति तदाचष्टे इति णिच्। ततः कर्म्मणि क्तः। नि + नद + घञ् = निनाद। पक्षे अप्, निनदः। नौगदनदपठस्वनः। निनदः निनादः। अनुपूर्व्वात् हरतेः गत्यनुकारे आत्मनेपदम्। अत्र तु स्वरस्य अनुकरणम् अतएव आत्मनेपदस्य नावसरः। उत्पूर्व्वात् नमेः णिचि मित्संज्ञायां ह्रस्वत्वे उन्नमयति इति रूपम्। उन्नमयतेः ल्यपि, ल्यपि लघुपूर्व्वात् णेरयादेशः इति अयादेशे उन्नमय्य इति रूपसिद्धिः।

कौशल्या। अनुन्मत्तम् उन्मत्तं भूतम् इति उन्मत्तीभूतम्। विप्रलपति, असम्बद्धमसम्भाव्यञ्च किञ्चित् वक्तुं प्रस्तौति।

जनकः। वत्साया इति। वत्सायाः रघूद्वहस्य च सम्पूर्णप्रतिविम्बता अस्मिन् शिशौ अभिव्यज्यते इव। निखिला आकृतिः सा एव द्युतिः सा वाणी सा सहजः विनयः सएव, पुण्यानुभावः अपि असौ। हा हा दैव पारिप्लवं मम मनः उत्पथैः किम् धावति॥ २२॥

वत्सायाः सीतायाः रघूद्वहस्य रामस्य च सम्पूर्णं समग्रं प्रतिविम्बं प्रतिच्छाया यस्मिन् स सम्पूर्णप्रतिविम्बः तस्य भावः सम्पूर्णप्रतिविम्बता, सम्यक्सादृश्यमित्यर्थः। प्रतिमानं प्रतिविम्बं प्रतिमा प्रतियातना प्रतिच्छाया इत्यमरः। अस्मिन् शिशौ वालके अभिव्यज्यते व्यक्तीक्रियते। स्पष्टं लक्ष्यते इत्यर्थः निखिला सर्व्वा आकृतिः आकारः अस्य वालकस्य सा एव सीतारामयोरिव इति भावः। द्युतिः अस्य शिशोः शरीर-कान्तिः सा एव रामशरीरकान्तितुल्या इत्यर्थः वाणी कण्ठस्वरः इत्यर्थः सा एव सहजः स्वाभाविकः विनयः प्रश्रयः स एव ; पुण्यः पावनः अनुभावः तेजोविशेषः असौ एव रामतुल्यानुभावः अयमित्यर्थः। हा हा दैव भाग्यम्, पारिप्लवं चञ्चलं मम मनः किम् किमर्थम् उत्पथैः उन्मार्गैः असम्भाव्यकल्पनावर्त्मना धावति, व्याकुलीभवति इत्यर्थः। अयं सीतागर्भजः रामस्य तनयः इति चिन्तयत् चित्तं मे आनन्दपूरे निमज्जति इति भावः। शार्द्दूलविक्रीड़ितं वृत्तम्।

द्युत + इन् ( उणादि ) = द्युति। अभि + वि + अन्ज लट् ते ( कर्म्मणि ) = अभिव्यज्यते। अनक्ति ; आनञ्ज ; आञ्जीत्। अक्तः। सह + जन + ड = सहज। अनुगतोभावः इति अनुभावः। उच्छृङ्खलाः पन्थानः इति उत्पथाः ऋक्पूरव्धूःपथामानक्षे इति समासान्तः अप्रत्ययः। तैः करणे तृतीया। परि + प्लु + अच् (कर्त्तरि) = परिप्लव। परिप्लवमेव इति पारिप्लवम्। स्वार्थे अण्। चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे इत्यमरः।

*N. B.* Bhababhuti studied the works of Kalidasa thoroughly and with admiration. Though he does not imitate the style of Kalidasa, he reproduces his master's thoughts and

sentiments consciously or unconsciouly in his own way. Compare this verse with the following verse of Kalidasa :—

रूपं तदोजस्वि तदेव वीर्य्यम्
तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात् स्वाद्बिभिदे कुमारः
प्रवर्त्तितो दीप इव प्रदीपात् ॥

सेना + ठक = सैनिक । आश्रमस्य अभ्यर्णा समीपवर्त्तिनी भूमिः इति आश्रमाभ्यर्णभूमिः तपोवनपर्य्यन्तप्रदेशः इत्यर्थः अभि + अर्द्द + क्त = अभ्यर्ण । अभिश्चाविदूर्य्ये इति निष्ठायामिड़भावः अभ्यर्णमासन्नमित्यर्थः । अन्यत्र अभ्यर्द्दितः । आक्रमितव्या स्प्रष्टव्या प्रवेष्टव्या इत्यर्थः ।

লব। [ প্রবেশ করিয়া, স্বগত ] যাঁহাদিগের নাম ও বংশপরিচয়ের ক্রম জানি না, এবং যাঁহারা আমার বহুমানাস্পদ, তাঁহাদিগকে আমি স্বয়ং কোন্ প্রণালী অবলম্বন করিয়া অভিবাদন করি ? [ চিন্তা করিয়া ] বৃদ্ধদিগের নিকট শুনিয়াছি এইরূপ প্রণালীতে কোন দোষ নাই। [ বিনীতভাবে সমীপে গমন করিয়া ] আমি মস্তক দ্বারা ভূমি স্পর্শ করিয়া আপনাদিগকে যথাক্রমে প্রণাম করিতেছি।

অরুন্ধতী ও জনক। কল্যাণাস্পদ বৎস, তুমি দীর্ঘজীবী হও।

কৌশল্যা। বৎস, তুমি চিরজীবী হও।

অরুন্ধতী। এস বৎস। [ লবকে ক্রোড়ে করিয়া স্বগত ] সৌভাগ্যক্রমে বহুকাল পরে আমার ক্রোড়ই কেবল পূর্ণ হইল এমন নহে ; মনোরথও পূর্ণ হইল।

কৌশল্যা। বৎস, আমার ক্রোড়েও এস। [ ক্রোড়ে করিয়া ] আহা, এই শিশু কেবল ঈষদ্‌বিকসিত নীলোৎপলের ন্যায় শ্যাম ও উজ্জ্বল দেহাবয়বঘটনা এবং অরবিন্দ-কেসর ভক্ষণহেতু সুরক্তকণ্ঠ কলহংসের ধ্বনির ন্যায় দীর্ঘদীর্ঘতর কণ্ঠস্বর দ্বারা যে রামভদ্রের অনুকরণ করিতেছে তাহা নহে, সুজাত কমলের গর্ভচ্ছদের কোমল স্পর্শের ন্যায় বৎসের গাত্রস্পর্শও সেইরূপ। বৎস, তোমার মুখচন্দ্র দেখি। [ চিবুক উন্নমিত করিয়া যত্ন সহকারে নিরীক্ষণ করণানন্তর অশ্রুমোচনপূর্ব্বক আবেগের সহিত ] রাজর্ষি, আপনি কি দেখিতেছেন না, নিপুণভাবে দেখিলে স্পষ্টই প্রতীতি হয় যে ইহার মুখে বৎসা সীতার মুখচন্দ্রের সৌসাদৃশ্য বিদ্যমান আছে।

জনক। দেখিতেছি, সখি, দেখিতেছি।

কৌশল্যা। আহা আমার হৃদয় যেন উন্মত্ত হইয়াছে। এবং কি এক চিন্তায় আকুল হইয়া কত কি অসম্বদ্ধ কল্পনা করিতেছে।

জনক। [ যত্নসহকারে নিরীক্ষণ করিয়া ] এই শিশুর আকৃতিতে বৎসা সীতা ও রঘুদ্বহ রামচন্দ্রের যেন সম্পূর্ণ প্রতিবিম্ব পতিত হইয়াছে। ইহার আকৃতি সেইরূপ,

কান্তি ও সেইরূপ, কণ্ঠস্বর ও স্বাভাবিক বিনয়ও সেইরূপ ; এবং পবিত্র তেজোবিশেষ ও ঠিক সেইরূপ। হা অদৃষ্ট, আমার চঞ্চল চিত্ত কেন উৎপথে ধাবিত হইতেছে ॥ ২২ ॥

কৌশল্যা। বৎস, তোমার জননী আছেন কি ? তোমার পিতাকে মনে পড়ে কি ?

লব। না, না।

কৌশল্যা। তবে তুমি কাহার ?

লব। ভগবান্ বাল্মীকির।

কৌশল্যা। বৎস, যাহা বলিবার আছে তাহা বল, ( গোপন করিও না )।

লব। আমি এই মাত্রই জানি।

[ নেপথ্যে ] ওহে, সৈনিকগণ, কুমার চন্দ্রকেতু আদেশ করিতেছেন যে তোমাদিগের মধ্যে কেহ আশ্রমের সন্নিকৃষ্ট ভূমিতে গমন করিবে না।

*Lava.*—[ *Entering, to himself.*] How shall I, of my own accord, offer my salutations to these persons whose names, rank and lineage are not known to me, but who are nevertheless deserving of respect from me. [*Reflecting.*] It is heard from elderly persons that this is an unobjectionable mode of address [ *Approaching with modesty.*] Here is a succession of salutations offered to you all by Lava with his head.

*Arundhati and Janaka.*—May you have a long life, blessed boy !

*Kausalya.*—My dear child, may you live long !

*Arundhati* —Come, my child. [*Taking Lava on her lap, to herself.*] Not only has my lap been filled, but my desire also has after a long time been luckily fulfilled.

*Kausalya.*—My dear child, come here also. [*Placing him on her lap.*] How wonderful ! He imitates Ramabhadra not only in point of the structure of his body, bright and blue like slightly opened blue lotuses ; but also in point of his voice, deep and sonorous like the prolonged cackling of a gander with its throat rendered melodious by tasting the filaments of lotuses. Indeed the very touch of his body is the same, soft and agreeable like the inside of a fully developed lotus.

My dear child, I should like to see your moon-like face. [*Raising his chin, marking it, with tears and pathos.*] Royal sage, don't you see ?

His face, closely observed, bears a resemblance to the moon-like face of my dear daughter-in-law.

*Janaka.*—I see it, my dear friend, I see it.

*Kausalya.*—Oh ! my mind has become bewildered, as it were, it fancies something (impossible) and raves in sundry ways.

*Janaka.*—[*Observing closely.*] In this child a complete and perfect image of my dear daughter and also of the chief of Raghu's race is to be seen. The entire form is the same, the glow of the body the same, the voice the same, the innate modesty the same, and the very same is the holy, majestic bearing. Alas ! alas ! Oh ! Fate, why does my perturbed mind run along wild paths ? (22).

*Kausalya.*—Have you a mother ? Do you remember your father ?

*Lava.*—No, no.

*Kausalya.*—To whom do you belong then ?

*Lava.*—I belong to the holy Valmiki.

*Kausalya.*—Dear child, say what you have got to say (without concealing anything )

*Lava.*—I know this much only.

[*Behind the scenes.*] Ye soldiers, here the Prince Chandraketu commands you that no one should trespass into the grounds adjacent to the hermitage.

अरुन्धतीजनकौ। मेध्यस्य पवित्रस्य मेधार्हस्य वा अश्वमेधीयस्य इत्यर्थः अश्वस्य स्वच्छन्दं विचरतः वाजिनः रक्षायाः प्रसङ्गात् प्रसञ्जनात् क्रमात् इत्यर्थः अत्र आश्रमोपकण्ठे समागतः लक्ष्मणात्मजश्चन्द्रकेतुरद्य अस्माभिरीक्षितव्यः अहो भाग्यम्। अहो पुण्यमिदं दिनम्।

कौशल्या। अमृतस्य सुधायाः विन्दवः पृषन्ति इति अमृतविन्दवः ते इव सुन्दराणि मधुराणि श्रुतिसुभगानि कर्णामृतानि इत्यर्थः अक्षराणि वाक्यानि इत्यर्थः श्रूयन्ते मयेति शेषः।

लवः। रामायणकथायाः पुरुषौ नायकौ इति रामायणकथापुरुषौ। रामायणस्य कथायाः आख्यानस्य प्रधानपुरुषौ।

लवः। दुहितुरपत्यं पुमान् इति दौहित्रः। दुहितृ+अण्। मैथिलस्य मिथिलाधिपस्य। उर्म्मिलायाः पुत्रः इति उर्म्मिलापुत्रः और्म्मिलेयः।

अरुन्धती। कथायां रामायणाख्याने प्रावीण्यम् वैचक्षण्यम् नैपुण्यमितिभावः इति कथाप्रावीण्यम्। वीणया प्रगायति इति प्रवीणयति। वीणाशब्दात् णिच्। ततः प्रवीणयतेः नामधातोः कर्त्तरि अच् प्रत्ययेन प्रवीणशब्दः सिद्धः। प्रवीणस्य भावः इति प्रावीण्यम्। प्रवीण + ष्यञ्।

जनकः। किं नामधेयं येषां तानि किन्नामधेयानि। अपत्यानि सन्ततयः। प्रसूतानि उत्पन्नानि। धातोरर्थान्तरे वृत्तिवशात् अकर्म्मकत्वात् कर्त्तरि क्तः।

लवः। यस्मिन् अंशे दशरथतनयानां अपत्योत्पत्तिविवरणं कविना उपनिबद्धम् सः अंशः अस्माभिः अन्येन वा नाकर्णितः।

जनकः। प्रणीतः रचितः। प्र + नी + क्त ( कर्म्मणि ) = प्रणीत।

लवः। न प्रकाशितः सर्व्वेषां दृग्गोचरं श्रुतिगोचरं वा न प्रापितः। तस्यैव विभागस्य कोऽपि अंशः अन्यः सन्दर्भः इति सन्दर्भान्तरं तेन सन्दर्भान्तरेण प्रबन्धान्तरेण रसवान् करुणादिरसबहुलः अभिनेयः अभिनययोग्यः अर्थः वस्तु यस्य सः अभिनेयार्थः कृतः रूपकादिरूपेण परिणमितः इत्यर्थः। स्वहस्तेन ननु शिष्यादिभिः इत्यर्थः तौर्य्यत्रिकसूत्रकारस्य भरतस्य व्यसृजत् प्रेरितवान्।

ग्रथनं ग्रन्थन गुम्फः सन्दर्भो रचना स्मृता। रस + मतुप् ( भूमार्थे ) = रसवत् अभि + नी + यत् = अभिनेय।

तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् इत्यमरः। "तूर्य्यं मुरजादि तत्र भवं तौर्य्यम्। तौर्य्योपलक्षितम् त्रिकम् इति तौर्य्यत्रिकम्" इति अमरटीकायां महेश्वरः। तौर्य्यत्रिकस्य नृत्यगीतवाद्यस्य नाट्यस्य इत्यर्थः सूत्रं करोति यः सः तौर्य्यत्रिकसूत्रकारः नाट्यसूत्रकारः। कर्म्मण्यण् इति कृञः अण्। भरतस्येति सम्बन्धविवक्षया षष्ठी।

लवः। अप्सरोभिः नाटकस्य पात्रभूताभिः सुरनारीभिः प्रयोजयिष्यति अभिनेष्यति। अद्भ्यः सरन्ति इति अप्सरसः। अप् + सृ + असुन् = अप्सरस्।

जनकः। आकूतस्य विस्मयस्य कौतूहलस्य इत्यर्थः हेतुरित्यर्थः। आकूतं करोति इति आकूतकरम्। कृञो हेतुताच्छील्यानुलोम्येषु इति टप्रत्ययः। आङ् + कू + क्त (भावे) = आकूत।

लवः। आस्था आदरः। आङ् + स्था + अङ् (भावे) = आस्था। अन्ते वसन्ति ये ते अन्तेवासिनः शिष्याः। शयवासवासिषु अकालात् इति सप्तम्याः अलुक्। हस्तेनेति करणे तृतीया। अनुपश्चात् यात्रा गमनं प्रयोजनमस्य इति अनुयात्रिकः। प्रयोजनमिति ठञ्। अनुयात्रा + ठञ् = आनुयात्रिक। चापः पाणौ यस्य स चापपाणिः प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः इति सप्तम्यन्तस्य परनिपातः।

प्रमादस्य अनवधानताया: अपनोदनं निरसनम् अर्थ: प्रयोजनं यस्मिन् कर्म्मणि तद् यथा तथा प्रमादापनोदनार्थम्। अनवधानतानिवारणाय इत्यर्थ:।

लव:। प्रसवस्य मातृगर्भात् वहिर्गमनस्य क्रम: पौर्व्वापर्य्यरूप: तेन स मे ज्यायान् अग्रज: स प्राक् भूमिष्ठ: अभवत् तत: अहम्। वृद्ध + ईयसुन् = ज्यायस्। वृद्धस्य ज्यादेश:।

जनक:। यमजौ युग्मजातौ। यम + जन् + ड = यमज।

जनक:। कथाया: प्रबन्ध: बन्धनं रचना इत्यर्थ: तस्य कथाप्रबन्धस्य। पर्य्यन्त: सीमा अवधिरिति यावत्।

लव:। अलीक: मिथ्या पौराणां प्रवाद: कौलीनम् तस्मादुद्विग्न: व्याकुल: इत्यर्थ: तेन राज्ञा रामेण निर्व्वासितां परित्यक्तामित्यर्थ: आसन्ना अदूरवर्त्तिनी प्रसवस्य वेदना यातना यस्या: ताम् आसन्नप्रसववेदनाम् पूर्णगर्भामित्यर्थ: देवीं सीतां सौमित्रि: अरण्ये विहाय अयोध्यां प्रतिगत: इति कथाया: अवधि:।

कौशल्या। कुसुमभूतस्य कुसुमतुल्यस्य। युक्तेक्ष्मादावृतेभूतं प्राण्यतीते समे त्रिषु इत्यमर: कुसुमै: तुल्यम् इति कुसुमभूतम् नित्यसमास:। दैवस्य भाग्यस्य दुर्विलास: अशुभफलोन्मुखीभाव: तस्य परिणाम: परिपाक:।

जनक:। नूनमिति। त्वया नवञ्च घोरञ्च परिभवं, प्रसवकालकृतां तां व्यथाञ्च अवाप्य क्रव्यादगणेषु परित: परिवारयत्सु सन्त्रस्तया सत्या शरणम् इति नूनम् असकृत् स्मृत: अस्मि॥ २३॥

हा वत्से त्वया नवं अननुभूतपूर्व्वं च घोरं भीषणं च परिभवं तिरस्कारम् अवमाननां प्रसवस्य गर्भमोचनस्य काले कृतामुत्पादितां तां सर्व्वत्रप्रसिद्धां व्यथां वेदनाञ्च अवाप्य लब्ध्वा क्रव्यादां आममांसभोजिनां पिशिताशनानां गणेषु समूहेषु त्वद्भक्षणलोलुपेषु परित: समन्तात् परिवारयत्सु परिवेष्टयत्सु सन्त्रस्तया भीतया सत्या अस्मि अहम् शरण रक्षिता पित: क्वासि रक्षमामिति उक्त्वा इत्यर्थ: नूनं निश्चितम् असकृत् मुहु: स्मृत: अभवम् इति शेष:। प्राणसङ्कटे समुपस्थिते माम् मुहुराह्वतवत्यासी: इत्यर्थ:। उत्प्रेक्षालङ्कार:। नूनमित्युत्प्रेक्षावचनम्। वसन्ततिलकं वृत्तम्।

तामिति प्रसिद्धार्थत्वात् यच्छब्दनिरपेक्षस्य तच्छब्दस्य प्रयोग:। व्यथ + (भावे) अङ् (भिदादित्वात्) = व्यथा। व्यथते; विव्यथे; अव्यथिष्ट। क्रव्य + अद + विट = क्रव्याद। क्रव्यादगणेषु इति भावे सप्तमी। परित: समन्तात्। परि + तस्। सम् + त्रस् + क्त (कर्त्तरि) = सन्त्रस्त। शरणं गृहरक्षित्रो: अजहल्लिङ्गोऽयं शब्द:। अहमित्यस्य विधेयविशेषणम्। अस्मीति तिङन्तप्रतिरूपकमव्ययम् अहम् इत्यर्थ:। तथाचप्रयोग:—दासीकृतागसिभवत्युचित: प्रभूणां पादप्रहार इति सुन्दरिनास्मिदूये। उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैर्यद्भिद्यतेमृदुपदं ननु सा व्यथा मे

[बहुमानेन सम्मानेन गौरवेण इति यावत् खेदेन दुःखेन कौतुकेन कौतूहलेन च सह वर्त्तमानम् इति सबहुमानखेदकौतुकम् । ]

जनकः । दुर्मर्य्यादानाम् अतिक्रान्तमर्य्यादानां भावः इति दुर्मर्य्यादता। मर्य्यादा लोकस्थितिः । दुर दूषिता इत्यर्थः मर्य्यादा यैः ते दुर्मर्य्यादाः । चिप्रं शीघ्रम् पूर्व्वापरमनालोच्य इत्यर्थः करोति कार्य्यं यः स चिप्रकारी। तस्य भावः चिप्रकारिता हठकारिता अविमृष्यकारिता इत्यर्थः ।

एतदिति एतत् वैशसघोरवज्रपतन शश्वत् उत्पश्यतः मम क्रोधस्य चापेन शापेन वा धक् इति ज्वलितुम् अवसरः ॥ २४ ॥

एतत् सीताविवासनरूपम् विशसति छिनत्ति इति विशसः घातकः । तस्य कर्म्म इति वैशसं इत्या तदेव घोरं भीषण वज्रपतनम् तत् अकाण्डे वज्रपातोपममेतन्नृशंस कर्म्म इत्यर्थ शश्वत् निरन्तरम् उत्पश्यतः उत्प्रेक्षमाणस्य चिन्तयतः इत्यर्थः मम क्रोधस्य कोपस्य चापेन धनुषा आयुधग्रहणरूपेण द्वारेण, शापेन अभिसम्पातप्रदान रूपेणोपायेन वा धक् इति ज्वलितं धक इति शब्द कृत्वा इत्यर्थः ज्वलितं अवसरः समयः सम्प्राप्तः इति शेषः । धगिति शब्द कृत्वा वह्नेर्ज्वलन प्रसिद्धम् स च वह्निः क्रोधस्य उपमानत्वेन प्रसिद्धस्तस्य उपमानस्य धर्म्मः उपमेये उपचरितः उपमानन्तु लोपात्तम् । नात्र साध्यवसाना लक्षणा, तत्र उपमानेन उपमेयं निगीर्य्यते । अत्र तु उपमेयेन उपमान निगीर्णम् । प्रयोगस्य वैचित्रम् । अतिशयोक्तिरलङ्कारः क्रियासाम्यात् अप्रस्तुतस्य वह्नेर्गम्यमानत्वात् समासोक्तिर्वा । धगिति अनुकृतिपरः शब्दः । चापेन, शापेन इत्यत्र करणे तृतीया ज्वलनक्रियायाः आविर्भावरूपायाः इत्यर्थः साधन चापधारणम् शापप्रदान वा । क्षत्रियत्वात् चापस्य प्रथमग्रहणम् ; अध्ययनसम्पत्त्या तपःप्रभावेण च पश्चादुपगतर्षिभावत्वात् शापस्य पश्चान्निर्द्देशः । अत्र अवसरशब्दः कालार्थकः ततश्च कालसमयवेलासु तुमुन्निति ज्वलितुमित्यत्र तुमुन्प्रत्ययः ।

अरुन्धती । एतदिति । परिभूतानां मनस्विनाम् एतत् हि प्रायश्चित्तम् राजन् रामः ते अपत्यम् कृपणाः प्रजाः च पाल्याः ॥ २५ ॥

परिभूतानां तिरस्कृतानां अवमानितानां मनस्विनाम् तेजस्विनाम् एतत् चापग्रहणं शापप्रदानं वा प्रायश्चित्तम् परिभवक्षालनाय करणीयम् कृत्यम् । दुष्कृतस्य क्षालनाय यथा कृच्छ्रादिकं प्रायश्चित्तम् क्रियते तथा आयुधग्रहणेन शापदानेन वा निकारस्य प्रक्षालनं क्रियते इत्यर्थः । यद्वा परिभूतानां अवमतानां मनस्विनां चित्तम् मनः प्रायः प्रायेण एतत् ईदृशं भवति इत्यर्थः । मनस्विनो निकृताः सन्तः प्रायेण एवं प्रतिकृतिं कर्त्तुमीहन्ते इति व्याख्यानं । किन्तु हे राजन् रामस्ते अपत्यम् पुत्रकल्पः स कृतापराधोऽपि मर्षयितव्यः । कृपणाः दीनाः प्रजाः प्रकृतयश्च पाल्याः रक्षणीयाः चापवर्षणेन शापदानेन वा न विनाशयितुमर्हाः ।

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयोगात् प्रायश्चित्तमितीर्य्यते । इति हेमाद्रिः ।

"प्रायस्य चित्तिचित्तयोः इति सुट् । मनस् + विनि (प्रशंसायाम्) = मनस्विन् । परि + भू + क्त ( कर्म्मणि ) = परिभूत । प्र + जन + ड = प्रजा । उपसर्गे च संज्ञायामिति ड प्रत्ययः । कृप + क्युन् (न लत्वम्) = कृपण । पालयतेः कर्म्मणि यत् स्त्रियां पाल्या ।

जनकः । शान्तमिति । रघुनन्दने तदुभयं शान्तं तत् मे पुत्रभाण्डं हि । पौरः जनश्च भूयिष्ठद्विजबालवृद्धविकलस्त्रैणः ॥ २६ ॥

रघुनन्दने रामे तदुभयम् आयुधधारणं शापप्रदानञ्च शान्तम् निवारितम् अस्तु इत्यर्थः तदद्वयं रामे प्रयोक्तुं न शक्यते । हि यस्मात् तत् राम इत्यर्थः विधेयप्राधान्यात क्लीवत्वम् मे मम पुत्रभाण्डम् पुत्ररत्नम् । पुत्ररूप मूलधनमित्यर्थः स्याद्भाण्डमश्वाभरणे-ऽमत्रेमूलवणिगधने इत्यमरः । मूर्खादन्यः कोनाम निजं मूलधनं क्षयं नयतीति भावः । पौरः पुरवासी जनश्च वीभत्सकिंवदन्त्याः प्रवर्त्तयिता पुरवासिवर्गः दण्डार्होऽपि शापादिदानेन विनाशयितुं न अर्हति यतः पुरवासिषु अनेके अवध्याः सन्ति ; तथाहि भूयिष्ठाः वहवः द्विजाः अवध्याः ब्राह्मणाः बालाः बालकाः निरागसः इति भावः वृद्धा. वर्षीयांसः अक्षमत्वात् कृपार्हाः विकलाः विकलाङ्गा हस्तपादादिहीना इत्यर्थः सर्व्वथा पालनीयाः स्त्रैणं स्त्रीसङ्घातः अवध्यः इति भावः यस्मिन् स भूयिष्ठद्विजबालवृद्ध-विकलस्त्रैणः । अतः तत्रापि तदुभयं शान्तमित्यर्थः । शार्द्दूलविक्रीडितं वृत्तम ।

स्त्रीणां समूहः इति स्त्रैणम् । "स्त्रीपुंसीभ्यां नञ्स्नञौभवनात्" इति अत्र समूहार्थे नञ्प्रत्ययः । वहु + इष्ठन् = भूयिष्ठ । द्वि + जन् + ड = द्विज ।

অরুন্ধতী ও জনক । অহো, অশ্বমেধীয় অশ্বের রক্ষাপ্রসঙ্গে সমাগত বৎস চন্দ্রকেতুকে অদ্য নিরীক্ষণ করিব ; আজ আমাদিগের কি সুদিবস ।

কৌশল্যা । "বৎস লক্ষ্মণের পুত্র আদেশ করিতেছে" অমৃতবিন্দুস্যন্দব এই অক্ষর গুলি শ্রবণ করিলাম ।

লব । মহাশয়, চন্দ্রকেতু নামক ইনি কে ?

জনক । দশরথাত্মজ রাম ও লক্ষ্মণকে জান কি ?

লব । ইঁহারাই রামায়ণকথার প্রধান পুরুষদ্বয় ।

জনক । তবে কেন জান না যে চন্দ্রকেতু সেই লক্ষ্মণের পুত্র ?

লব । তাহা হইলে উনি রাজর্ষি মিথিলাধিপের দৌহিত্র ঊর্ম্মিলাতনয় ।

অরুন্ধতী । [হাস্য করিয়া] বৎস রামায়ণকথায় যে সাতিশয় প্রবীণ তাহা প্রকাশ করিয়াছে ।

জনক । [ চিন্তা করিয়া ] যখন তুমি রামায়ণকথায় এরূপ অভিজ্ঞ, তখন আমি

জিজ্ঞাসা করিতেছি, বল দেখি দশরথতনয়দিগের কাহার কি নামক অপত্য কোন্ পত্নীর গর্ভে জন্মগ্রহণ করিয়াছে।

লব। এরূপ কথার প্রবিভাগ আমরা পূর্ব্বে শুনি নাই, অন্য কেহও শুনে নাই।

জনক। কবি কি প্রণয়ন করেন নাই?

লব। প্রণয়ন করিয়াছেন, কিন্তু প্রকাশ করেন নাই। সেই প্রবিভাগের কোন এক অংশ অন্য সন্দর্ভযোজনাদ্বারা রসবহুল ও অভিনয়যোগ্য করিয়াছেন। এবং মুনি সেই অংশ স্বহস্তে লিখিয়া নাট্যসূত্রকার ভরতমুনির নিকট পাঠাইয়া দিয়াছেন।

জনক। কি নিমিত্ত?

লব। ভগবান্ ভরত অপ্সরোগণ দ্বারা সেই অংশের অভিনয় করাইবেন এই নিমিত্ত।

জনক। এই সকল কথা আমাদিগের অতীব বিস্ময় উৎপাদন করিতেছে।

লব। ভগবান্ বাল্মীকির সেই অংশের প্রতি অত্যন্ত আস্থা। কতিপয় ছাত্রের হস্তে দিয়া সেই পুস্তক ভরতমুনির আশ্রমে পাঠাইয়া দিয়াছেন। তাহাদিগের অসাবধানতা নিবারণার্থ আমার ভ্রাতাকে ধনুর্হস্তে তাহাদিগের সঙ্গে পাঠাইয়াছেন।

কৌশল্যা। বৎস, তোমার ভ্রাতাও আছে?

লব। কুশ নামে আমার মাননীয় ভ্রাতা আছেন।

কৌশল্যা। তিনি তোমার জ্যেষ্ঠ ইহা বলা হইল।

লব। তাহাই বটে, তিনি প্রসবক্রমে আমার জ্যেষ্ঠ।

জনক। বৎস, তোমরা কি যমজ?

লব। আজ্ঞা হাঁ।

জনক। বল দেখি রামায়ণকথার অবধি কি পর্য্যন্ত?

লব। রাজা অলীকপৌরবাদে উদ্বিগ্ন হইয়া যজ্ঞভূমি সমুৎপন্না সীতাদেবীকে নির্ব্বাসিত করিলে লক্ষ্মণ একাকিনী তাঁহাকে আসন্নপ্রসবাবস্থায় অরণ্যে পরিত্যাগ করিয়া প্রতিনিবৃত্ত হইয়াছিলেন।

কৌশল্যা। হা বৎসে, মুগ্ধচন্দ্রমুখি, অসহায়া তোমার কুসুমসুকুমার শরীরের উপরি একি দৈব দুর্ব্বিলাসরূপ বজ্র নিপতিত হইল!

জনক। হা বৎসে,

তুমি সেই অতর্কিতপূর্ব্ব ঘোর অবমান ও প্রসবকালসমুৎপন্ন সেই দুঃসহ ব্যথা প্রাপ্ত হইয়া যখন ক্রব্যাদ্গণ ভক্ষণার্থ তোমার চতুর্দ্দিকে পরিবেষ্টন করিয়া দাঁড়াইয়াছিল তখন ত্রাসকম্পিত কলেবরে "হা পিতঃ রক্ষা কর" এই বলিয়া নিশ্চয়ই আমাকে বারংবার স্মরণ করিয়াছিলে॥ ২৩॥

লব। [অরুন্ধতীর প্রতি] মহাশয়া, ইঁহারা দুই জন কে?

অরুন্ধতী। ইনি কৌশল্যা; আর ইনি রাজর্ষি জনক।

লব। [সম্মান, খেদ ও ঔৎসুক্যের সহিত অবলোকন করিতে লাগিল]

জনক। দুরাত্মা পুরবাসিগণ কি দুর্ম্মর্য্যাদ! রাজা রাম কি অবিমৃষ্যকারী! ঘোর বজ্রপাতোপম এই নৃশংস হত্যার বিষয় নিরন্তর ভাবিতে ভাবিতে আমার ক্রোধবহ্নি

ধক্ ধক্ করিয়া জ্বলিয়া উঠিবার অবসর প্রাপ্ত হইয়াছে এবং আমাকে চাপগ্রহণে অথবা শাপপ্রদানে প্রণোদিত করিতেছে ॥ ২৪ ॥

কৌশল্যা। ভগবতি, রক্ষা করুন, রক্ষা করুন ; কুপিত রাজর্ষিকে প্রসন্ন করুন।

অরুন্ধতী। অবমানিত মনস্বীদিগের চিত্তের অবস্থা প্রায়শঃ এইরূপ হয়। কিন্তু হে রাজন্ রাম আপনার অপত্য ; দীন প্রজাগণও কৃপার পাত্র ও রক্ষণার্হ ॥ ২৫ ॥

জনক। এই উভয়বিধ প্রতীকারোপায, ঈশ্বর করুন, রঘুনন্দন রামচন্দ্রে যেন প্রযুক্ত না হয়। কারণ রাম আমার পুত্ররত্ন। পুরবাসীদিগের মধ্যেও অনেক ( অবধ্য ) দ্বিজ, বালক, বৃদ্ধ, বিকলাঙ্গ, ও স্ত্রীলোক আছে ॥ ২৬ ॥

*Arundhati and Janaka* —O joy, it is a lucky day that we shall see our darling Chandraketu who was come here on the errand of guarding the sacrificial horse.

*Kausalya.*—"That the son of our dear boy Lakshmana commands"—these words that I hear are sweet as drops of nectar.

*Lava.*—Revered Sir, who is this person, Chandraketu by name ?

*Janaka.*—Do you know Rama and Lakshmana, the sons of Dasaratha ?

*Lava.*—These two are the heroes of the story of the Ramayana.

*Janaka* —Then why don't you know that this Chandraketu is the son of that Lakshmana ?

*Lava.*—Then he is the son of Urmila, and the son of the daughter of the saintly King of Mithila.

*Arundhati.*—[*Laughing*] The boy has displayed his proficiency in the story

*Janaka.*—[*Reflecting.*] If you are so well acquainted with the story, then tell us, we ask you, what children were born unto the sons of Dasaratha, and in which wives they were begotten upon, and what their names are.

*Lava.*—This part of the story has been heard neither by us nor by any other person before.

*Janaka.*—Has not the poet composed it ?

*Lava.*—Yes, it has been composed, but not published. And a certain portion of that part has been made into a separate episode, rich with sentiments, and capable of being represented on the stage. And that portion the sage wrote out with his own hand

and sent it to the sage Bharata, the writer of aphorisms on dramaturgy and music.

*Janaka.*—With what object ?

*Lava.*—That the venerable sage Bharata will have it acted on the stage by celestial nymphs.

*Janaka.*—All this makes us greatly interested in it.

*Lava.*—Great is the care which the venerable sage Valmiki has been taking with that work. It was sent to the hermitage of Bharata through the hand of certain puplis. In order to guard against any carelessness or mischance, my brother with bow in hand has been sent as their follower.

*Kausalya.*—Dear child, have you got a brother too ?

*Lava.*—Yes, my honoured brother, Kusa by name.

*Kausalya.*—You say that he is your elder brother.

*Lava*—Exactly so, but he is my senior only in point of the order of our being delivered.

*Janaka*—Are you then twins ?

*Lava.*—Yes.

*Janaka*—Say, of what sort the termination or end of the story is.

*Lava.*—That Lakshmana returned after having left the Queen Sita alone in the forest who was sprung from the sacrificial ground, whose time of delivery was near at hand, and who was banished by the king disquieted by the false scandals of the citizens.

*Kausalya.*—Alas ! my child, with your face charming as the lunar orb ! What a sad calamity ! the cruel freak of fate came upon your flower-like, delicate body, helpless and alone !

*Janaka.*—Alas ! my child !

Surely did you remember me again and again, crying out for help, when you met with that shocking and unprecedented insult, felt those pains of labour coming upon you at the time of parturition, and got frightened at the carnivorous animals thronging round you from all sides. (23).

*Lava*—[*To Arundhati.*] Venerable lady, who are these two ?

*Arundhati.*—She is Kausalya, and he is Janaka.

*Lava.*—[*Looks at them with feelings of respect, sorrow, and eagerness.*]

*Janaka*—Oh the transgression of all limits and principles of right conduct on the part of the wicked citizens ! Oh the rashness and indiscretion of King Rama !

As I constantly brood over this terrible stroke of the thunderbolt in the shape of this inhuman act, my wrath gets an opportunity of blazing forth with (the aid of the) bow or with imprecation. (24).

*Kausalya.*—Venerable lady, save, O save us ; propitiate the angry royal sage.

*Arundhati.*—Such is generally the mental state of high-minded persons, when they are insulted But Rama is your child, O King, and the poor people must be protected. (25).

*Janaka.*—But those two (curse or bow) should be avoided so far as Rama is concerned, for he is to me a treasure in the form a son. And the people consist mostly of Brahmans, children, aged and decrepit persons and women. (26).

[ सम्भ्रान्ता: व्यग्रा: त्वरावशात् व्याकुला: इत्यर्थ: ] भूतस्य प्राणिन: विशेष: भेद: इति भूतविशेष: प्राणिभेद: । अक्ष्णा: प्रति इति प्रत्यक्षम् । अव्ययीभाव: समासान्त: अन् । प्रत्यक्षम् अस्ति अस्य इति प्रत्यक्ष: । अर्शआदित्वादच् । अप्रत्यक्ष: प्रत्यक्ष: कृत: इति प्रत्यक्षीकृत: । अभूततद्भावे च्वि प्रत्यय: । अस्य च्वौ इति अवर्णस्य ईत्वम् ।

लव: । समाम्नाय: परम्पराक्रमेण प्राप्त नामादि: संग्रहशास्त्रमित्यर्थ: । पशूनां समाम्नाय: इति पशुसमाम्नाय: पशुनामसंग्रहशास्त्रम् । सांग्रामिके युद्धविषयके समाम्नाये संग्रहशास्त्रे च अश्व इति शब्द: पठ्यते । कीदृशोऽयं पशु: तद्दर्श्यताम् । संग्राम + ठक् = सांग्रामिक । सम् + आङ् + म्ना + घञ् = समाम्नाय । म्ना—मनति ; मम्नौ अम्नासीत् ।

बटव: । पश्चादिति । पश्चात् विपुलं पुच्छं वहति, तच्च अजस्रम् धूनोति । स दीर्घग्रीव: भवति । तस्य चत्वार एव खुरा: शष्पाणि अत्ति, आम्रमात्रान् शकृत्-पिण्डकान् प्रकिरति, आख्यातै: किंवा स पुन: दूरं व्रजति, एहि एहि याम: ॥२७॥

पश्चात् पश्चाद्भागे इत्यर्थ: विपुलं बृहत्पुच्छं लाङ्गूलं वहति धारयति, पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधि: इत्यमर: । तच्च अजस्रं निरन्तरं धूनोति कम्पयति । स: अश्व: दीर्घा ग्रीवा कण्ठ: यस्य स दीर्घग्रीव: आयतशिरोधि: भवति ; तस्य अश्वस्य चत्वार: खुरा: शफा:, स शष्पाणि कोमलतृणानि अत्ति खादति, आम्रं चूतफलं मात्रा

परिमाणमेषामिति मात्रमात्रा: तान् शकृत्पिण्डकान् पुरीषपिण्डान् प्रकिरति विसृजति। आख्यातैः वर्णनैः किंवा सः अश्वः दूरं व्रजति गच्छति एहि एहि आगच्छागच्छ ; सम्भ्रमेद्विरुक्तिः याम: वय गच्छाम: तं प्रत्यक्षीकर्त्तुमित्यर्थ:। उच्चारावस्करौ शमलं शकृत् इत्यमर:। नञ् + जस् + र = अजस्र। शकृत: शमलस्य पिण्डका: इति शकृत्पिण्डका: तान्। प्र + कॄ + लट् ति = प्रकिरति। आङ् + चक्ष + क्त (भावे) = आख्यात। आख्यातैरिति गम्यमानसाधनक्रियानुरोधात् करणे तृतीया।

[ अजिने मृगचर्म्मणि हस्तयो: करयोश्च आकर्षति लवमिति शेष: अजिने हस्तयो. इत्यत्र अवच्छेदे सप्तमी ]।

लव:। [ कौतुकेन अश्वदर्शनौत्सुक्येन, उपरोधेन सहचरगणकृताकर्षणजन्यनिजेच्छाव्याघातेन, विनयेन प्रश्रयेण च सह वर्त्तमानं यथा तथा ]।

अरुन्धती। अतिजवेन वेगेन दूरं विप्रकृष्टमध्वानं गत: चपल: चञ्चलगति: स कुमार: कथं द्रष्टुं शक्यते।

कञ्चुकी। अवसरे योग्ये काले इत्यर्थ:।

वटव:। आश्चर्य्यमनित्ये इति सुट्। चरे राङि चागुरौ इति आङ्पूर्व्वात् चरे: यत् आचर्य्यम्। गुरौतु ण्यत् आचार्य्य:। तत: अनित्ये विस्मयकरे अर्थे सुट् आश्चर्य्यम्।

लव:। अश्वमेध: प्रयोजनमस्य इति आश्वमेधिक: प्रयोजनमिति ठञ्।

लव:। तस्मिन् काण्डे अश्वमेधाध्याये इत्यर्थ: एके एके इति प्रत्येकम् वीप्सार्थे अव्ययीभाव:। शतं संख्या: येषां ते शतसंख्या: कवचं वर्म्म अस्ति येषां ते कवचिन:। दण्ड: यष्टि: अस्ति एषाम् इति दण्डिन: निषङ्ग: तूण: विद्यते एषामिति निषङ्गिण अस्य अश्वस्य रक्षितार: रक्षका:। तेषां प्राय: बाहुल्यं यत्र तत् तत्प्रायम्। इह मम वचसि न प्रत्यय: विश्वास:।

वटव:। किं प्रयोजनं यस्य स किम्प्रयोजन: किमर्थ: अयमश्व: परिवृत: रक्षिभि: परिवेष्टित: पर्य्यटति भ्रमति।

लव:। विश्वं जगत् विजयन्ते प्रभावेण न्यक्कुर्व्वन्ति ये ते विश्वविजयिन: तेषां क्षत्रियाणां राजन्यानां सर्व्वान् अन्यान् क्षत्रियान् परिभवितुं अत्येतुं तिरस्कर्त्तुमिति यावत् शीलं यस्य स सर्व्वक्षत्रियपरिभावी, सकलराजन्यातिशायी ऊर्जस्वल: प्रभावी बलवान् इति यावत् महान् उत्कर्षस्य अतिशयस्य निष्कर्ष: पराकाष्ठा। ये क्षत्रिया अश्वमेधमनुतिष्ठन्ति तेषां प्रभाव: इतरक्षत्रियपरिभावी सर्व्वातिशायी परां कोटिमधिश्रयति इत्यर्थ:।

ऊर्ज्जस् + वलच् = ऊर्ज्जस्वल। ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्ज्जस्वलगोमिन्मलिनमलीमसा:। एतेमत्वर्थे निपात्यन्ते। उत् + कृष् + घञ् = उत्कर्ष। निस् + कृष् + घञ् = निष्कर्ष।

अयमिति। सप्तलोकैकवीरस्य दशकण्ठकुलद्विष: अयमश्व: इयं पताका अथवा वीरघोषणा ॥ २८ ॥

सप्तसु भूरादिषु लोकेषु भुवनेषु एक: अद्वितीय: वीर इति सप्तलोकैकवीर: तस्य दश कण्ठा: यस्य स दशकण्ठ: तस्य कुलं वंश: इति दशकण्ठकुलं तत् द्वेष्टि निहन्ति य: स दशकण्ठकुलद्विट् तस्य दशाननवंशोन्मूलयितु: रामस्य अयम् अश्व: आश्वमेधिको वाजी, इयं पताका सर्व्वलोकविजयख्यापिका वैजयन्ती, अथवा वीरघोषणा वीरशब्दस्य प्रख्यापनम्। सप्तसु भुवनेषु स एव अद्वितीय: वीर: इति ख्यापयितुमयमश्व: प्रचरति इत्यर्थ:। घुष् + ( णिच् ) + युच् ( भावे ) = घोषणा।

सप्तसु लोकेषु एक: वीर: इति तद्धितार्थेत्यादिना उत्तरपदद्विगु: इति प्राञ्च:। त्रिपदतत्पुरुषस्य इह अनिष्टत्वात् सप्तावयवा: लोका: इति शाकपार्थिवादित्वात् समास: तेषु एक: वीर: इति विग्रह: इति नव्या:। यद्वा सप्त च ते लोकाश्च इति सप्तलोका: दिक्संख्ये संज्ञायामिति समास:। संज्ञाशब्दोऽयं सप्तलोकशब्द:। भू: भुव: स्व: जन: मह: तप: सत्यम् इति सप्तलोका:।

लव:। [ व्यथया वेदनया सह वर्त्तते इति सव्यथम् सपीड़मिव ] सन्दीपनानि कोपसञ्जननानि अक्षराणि वर्णानि वाक्यानि इत्यर्थ:।

लव:। अक्षत्रिया क्षत्रियशून्या पृथ्वी उर्व्वी। किं निर्व्वीरमुर्व्वीतलम्। उद्धतम् साटोपं सगर्व्वम् उद्घोष्यते प्रख्याप्यते। उत् + घुष् ( णिच् ) लट् ते ( कर्म्मणि ) = उद्घोष्यते।

लव:। जाल्मान् मूढ़ान् असमीक्ष्यकारिण: धिक्। निहीनोऽपसदो जाल्म: क्षुल्लकश्चेतरश्च स इत्यमर:। जाल्मोऽसमीक्ष्यकारी स्यादिति चामर:।

यदीति। यदि ते सन्ति सन्तु एव का इयम् अन्या विभीषिका उक्तै: किम् सन्निपत्य एव व: पताकाम अहं हरामि ॥ २९ ॥

यदि ते भुवनविजयिन: महाराजरामचन्द्रप्रमुखा: सन्ति, सन्तु एव तिष्ठन्तु तावत् ते। का इयम् अन्या विभीषिका। आसतां तावत् ते महावीरा: तेषां नामोल्लेखपूर्व्वकं किमर्थं इदम् भयप्रदर्शनं क्रियते। अथवा उक्तै: अलविषये वागाडम्बरै: किम्। अहम् सन्निपत्य वेगेन धावित्वा वो युष्माकम् इमां पताकां वैजयन्तीं हरामि बलाद् गृह्णामि। शक्ताश्चेत् प्रतीकारं कुरुत।

वि + भी + णिच् ( भावे ) + ण्वुच् = विभीषिका। पर्य्यायार्हर्णोत्पत्तिषु ण्वुच् अत्रउत्पत्तौ ण्वुच्। लोष्टै: मृत्पिण्डै: उपलखण्डैर्वा अभिघ्नन्त: ताड़यन्त: एनम् अश्वं नयत आश्रमाभिमुखं चालयत। अयं वराक: कृपण: रोहितानां हरिणानां मध्ये चरतु। आश्रमस्थ: मृग इव शष्पाण्यत्तु।

पुरुष:। चापलं चाञ्चल्यम् औद्धत्यमिति यावत्। चपलस्य कर्म्म इति चापलम्

चपल + अण्। तीक्ष्णाः उग्राः चण्डा इति यावत् नीरसाः निःस्नेहाश्च इति तीक्ष्ण-नीरसाः। नास्ति रसः स्नेहः दया वा यासां ताः नीरसाः। आयुध्यते अनेन इति आयुधम्। घञर्थे कः। आङ् + युध + क = आयुध। आयुध + छ = आयुधीय। आयुधीयानां शस्त्रधारिणां श्रेणयः इति आयुधीयश्रेणयः सैनिकसंघा इत्यर्थः। इमां साहंकाराम वाचं न सहन्ते न क्षमन्ते। अरीणां शत्रूणां विमर्द्दनः उन्मूलयिता। मर्द्दयतेः कर्त्तरि ल्युः। सौम्यं सुन्दरं पूर्व्वारण्यं पूर्व्वदिक्स्थम् अरण्यं वनं तस्य दर्शने यत् कौतूहलम् औत्सुक्यं तेन आक्षिप्तम् आकृष्टम् हृदय यस्य स सौम्यपूर्व्वारण्यदर्शन-कौतुहलाक्षिप्तहृदयः। तरुगहनेन वृक्षविपिनेन। तरूणां गहनं विपिनमित्यर्थः समुदायसमुदायिनोर्भेदविवक्षया एवं प्रयुक्तम्। त्वरितं शीघ्रम्। त्वर + क्त = त्वरित, पक्षे तूर्णं। अप + सृप् + लोट त = अपसर्पत पलायध्वम्।

वटवः। कृतमिति निषेधे अव्ययम् अश्वेन कृतमलम् अश्वसाध्यं किञ्चित् फलं नास्ति गम्यमानक्रियापेक्षया करणत्वात् तृतीया। तर्ज्जयन्ति भर्त्सयन्ति भीषयन्ते इत्यर्थः विस्फुरितं विलसत् शस्त्रं यासां ताः विस्फुरितशस्त्राः आयुधीयश्रेणयः सैनिकव्यूहाः। हरिणानां प्लुतानि गतयः उल्लम्फनानि इत्यर्थः तैः अपयामः। चक्षिङ इति ङित्करणम् अनुदात्तेत्त्वस्य आत्मनेपदनियामकत्वे अनित्यत्वं ज्ञापयति अतएव तर्ज्जयन्तीति परस्मैपदं प्रयुक्तम्। शस् + ष्ट्रन् = शस्त्र।

लवः। [ धनुः कार्म्मुकम् आरोपयन् सज्यं कुर्व्वन् ]

ज्याजिह्वयेति। ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्रम् उद्गारिघोरघनघर्घर-घोषम् एतत् चापम् ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बिविकटोदरम् अस्तु ॥३०॥

ज्या मौर्व्वी जिह्वा रसना इव इति ज्याजिह्वा तया वलयिते वलयाकारं गमिते उत्कटे उग्रे कोटी अग्रे अटन्यौ इत्यर्थः दंष्ट्रे विपुलौ दन्तौ इव यस्य तत् वलयितोत्कट-कोटिदंष्ट्रम् भक्षणलोलुपस्य कृतान्तस्य दीर्घा जिह्वा लौल्यात् द्रुतमनियतञ्च सृक्कणी उभयप्रान्तस्थितौ विपुलौ दृढौ च दन्तौ स्पृशति इति उपमायाः अर्थः तथोक्तम उद्गारी उद्गच्छन् घोरः भीषणः घनस्य मेघस्य इव घर्घरघोषः शब्दः यस्य तत् उद्गारिघोरघनघर्घरघोषम्, यद्वा घोरं भीषणं घनस्येव घर्घरघोषं घर्घरध्वनिं उद्गिरति उच्चारयति इति उद्गारि उच्चारयत्। प्रसिद्धस्योपसर्गेऽपि णिनिः इति णिनिः। एतत् इदं मम चापम् धनुः ग्रासे विश्वस्य कवलीकरणे प्रसक्तम व्यापारवत्, हसत् आह्लादेन अट्टहास्यं कुर्व्वत् यद् अन्तकस्य यमस्य वक्त्रम् आननं तदेव यन्त्रं तस्य जृम्भां व्यादानं विडम्बयितुं अनुकर्त्तुं शीलं यस्य तत् ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बि तथोक्तम् विकटम् भीषणम् उदरम् अभ्यन्तरं यस्य तत् ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-जृम्भाविडम्बिविकटोदरम् विश्वग्रासनिरताट्टहास्यमुखरितव्यात्तकृतान्तवदनविवरानु-कारिमध्यम् अस्तु भवतु। अमयैव एतत् सैन्यमखिलं लीलया अपेन व्यापादयिष्यते

इति उपमायाः अर्थः। अलङ्कारेण वस्तुध्वनिः। उपमालङ्कारः। अनुप्रासः शब्दालङ्कारश्च। वसन्ततिलकं वृत्तम्।

वलयं करोति इति वलययति। तत् करोति तदाचष्टे इति णिच्। ततः कर्म्मणि क्तः। दन्श् + ष्ट्रन् = दंष्ट्रा (स्त्रियाम्)। उद् + गृ + णिनि = उद्गारिन्। ग्रस् + घञ् = ग्रास। प्र + सन्ज + क्त = प्रसक्त। अन्तयति इति अन्तकः। अन्तयतेः ण्वुल्। उच्यते अनेन इति वक्त्रम्। वच् + ष्ट्रन् = वक्त्र। यम् + ष्ट्रन् = यन्त्र। जृम्भ + अ (भावे) = जृम्भा। गुरोश्चहलः इति अप्रत्ययः। जृम्भते; जजृम्भे; अजृम्भिष्ट। जृम्भितं। ग्रस्, ग्रसते; जग्रसे; अग्रसिष्ट। ग्रस्तः। जिनाति अभिभवति अनया इति ज्या। अन्येभ्योऽपिदृश्यते इति क्विप्। ज्या—जिनाति; जज्यौ अज्यासीत्। जीनः।

इति चतुर्थोऽङ्कः समाप्तः।

ব্রাহ্মণকুমারগণ। [ সম্ভ্রান্তভাবে প্রবেশ করিয়া ] কুমার, শুনা যায় যে গ্রামে একরূপ প্রাণী আছে, যাহার নাম অশ্ব। আমরা সেই অশ্ব এখন দেখিলাম।

লব। পশুর শ্রেণীবিভাগশাস্ত্রে, এবং যুদ্ধবিষয়ক আখ্যানাদিতে অশ্বের বিষয় পড়িয়াছি। তোমরা বল ত অশ্ব কিরূপ।

ব্রাহ্মণকুমারগণ। শোন, —

অশ্বের পশ্চাদ্‌ভাগে এক বৃহৎ লেজ আছে, অশ্ব উহা নিরন্তর উৎক্ষিপ্ত করিয়া থাকে। অশ্বের গ্রীবা দীর্ঘ, উহার চারখানা খুর আছে। অশ্ব কোমল তৃণ ভক্ষণ করে, এবং আম্রপরিমাণ মলপিণ্ড ত্যাগ করে। অথবা আর বর্ণনা করিয়া প্রয়োজন কি? উহা অনেক দূরে চলিয়া গেল, এস, এস, আমরা যাই ॥ ২৭ ॥

[সমীপে গমন করিয়া কুমারের পরিধেয় চর্ম্ম ও হস্ত ধরিয়া আকর্ষণ করিতে লাগিল]

লব। [ কৌতুক, অনুরোধ, ও বিনয় সহকারে ] মহাশয়গণ, দেখুন, দেখুন, ইহারা আমাকে টানিয়া লইয়া যাইতেছে।

[ ত্বরিত গমন করিল ]

অরুন্ধতী ও জনক। বৎস কৌতূহল চরিতার্থ করুক।

কৌশল্যা। ভগবতি, আমার বোধ হইতেছে যেন ইহাকে না দেখিলে জীবণ ধারণ করিতে পারিব না এইজন্য একটু সরিয়া গিয়া দীর্ঘায়ুঃ বৎসকে চলিয়া যাইবার সময়ও দেখি।

অরুন্ধতী। ঐ চপল বালক অতিবেগে অনেকদূর চলিয়া গিয়াছে। উহাকে দেখিবে কিরূপে?

কঞ্চুকী। [ প্রবেশ করিয়া ] ভগবান্ বাল্মীকি বলিলেন যে আপনারা সময়ে ইহা জানিতে পারিবেন।

জনক। এ অতি গম্ভীর কোন কিছু হইবে। ভগবতি, অরুন্ধতি, সখি কৌশল্যা, আর্য্যা গৃষ্টি, চলুন আমরা সকলে স্বয়ং গিয়া বাল্মীকির সহিত সাক্ষাৎ করি।

[বৃদ্ধবর্গ নিষ্ক্রান্ত]

বটুগণ। কুমার, সেই অদ্ভুত পদার্থ দেখ।

লব। দেখিলাম, এবং বুঝিলাম যে এটি নিশ্চিতই অশ্বমেধযজ্ঞের ঘোটক।

বটুগণ। কিরূপে জানিলে?

লব। আঃ মূর্খ, তোমরা সেই প্রকরণে ইহা পড়িয়াছ ত। তোমাদের কি মনে হয়না যে অশ্বের রক্ষিবর্গ বর্ম্মধারী, দণ্ডধারী, ও তূণধারী প্রত্যেকেই শতসংখ্যক। এই সৈন্যদলও প্রায়ই সেইরূপ। যদি আমার বাক্যে প্রত্যয় না হয়, তাহা হইলে গিয়া জিজ্ঞাসা কর।

বটুগণ। ওরে, ওরে; এই অশ্বটি কি প্রয়োজন সাধন করিবে, এবং কেনইবা এরূপে বেষ্টিত হইয়া পরিভ্রমণ করিতেছে?

লব। [সস্পৃহভাবে, আত্মগত] অহো অশ্বমেধযজ্ঞ বিশ্ববিজয়ী ক্ষত্রিয়দিগের প্রভাব-ব্যঞ্জক, সর্ব্বক্ষত্রিয়ের পরিভবসূচক মহান্ উৎকর্ষাতিশয়ের আঘোষণা (ভিন্ন আর কিছু নহে)।

[নেপথ্যে]

এই অশ্বটি দশকণ্ঠকুলক্ষয়কারী, সপ্তলোকে অদ্বিতীয় বীর রঘুপতির বিজয় বৈজয়ন্তী অথবা বীরত্বের ঘোষণা ॥ ২৮ ॥

লব। [ব্যথিতের ন্যায়] অহো, এই অক্ষরগুলি ক্রোধোদ্দীপক।

বটুগণ। কি বল, কুমার প্রাজ্ঞ বটে।

লব। ওহে, ওহে, পৃথিবী কি ক্ষত্রিয়হীন হইয়াছে, যে তোমরা এইরূপ উদ্ধতভাবে ঘোষণা করিতেছ?

[নেপথ্যে]

অরে, মহারাজের প্রতিপক্ষ ক্ষত্রিয় কোথায়?

লব। ধিক্ মূর্খেরা।

যদি তাহারা থাকে থাকুক, এ কি ভয় দেখাইতেছ? অথবা বাক্যব্যয়ে প্রয়োজন নাই; আমি বেগে ধাবিত হইয়া এই তোমাদের পতাকা হরণ করিলাম ॥ ২৯ ॥

ওহে ব্রাহ্মণকুমারগণ, তোমরা এই অশ্বকে বেষ্টন করিয়া লোষ্ট্র দ্বারা আঘাত করিতে করিতে ইহাকে লইয়া চল, এই বরাক হরিণগুলির মধ্যে বিচরণ করুক।

ক্রুদ্ধ ও দৃপ্ত একজন পুরুষ। [প্রবেশ করিয়া] ছি ছি, কি চপলতা। কি বলিলে? আয়ুধধারী সৈনিকশ্রেণী অতি উগ্রপ্রকৃতি ও নির্দ্দয়, তাহারা শিশুবও উদ্ধতবাক্য সহ্য করে না। সুন্দরপূর্ব্বারণ্য দর্শনে কুতূহলাক্রান্ত হৃদয়, অরিবিমর্দ্দন রাজপুত্র চন্দ্রকেতুর আসিবার পূর্ব্বেই এই তরুগুল্মাকীর্ণ অরণ্যপথে পলায়ন কর।

বটুগণ। কুমার, অশ্ব লইয়া কাজ নাই। আয়ুধীয়শ্রেণী অস্ত্র শস্ত্র বিস্ফুরিত করিয়া কুমারকে তর্জ্জন করিতেছে। আশ্রমও এখান হইতে অনেক দূরে। এস আমরা হরিণের ন্যায় উল্লম্ফন করিয়া পলায়ন করি।

লব। [ঈষদ্ধাস্য করিয়া] কি! অস্ত্র বিস্ফুরিত করিতেছে।

[ধনুকে গুণ দিয়া ]

যাহার উৎকটদংষ্ট্রাতুল্য প্রান্তদ্বয়, ওষ্ঠপ্রান্তাবলেহনে নিরত লোলজিহ্বাসদৃশ মৌর্ব্বী-দ্বারা দৃঢ় বদ্ধ ও বলয়িত, এবং যাহা হইতে মেঘধ্বনি সদৃশ ঘোর ঘর্ঘরনাদ সমুত্থিত হইতেছে, সেই এই মণ্ডলীকৃত শরাসন বিশ্বগ্রাসোদ্যত অট্টহাস্যমুখরিত কৃতান্তের মুখবিবর ব্যাদানের অনুকরণ করুক ॥ ৩০ ॥

[ যথোচিতভাবে পরিক্রমণ করিতে করিতে সকলে নিষ্ক্রান্ত ]

কৌশল্যাজনকযোগ নামক চতুর্থ অঙ্ক সমাপ্ত ।—

*A number of boys.*—Young friend, it is heard that there is a kind of animal in the country which is called horse ; we have now seen it with our own eyes.

*Lava.*—We have read of the horse in books on zoology and warfare. Tell me what it looks like.

*The boys.*—Listen,

It has a long tail behind, which it waves constantly. It is long-necked, and has got four hoofs. It eats soft and fresh grass, and throws out balls of dung of the size of a mango. What is the use of describing it ? It is going far and far away. Come, come, let us go. (27).

[*They approach and pull him by his vest of skin and hands*].

*Lava.*—[*With curiosity and modesty, under restraint.*] Honoured sirs, behold, behold, I am being dragged away by them. [*Runs in a hurry.*]

*Arundhati and Janaka.*—Let the dear boy satisfy his curiosity.

*Kausalya.*—Venerable lady, I feel I shall not live if I do not see him. Therefore let us go to some other place and see him as he, of long life, passes away.

*Arundhati.*—The nimble boy with great speed has gone far away. How could he be seen ?

*Chamberlain.*—[*Entering.*] The revered Valmiki says ;—"You will know it all when the time comes."

*Janaka.*—It must be a very profound and mysterious thing. Venerable Arundhati, dear friend Kausalya, noble Gristi, let all go personally to see the venerable Prachetas.

[ *Exeunt the elderly people.* ]

*Boys.*—Let the prince see that wonderful object.

*Lava.*—I have seen it and known that it is surely a sacrificial horse.

*Boys.*—How do you know it ?

*Lava.*—You fools, you must have read it in that chapter. Don't you see that the guards are armoured men, club-holders, and quiver-bearers, each class numbering a hundred ? This force appears to consist of almost that number. If you have no faith in my words, go and ask them.

*Boys.*—Ye men, why does this horse rove about, being surrounded (by guards) ?

*Lava.*—[*Wistfully, to himself*] Oh, a horse-sacrifice is the mightiest height of greatness of the world-conquering Kshatriyas, which casts all other Kshatriyas into the shade.

[ *Behind the Scenes.*]

It is a horse, a banner, or rather the proclamation of the heroism of the one matchless hero in the seven worlds,—the extirpator of the race of the ten-headed monster Ravana. (28).

*Lava.*—[*With a pang as it were.*] Oh ! These words are provoking.

*Boys.*—What say you ? The Prince is, indeed, well-informed.

*Lava.*—Ho ! Is the warrior caste extinct in the world that you proclaim these words so haughtily ?

[*Behind the Scenes* ]

Sirrah ! Whence could there be Kshatriyas in comparison to (our) great King ?

*Lava.*—Fie on you, stupid fellows !

If there are such persons, let there be, why this threatening ? Or what is the use of talking ? Here I rush upon your banner and carry it off. (29).

O Ye boys, having surrounded the horse, pelt him with stones and lead him on. Let this poor animal graze among the deer.

[*Enter a haughty and angry person.*]

*The person.*—Out upon this rashness ! What is it that you have said ? This line of armed men are hard-hearted and merciless ;

they do not tolerate an arrogant word even from a child. No sooner Prince Chandraketu, the destroyer of his foes, whose heart has been engrossed by a curiosity to behold the beautiful eastern forests, comes, than you quickly fly away through this thicket of trees.

*Boys*—Prince, let the horse alone. The line of armed men with flashing arms threatens you. The hermitage is at a great distance from this place. Let us then fly away, bounding like the deer.

*Lava*.—[ *Smiling*.] What? The weapons are flashing. [ *Strings his brow*.]

Let this bow, with sharp fangs in the shape of its points encircled by means of the tongue-like string, and emitting a terrible rumbling sound like the roaring of clouds, imitate by means of its frightful inside the gaping of the machine-like mouth of the god of death about to devour the world and sending forth a din of laughter in glee. (30).

[*Walking about in a suitable manner, exeunt omnes.*]

*End of the Fourth Act—called the meeting of Kausalya and Janaka.*

---

# पञ्चमोऽङ्कः ।

अस्माकं त्वेन निरन्तरं पात्यमानशरौघैर्निर्भिन्नगात्राणाम् प्रतीकारासमर्थानामिति-भावः अवलम्बनमाश्रयः जातम् सम्वृत्तम् । आश्रयः अस्माभिरासादितः इत्यर्थः । जातम् जातम् इति हर्षातिशयद्योतनार्थं द्विर्वचनम् ॥

नन्विति । ननु एष चन्द्रकेतुः वः प्रधनं श्रुत्वा त्वरितसुमन्त्रनुद्यमान व्यावल्गत्-प्रजवनवाजिना रथेन उद्‌घातप्रचलितकोविदारकेतुः उपैति ॥ १ ॥

ननु भोः सैनिकाः एष चन्द्रकेतुः अस्मत्सेनापतिः लक्ष्मणात्मजः वः युष्माकं प्रधनं संगामं श्रुत्वा, आश्रमस्थकुमारकेण सह अश्वरक्षिसैन्यानां युद्धं प्रवृत्तमिति आकर्ण्य, जन्यमायोधनं युद्धं प्रधनं प्रविदारणमित्यमरः । त्वरितेन, त्वरान्वितेन सुमन्त्रेण सारथिप्रवरेण नुद्यमानाः प्रेर्यमाणाः व्यावल्गन्तः प्रधावन्तः प्रजवनाः प्रकृष्टवेगशालिनः वाजिनः अश्वाः यस्य तेन त्वरितसुमन्त्रनुद्यमानव्यावल्गत्प्रजवनवाजिना रथेन स्यन्दनेन करणेन, उद्‌घातेन पाषाणादिप्रतिबन्धेन प्रचलितः कम्पमानः कोविदारकेतुः कोविदार-काष्ठनिर्मितः ध्वजदण्डः यस्य तथाविधः सन् उपैति आगच्छति । प्रचलितकोविदार-केतु इति पाठे प्रचलितः कोविदारकेतुः यस्मिन् कर्म्मणि तद् यथा तथा उपैति इति व्याख्येयम् । प्रहर्षिणी वृत्तम् । त्र्याशाभिर्मनजरगा प्रहर्षिणीयम् ।

कोविदारे चमरिकः कुद्दालो युगपत्रकः इत्यमरः ॥

... ... ... ... प्रचक्षते ।

कोविदारमपि काञ्चनारकं मल्लिकां विचकिलं विचक्षणाः । इति हलायुधः । त्वर + क्त ( कर्त्तरि ) = त्वरित । It is an adjective qualifying सुमन्त्र । Or it may be derived from त्वरा with इतच् । त्वरा जाता अस्य इति त्वरितः त्वरते ; तत्वरे ; अत्वरिष्ट ; तूर्णः, त्वरितः । नुद् + शानच् ( कर्म्मणि ) = नुद्यमान । Urged or driven. वि + आङ् + वल्ग + शतृ = व्यावल्गत् । वल्गतिर्गमने, प्लुतगतौ इति भट्टमल्लः । वल्गति ; ववल्ग ; अवल्गीत् । प्र + जु + युच् (कर्त्तरि) = प्रजवन । जु इति सौत्रोधातुर्गतौवेगेच । जुचङ्क्रम्यदन्द्रम्यसृगृधि-ज्वलशुचलषपतपदः इति युच् । उद् + हन् + घञ् = उद्‌घात । चाय + तु = केतु । चाय पूजा निशामनयोरिति धातोः तुः । चायः की इति की इत्यादेशः ।

धनुःपाणौ यस्य स धनुष्पाणिः व्यधिकरणो बहुव्रीहिः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौभवतः इति सप्तम्यन्तस्य परनिपातः । सुमन्त्रः सारथिर्यस्य स सुमन्त्रसारथिः तेन । अद्भुतेन आश्चर्य्येण, हर्षेण आनन्देन सम्भ्रमेण त्वरया सह वर्त्तते इति

साद्भुतहर्षसम्भ्रमः। एकाकिनः शिशोः लवस्य विक्रमदर्शनेन विस्मयः अलौकिकवीरत्वपरिशोभिनः प्रतिद्वन्दिनः लाभेन हर्षः आश्रितजनानां परित्राणाय त्वरा।

चन्द्रकेतुः। किरतीति। कलितकिञ्चित्कोपरज्यन्मुखश्रीः चञ्चत्पञ्चचूड़ः अयं कोऽपि वीरपोतः समरशिरसि अनवरतनिगुञ्जत्कोटिना कार्म्मुकेण चमूनां उपरि शरतुषारं किरति ॥ २ ॥

कलितेन कृतेन आहृतेनेति यावत् किञ्चित्कोपेन ईषत्कोपेन रज्यन्ती लोहितायमाना मुखश्रीः मुखकान्तिः यस्य स कलितकिञ्चित्कोपरज्यन्मुखश्रीः ईषत्क्रोधोपगमशोणमुखच्छविः, चञ्चन्त्यः निरन्तरवाणमोचवशात् चञ्चलाः प्रेङ्खोलन्त्यः इति यावत् पञ्च चूडाः शिखाः यस्य स चञ्चत्पञ्चचूडः मूर्द्धः कम्पात् चलकाकपक्षकः कोऽपि अत्यद्भुतवीरत्वमण्डितः इत्यर्थः अयं वीरपोतः वीरशिशुः समरशिरसि रणमूर्द्धनि अनवरतं निरन्तरं निगुञ्जन्त्यौ ध्वनन्त्यौ टङ्कारं कुर्व्वन्त्यौ कोटी अग्रभागौ यस्य तेन अनवरतनिगुञ्जत्कोटिना ज्याघृष्टकठिनाटनीकृतकरालटङ्कृतेन कार्मुकेण चापेन चमूनां अस्मद्वाहिनीनां उपरि शरतुषारं वाणवर्षम् किरति विक्षिपति। नवनीरदश्यामोऽयं कुमारः करालचापध्वानापूरितदिङ्मुखः अजस्रवाणधारां पातयन् शक्रचापलाञ्छितस्य प्रचण्डाशनिनिर्घोषमुखरिताशामुखस्य अविश्रान्तवृष्टिधारावर्षिणो नवजलधरस्य शोभां धत्ते इति फलितार्थः। उपमा व्यज्यते। मालिनी वृत्तम्।

चमति भक्षयति नाशयति इत्यर्थः इति चमूः सेना। ध्वजिनीवाहिनी सेना पृतनानीकिनी चमूरित्यमरः। किञ्चित् ईषत् कोपः इति किञ्चित्कोपः। सुप्सुपेति समासः। प्रत्यर्थिभूतायाः सेनायाः तुच्छत्वात् कुमारः अत्यल्पमेव नतु तीव्रं कोपमाहारयत्। रन्ज् + शतृ = रज्यत्। रजति, रजते ; रज्यति, रज्यते। कलयतेः कर्म्मणि क्तः कलितः। कलितः कृतः आहृतः इत्यर्थः। अव + रम् + क्त = अवरत। नि + गुञ्ज + शतृ = निगुञ्जत्। कर्म्मन् + उकञ् = कार्म्मुक। समरस्य शिरः इति समरशिरः तस्मिन् ; चञ्च + शतृ = चञ्चत्। चञ्चति ; चचञ्च ; अचञ्चीत्। शराणां वाणानां तुषारः लक्षणया वर्षणम्। अवश्यायस्तुनीहारस्तुषारस्तुहिनं हिममित्यमरः। तुषारशब्दस्य प्रालेयवर्षणं तुहिनपातः इत्यर्थः तुहिनपृषतानामिव वाणानां नैरन्तर्य्येण पतनमिति लाक्षणिकोऽर्थः। वीरश्चासौ पोतश्चेति वीरपोतः इति कर्म्मधारयः एवश्रेयान्। वीरस्य पोतः इति षष्ठीसमासे शिशोर्वीरत्वरूपोऽर्थः न प्रस्फुटः। पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुरित्यमरः। कॄ + लट् ति = किरति।

**मुनिजनेति। नवः अप्रसिद्धः रघुवंशस्य प्ररोहः इव मुनिजनशिशुः एकः सर्व्वतः सैन्यकाये दलितकरिकपोलग्रन्थिटङ्कारघोरज्वलितशरसहस्रः मे कौतुकं करोति ॥ ३॥**

नव: नूतन: अप्रसिद्ध: लोके अविश्रुत: रघुवंशस्य प्ररोह: अङ्कुर: इव मुनिजनशिशु: ऋषिदारक: अयं एक: एकाकी असहाय: इत्यर्थ: सर्व्वत: सर्व्वस्मिन्, समभ्यासक्ति: सैन्यकाये सैन्यव्यूहे, समये योधनिवहे, दलितानां निर्मथितानां करिकपोलानां हस्तिगण्डानां ग्रन्थीनां सन्धीनां टङ्कारेण भीषणशब्देन घोरं भयानकं यथा तथा ज्वलितानि प्रदीपितानि प्रयुक्तानीत्यर्थ: शराणां सहस्राणि येन यस्य वा स दलितकरिकपोलग्रन्थिटङ्कारघोरज्वलितशरसहस्र: निशितबाणश्रेणीवर्षणेन मत्तवारणानां गण्डग्रन्थीन् विपाटयन् सर्व्वांश्च योधान् व्यथयन् तेन च कर्म्मणा तुमुलमार्त्तनादं समुत्थापयन् (अयं) मे मम कौतुकं कुतूहलं करोति वर्द्धयति। अस्य सर्व्वातिशायि शौर्य्यं दृष्ट्वा विस्मयेन परवानस्मि इत्यर्थ:। मालिनीवृत्तम्।

सैन्यानां काय: समूह: इति सैन्यकाय:। निवासचितिशरीरोपसमाधानेषु आदेश्च क: इति चिधातो: घञ् आदेश्च क:। चि + घञ् = काय।

प्र + रुह् + अच = प्ररोह। दल + (णिच) + क्त (कर्म्मणि) = दलित। दल् + णिच् = दलयति। टम + क्त + घञ् = टङ्कार। It is an onomatopaeic word. ज्वल + (णिच्) + क्त = ज्वलित। ज्वल + णिच = ज्वलयति, ज्वालयति। इनेन पत्या सह वर्त्तमाना इति सेना तत्र समवेता: सैन्या:। सेनाया: वा इति ण्य प्रत्यय: पक्षे ठक सैनिका:। आश्चर्य्यमनित्ये इति सुट्।

सुमन्त्र:। अतिशयितेति। अतिशयितसुरासुरप्रभावं तव एव तुल्यरूपं शिशुम् अवलोक्य कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

सुराश्च असुराश्च इति सुरासुरा: देवासुराणां विरोधस्य औपाधिकत्वेन, अशाश्वतिकत्वात् येषाञ्चविरोध: शाश्वतिक इति सूत्रस्यानवकाशात् न समाहारद्वन्द्व:। तेषां प्रभाव:, अतिशयित: अतिवर्त्तित: सुरासुरप्रभाव: येन स: अतिशयितसुरासुरप्रभाव: तम् देवासुरातिशायिपराक्रमं तवैव तुल्यरूपम् तुल्यशरीरं भूयिष्ठानुवृत्तरघवंशच्छायमित्यर्थ: इमं शिशुं बालकम् अवलोक्य दृष्ट्वा कुशिकसुतस्य कौशिकस्य विश्वामित्रस्य मखं यज्ञं द्विष्टवन्त: ये तेषां कुशिकसुतमखद्विषां विश्वामित्रयज्ञद्रुहां मारीचादीनां राक्षसानां प्रमाथे दलने धृतं धनुर्येन तम् धृतधनुषम् धनुष्पाणिं रघुनन्दनं रामं स्मरामि। देहकान्त्या, प्रभावेण चायं सर्व्वथा रामतुल्य: इतिभाव:। सदृशवस्तुस्मरणात् स्मरणालङ्कार:। पुष्पिताग्रावृत्तम्।

तुल्यं रूपं आकृतिरित्यर्थ: यस्य स तुल्यरूप:। तम्। कुशिकसुतमख + द्विष् + क्विप् = कुशिकसुतमखद्विष्। सत्सूद्विषेत्यादिना क्विप्। द्वेष्टि; द्विषेत; अद्विषत्। द्विष्ट:।

मथ (मथे) विलोडने इति भौवादिकात् धातो: घञ् माथ:। मनो मथति मारीणाम् इति कविरहस्यम्। The root मन्थ of the क्र्यादि class or the

भ्वादि class yields the form मन्थ: with the affix घञ्। मथ्नाति ; मन्थति ; ममन्थ ; अमन्थीत्। मथित:। But there is another root which is read as मथि ; its past participle form is मन्थित:।

अति + शी + क्त (कर्म्मणि) = अतिशयित। With the preposition अति the intransitive verb शी has become transitive and admits of क्त in the passive voice. धृतं धनुर्येन स धृतधन्वा तम् धृतधन्वानम्। Bhavabhuti has set at naught the rule धनुषश्च which provides that in a बहुव्रीहि compound the word धनुष् standing as the last member of the compound admits of the समासान्त augment अनङ्। A defence of the poet may be proposed that these समासान्त augments are not obligatory ; hence there is no अनङ् here. समासान्तविधेरनित्यत्वात् न अनङ्।

*N. B.* Sumantra was not present in the battlefield when Rama drove away Marich and others from the sacred grove of Viswamitra. Hence it is not psychologically true for Sumantra to say that he recalls the picture of young Ramchandra fighting against the demons. Sumantra drew a picture of young Rama with bow in hand in his own mind and compares that picture with what he sees before him.

चन्द्र। भूयसां बहूनामस्मत्पक्षीयाणां योधानां आरम्भ: समरोद्यम: इति हेतो: मे मम हृदयं चित्तमपत्रपते लज्जते जिह्रेति इति यावत्। अधर्म्योऽयं संग्राम: इति लज्जितोऽस्मि। त्रप् त्रपते ; त्रेपे ; अत्रपिष्ट, अत्रप्त। त्रप्त:।

अयमिति। समरभारभूरिस्फुरत्करालकरकन्दलीकलितशस्त्रजालै: क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै: अमन्दमददुर्द्दिनद्विरदवारिदै: बलै: अयम् एकक: शिशु: आवृत: हि ॥ ५ ॥

समरस्य संग्रामस्य भारे अतिशये तुमुलरणकर्म्मणि इत्यर्थ: भूरि प्रभूतं यथा स्यात् तथा स्फुरन्ति दीप्यमानानि करालानि भीषणानि करकन्दलीभि: कलितानि धृतानि शस्त्रजालानि आयुधजालानि येषां तै: समरभारभूरिस्फुरत्करालकरकन्दलीकलितशस्त्रजालै:, क्वणन्त्य: शब्दायमाना: या: कनककिङ्किण्य: हेममयक्षुद्रघण्टिका: किङ्किणी क्षुद्रघण्टिका इत्यमर: ताभि: झणझणायिता: झणझण इति शब्दं कुर्व्वन्त: स्यन्दना: रथा: येषां तै: क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै: अमन्दानां प्रभूतानां मदानां दानवारीणां दुर्द्दिनं सन्ततया वर्षणं येषां येभ्य: वा तथोक्ता: अमन्ददुर्द्दिना:

प्रभूतमदवारिस्रावित्वः इत्यर्थः द्विरदाः गजाः वारिदाः मेघाः इव येषां ते; अमन्दमद-दुर्द्दिनद्विरदवारिदैः बलैः सैन्यैः अयम् एकक: एकाकी शिशुः बालकः आवृतः उपरुद्धः वेष्टितः इत्यर्थः। मुहुरचिरप्रभादामस्फुरणदीप्तानाम् अविरलमुद्गच्छद्घोराशनि-निर्घोषापूरितभुवनविवराणां वृष्टिधारावर्षिणां पुञ्जीभूततमःसन्ततिसच्छायानां महाप्रलयमेघानामिव अस्मद्बलानां कोऽयमारम्भो मुनिशिशोरेकस्य निर्दमनाय। नैतदुचितमिति भावः। उपमालङ्कारः। पृथ्वी वृत्तम्। जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः इति लक्षणम्।

कराणां कन्दलीभिः प्ररोहैः शाखाभिः अङ्गुलीभिरित्यर्थः कलितानि धृतानि इति व्याख्यानं कुत्रचिद्दृश्यते तन्न हृद्यं कन्दलीशब्दस्य प्ररोहार्थे प्रयोगोऽमृग्यः। कन्दलं त्रिषु कपोलेऽप्युपरागे नवाङ्कुरे। कलध्वनौ कन्दली तु मृगगुल्मप्रभेदयोः इति मेदिनीवचनेन प्ररोहार्थे स्त्रियां कन्दला इति रूपम् नतु कन्दली। कराः कन्दल्यः इव इति करकन्दल्यः ताभिः करकन्दलीभिः गन्धसदृशैः करैः इत्यर्थः। कनकस्य किङ्किण्यः इति कनककिङ्किण्यः। शसति छिनत्ति एभिः इति शस्त्राणि आयुधानि। शस्+ष्ट्रन्। शस्त्राणां जालानि इति शस्त्रजालानि। जालं समूह आनाय गवाक्ष-क्षारकेष्वपि इत्यमरः। स्यन्दते इति स्यन्दनाः रथाः। स्यन्द+युच् (कर्त्तरि)= स्यन्दन। चलनशब्दार्थादकर्म्मकाद्युच् इति युच्। झणझणायते। अव्यक्तानु-करणाद्द्व्यजवरार्द्धादनितौ डाच्। डाचि विवक्षिते द्वे बहुलम् इति झण इत्यव्यक्त-शब्दस्य अनुकृतौ डाचि द्वित्वे च झणझणा इति रूपसिद्धिः ततः लोहितादिडाज्भ्यः क्यष् इति क्यष् ततः वा क्यषः इति पाक्षिकात्मनेपदे प्राप्ते झणझणायते इति क्रियापदम्। झणझणायति इत्यपि स्यात्। ततः कर्त्तरि क्तः झणझणायितः। एकशब्दादनुकम्पायांकन् एककः। मेघाच्छन्नेऽह्नि दुर्द्दिनम् इत्यमरः। ततः लक्षणया दुर्द्दिनशब्दस्य वर्षणमित्यर्थः। अमन्देन प्रभूतेन मदेन दानधाराक्षरणेन दुर्द्दिनानि मेघाच्छन्नानि अहानि इव श्यामाः इत्यर्थः द्विरदाः हस्तिनः इति अमन्दमददुर्द्दिनद्विरदाः। ते वारिदाइव येषां तानि अमन्दमददुर्द्दिनद्विरदवारिदानि इति वा विग्रहः। द्वौ रदौ दन्तौ येषां ते द्विरदाः। वारि ददति ये ते वारिदाः। वारि+दा+क। आतोऽनुपसर्गे इति कः। आङ्+वृ+क्त (कर्म्मणि) = आवृत। क्वण + शतृ = क्वणत्। क्वणति; चक्वाण; अक्वणीत्, अक्वाणीत्।

सुमन्त्रः। समस्तैः मिलितैरपि एभिर्विपुलैः सैनिकैः अस्य किमनिष्टं कर्त्तुं शक्यते; किं पुनर्व्यस्तैः एकैकशः कृतयुद्धोद्यमैः अस्य किमपि कर्त्तुं न शक्यते। एकाकी अयं सर्व्वेषामेव योधानां निधने समर्थः इत्यर्थः। सम्+अस्+क्त (कर्म्मणि)= समस्त। वि+अस्+क्त (कर्म्मणि)=व्यस्त।

चन्द्रकेतुः। त्वर+भावे लोट =त्वर्य्यताम्। प्रार्थनायां लोट्। आश्रिताः

जना: तेषां प्रमाथ: कदनं व्यापादनमिति यावत् इति आश्रितजनप्रमाथ:। ये मां प्रपन्नास्तेषामार्त्तिहरेण मया अवश्यमेव भवितव्यमित्यर्थ:। आङ् + रभ + क्त = आरब्ध।

आगुञ्जदिति। आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरम् अमन्ददुन्दुभिरवै: आध्मातं ज्यानिर्घोषम् उज्जृम्भयन् अयं वीर: वेल्लद्भैरवरुण्डमुण्डनिकरै: भुव: तृप्यत्कालकरालवक्त्रविघसव्याकीर्य्यमाणा: इव विधत्ते ॥ ६ ॥

आगुञ्जन्त: भयवशात् बृंहितं कुर्व्वन्त: गिरिकुञ्जेषु शैलान्तर्व्वर्त्तिलतादिपिहितोदरस्थानेषु ये कुञ्जरा: हस्तिन: तेषां घटा श्रेणी समूह इति यावत् तस्या: विस्तीर्ण: बाहुल्येन समुत्पादित: इत्यर्थ: कर्णज्वर: श्रवणेन्द्रियक्लेश: येन स आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वर: दूरविसारिणी यस्य श्रवणादुद्वेजिता: गिरिगुहावर्त्तिनो नागा: भयेन बृंहन्ति तथोक्त:, अमन्दै: प्रभूतै: दुन्दुभीनां वाद्यभेदानां रवै: शब्दै: आध्मातं उपचयं नीतं द्विगुणीकृतमित्यर्थ: ज्याया: मौर्व्या: शब्द: तम् ज्यानिर्घोषम् मौर्व्वीनिनादं उज्जृम्भयन् आविर्भावयन् उत्पादयन्नितियावत् अयं वीर: शूर: वेल्लतां विचेष्टमानानां भैरवाणां भीषणानां रुण्डानां कवन्धानां अपमूर्द्धकलेवराणामित्यर्थ: मुण्डनिकरै: शिर:समूहै: भुव: पृथिवीभागान् इत्यर्थ: तृप्यत: प्रचुरभोज्यग्रासेन सुहितस्य कालस्य कृतान्तस्य करालस्य भयङ्करस्य वक्त्रस्य मुखस्य विघसै: भुक्तावशिष्टै: व्याकीर्य्यमाणा: आच्छाद्यमाना इव विधत्ते कुरुते। विश्वग्रसने व्यापृतस्य अतिभोजनेन तृप्तस्य कृतान्तस्य मुखविवराद्गलितै: उच्छिष्टै: अमीभिरस्मद्योधशिरोनिवहैरियं मही समाच्छादितेव भाति। अहो महद् वैशसं कृतमनेन वीरेणेतिभाव: उत्प्रेक्षालङ्कार:। शार्द्दूलविक्रीडितं वृत्तम्।

कर्णयो: ज्वर: इति कर्णज्वर:। वि + स्तृ + क्त = विस्तीर्ण। गुञ्ज + शतृ = गुञ्जत्। गजानां घटना घटा इत्यमर:। निर + घुष् + घञ् = निर्घोष। आङ + ध्मा + क्त (कर्म्मणि) = आध्मात। ध्मा धमति ; दध्मौ ; अध्मासीत्। उद् + जृम्भ (णिच्) + शतृ = उज्जृम्भयत्। वेल्ल + शतृ = वेल्लत्। कवन्ध: कथ्यते रुण्ड: इति हलायुध:। मस्तकार्थे मुण्डशब्द: अस्त्रीलिङ्ग:। नि + कॄ + अच् = निकर (heap) विघसो यज्ञशेषभोजनशेषयोरित्यमर:। वि + अद् + अप् = विघस। घञपोश्च इति अदं: घसादेश:। वि + आङ् + कॄ + शानच् (कर्म्मणि) = व्याकीर्य्यमाण। वच् + ष्ट्रन् = वक्त्र। तृप् + शतृ = तृप्यत्। भीरु + अण = भैरव।

If the last line of the verse be read as तृप्यत्कालकरालवक्त्रविघसैर्व्याकीर्य्यमाणा इव, then the comparison becomes clearer ; and उपमान and उपमेय have the same case ending.

सुमन्त्र:। द्वन्द्वसम्प्रहार: द्वैरथयुद्धम्। A duel. द्वन्द्वस्य उभयोरित्यर्थ: सम्प्रहार: संग्राम: इति द्वन्द्वसम्प्रहार:। अनुजानीयाम् अनुमन्येय। इक्ष्वाकूणां गृहे दृप्ता:

इन्द्वत्वं गता: क्षत्रियाणां युद्धरीतिसमाचारज्ञा: इत्यर्थ:। प्रत्युपस्थिते हे रथयुद्धे समापतिते, अनिवार्य्ये सति कागति: क: उपाय: भवेत्। गत्यन्तरं नास्ति इत्यर्थ:।

चन्द्रकेतु:। [ विस्मयेन लवस्य वीरत्वहेतुकाश्चर्य्येण लज्जया निजसैन्यानां कापुरुषतादर्शनेन त्रपया सम्भ्रमेण तेषां परित्राणार्थं त्वरया च सह वर्त्तते इति सविस्मयलज्जासम्भ्रमम् ] प्रतिनिवृत्तानि पराङ्मुखानि जातानि। सैन्यानि बलानि। वरूथिनी बलं सैन्यम् चक्रंचानीकमस्त्रियाम् इत्यमर:—सैन्य means an army (collective)। सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते इत्यमर:। सैन्य means a soldier (distributive) ; in this sense it is masculine.

सुमन्त्र:। वाचां विषयीभूत: इति वाग्विषयीभूत: अतिसन्निकृष्टतया सम्भाषितुं शक्य:। पूर्व्वं तावत् दूरत्वात वाचां अविषय: इदानीं निकटोपगमात् विषय: सम्पद्यमान: भूत: इति वागविषयीभूत: आवयो र्वाचा संलापानां विषयीभूत: पात्रतां गत: स वीर: अयं पुरतो वर्त्तते इति केचिद् व्याख्यायते।

चन्द्रकेतु:। आख्यायका: दूता: वार्त्ताहरा इति यावत्। तै: अस्य किंनाम कथितम्। आङ् + चक्ष् ( or ख्या ) + ण्वुल् = आख्यायक।

चन्द्रकेतु:। भो इति। भो: भो: महावाहो लव, एभि: सैनिकै: तव किम् , एष: अहम् अस्मीति शेष:, माम् एव एहि तेज: तेजसि शाम्यतु ॥ ७ ॥

हे महावीर लव एभिरस्मदीयै: सैनिकै: योधै: तव किम् प्रयोजनमिति शेष:। एते तव किमपि कर्त्तुं न शक्नुवन्ति। एभि: सह युद्ध न कार्य्यम्। एष: अहं तव योग्य: प्रतिवीर: अहमस्मि मामेव एहि मया सह युध्यस्व, ननु अकिञ्चित्करवीर्य्यैरेभि: सह। तेज: त्वदीयो बलवीर्य्यजन्य: प्रभाव: तेजसि मदीये सत्त्वोत्कर्षजन्यप्रतापे शाम्यतु विलय यातु इति सावष्टम्भोक्ति:।

सुमन्त्र:। व्यपवर्त्तत इति। एष बालवीर: त्वया उपहूत: दृप्तसिंहशाव: स्तनयित्नुरवात् इभावलीनाम् अवमर्द्दात् इव पृतनानिर्मथनात् व्यपवर्त्तते ॥ ८ ॥

एष: अयं बालश्चासौ वीरश्चेति बालवीर: शूर: कुमार: त्वया उपहूत: पूर्व्वोक्तप्रकारेण संग्रामार्थमाहूत: स्पर्द्धित: सन्, दृप्त: वीर्य्योद्धत: सिंहशाव: केशरिकिशोरक: स्तनयित्नो: बलाहकस्य मेघस्येति यावत् रवात् गर्ज्जितमाकर्ण्य, इत्यर्थ: ल्यब्लोपे कर्म्मण्यधिकरणे इति पञ्चमी,इभानां गजानाम् आवलीनां श्रेणीनां अवमर्द्दात् दलनात् संचयात् इव पृतनाया: अस्मत्सेनाया: निर्मथनात् उत्सादनात् व्यपवर्त्तते निवृत्तोभवति। आमन्द्रजीमूतनादं श्रुत्वा हस्तिभ्योऽपि बलवत्तरं कञ्चित् प्राणिनं गर्ज्जन्तं मत्वा सिंहशावो यथा करियूथदलनात् विरम्य मेघाभिमुखमभियाति, तथायं शौर्य्योद्धत: कुमार: त्वत्कृतां सावलेपस्पर्द्धामाकर्ण्य सैनिकानां विध्वंसनाद्विरतस्त्वदभिमुखमायाति इति वाक्यार्थ:

मालभारिणीवृत्तम्। औपच्छन्दसिकमस्य नामान्तरम्। विषमे ससजा यदा गुरुचेत् सभरा येन तु मालभारिणीयम् इति लक्षणम्। उपमालङ्कारः।

निर् + मथ् + ल्युट् = निर्मथन। उप + ह्वे + क्त (कर्मणि) = उपहूत = challenged. स्तनि = इत्नु = स्तनयित्नु। स्तनयित्नोः मेघस्य रवः इति स्तनयित्नुरवः। तस्मात्। अव + मृद् + घञ् = अवमर्द। मृद्—मृद्नाति; ममर्द; अमर्दीत्। मर्दितः। दृप (neuter) + क्त (कर्त्तरि) = दृप्त। वि + अप + वृत् + लट्ते = व्यपवर्त्तते।

[त्वरितः सत्वरः द्रुतः इत्यर्थः उद्धतः दृप्तः क्रमः पादक्षेपः यस्य स त्वरितोद्धतक्रमः]

लव:। इक्ष्वाकोः गोत्रापत्यं पुमान् इति ऐक्ष्वाकः। इक्ष्वाकु + अञ्। दाण्डिनायनेत्यादिना युलोपः निपात्यते।

लवः। भग्नाः निर्जिताः पलायिताश्च इत्यर्थः। युद्धमाहवम् अभिसरन्ति अभियान्ति, तदभिमुखा धावन्ति इत्यर्थः इति युद्धाभिसारिणः पुनरपि युद्धार्थमुद्यताः पर्य्यवष्टभ्य, मम समीपमुपगम्य परिवार्य्य च इत्यर्थः चमूपतयः सेनापतयः मां निघ्नन्ति प्रहरन्ति। जाल्मान् मूढान् धिक्। भन्ज् + क्त (कर्म्मणि) = भग्न। युद्ध + अभि + सृ + णिनि = युद्धाभिसारिन्। परि + अव + स्तम्भ् + ल्यप् = पर्य्यवष्टभ्य। अवाच्चालम्बनाविदूर्य्ययोरितिषत्वम्।

अयमिति। समन्तात् उत्सर्पन् अयं घनतुमुलसेनाकलकलः प्रलयपवनास्फालितः पयोराशेः ओघः इव मे शैलाघातक्षुभितवडवावक्त्रहुतभुक्प्रचण्डक्रोधार्च्चिर्निचयकवलत्वं व्रजतु॥ ९॥

समन्तात् सर्व्वासु दिक्षु उत्सर्पन् उद्गच्छन् उच्चरन्निति यावत् अयं घनः निविडः तुमुलः रणसङ्कुलसमुत्थः भीषणः इत्यर्थः सेनायाः कलकलः अस्फुटसंरावः प्रलयपवनैः युगक्षयमारुतैः आस्फालितः उद्वेलितः आलोडितः इत्यर्थः पयोराशेः अम्बुराशेः समुद्रस्य ओघः पूरः इव मे मम शैलानां समुद्रान्तर्निमग्नानां शिलोच्चयानाम् आघातेन सङ्घर्षेण क्षुभितः सम्मुच्छितः यः वडवावक्त्रहुतभुक्अश्वतरीमुखनिर्गतहुताशनः वाडवानलः इत्यर्थः स इव प्रचण्डः उग्रः भीमः यः क्रोधः कोपः तस्य अर्च्चिषां ज्वालानां निचयस्य समूहस्य कवलत्वं ग्रासत्वं व्रजतु एतु। महाप्रलयमारुतोत्क्षिप्तः सागरपूरः, समुद्रगर्भस्थितानां शैलानां सङ्घर्षणेन सम्भुक्षितवाडवानलस्य विसर्पिणीभिः शिखाभिः यथा क्षणेन विशोषं नीयते, तथा समुच्चरदयं ध्वजिनीकलकलः क्षणेनैव मम कोपेन प्रशमं नेष्यते इत्यर्थः। शिखरिणीवृत्तम्। उपमालङ्कारः।

क्षुभ + क्त (कर्म्मणि) = क्षुभित। The special form क्षुब्ध means a churning staff or a kneading dough (मन्थ)। क्षुब्धं देवैर्देवैः

प्रचितम् आज्यादिकम् भुङ्क्ते इति हुतभुक् वह्निः। हुत + भुज् + क्विप् = हुतभुज
वड़वा is a mule. The mythical account is that when the wrath of Siva after having consumed Cupid was about to destroy the world, Brahma reduced it to the shape of a mule and put it under the water of the ocean, where it still exists and breaks forth to flames which come out of the mouth of the mule This fire consumes the water of the ocean ; and hence it is described as अविस्मन: वह्निः। अर्चिस् means the flame of fire. ज्वालाभासौ नपुंस्यर्चिः इत्यमरः। Here anger is tacitly compared to fire. नि + चि + अच् = निचय। कवल means a mouthful. कवलस्य भावः इति कवलत्वम्। तत् it is in the objective case of व्रजतु। उत् + सृप् + शतृ = उपसर्पत्। पयसां जलानां राशिः इति पयोराशिः समुद्रः। प्र + ली + अच् = प्रलय। प्रलयस्य पवनः इति प्रलयपवनः। आङ् + स्फुर ( स्फुल ) + ( णिच् ) + क्त ( कर्मणि ) = आस्फालित। चिरस्फुरी: खौ इति पाणिकम् आस्वम्।

चन्द्रकेतुः। अत्यद्भुतादिति। अत्यद्भुतात् गुणातिशयात् त्वं मे प्रियः सखा असि, तस्मात् यत् मम तत् तव एव। तत् किं निजे परिजने कदनं करोषि ननु एष चन्द्रकेतुः तव दर्पनिकषः॥ १०॥

अत्यद्भुतात् लोकातिगत्वात् अति विस्मयावहात् गुणानां शौर्योत्साहादीनां अतिशयात् आधिक्यात् अतिरेकादिति यावत् हेतोः त्वं मे प्रियः हृद्यः सखा समप्राणो बन्धुः असि। तस्मात् सखित्वात् यत् मम तत् तव एव। अतः निजे स्वीये परिजने अनुचरवर्गे इह सैन्यसमूहे इत्यर्थः किमर्थं कदनं वैशसं हननमिति यावत् करोषि, एतान् किमर्थं हंसि नैतेतव प्रतिवल्ला। ननु भोः कुमारः एष चन्द्रकेतुः तव दर्पस्य अन्तःसारजन्मनः गर्व्वस्य निकषः निकषोपलः परीचणोपाय. इत्यर्थः। एषोऽहं चन्द्रकेतुस्त्वदर्पशातनोऽस्मि इत्यर्थः। वसन्ततिलक वृत्तम्।

*कदन means slaughter निर्वापणनिवामनकदनव्यापादनानि तुल्यानि इति हलायुधः। कद + ल्युट् = कदन। कदते, चकदे, अकदिष्ट। अद + भू + डुतच् = अद्भुत। अदिति आश्चर्य्ये अव्ययम। अति + शी + अच् = अतिशय। दर्पस्य निकषः इति दर्पनिकषः। नि + कष् + अप् = निकष। कषति ; चकाष, अकषीत्, अकाषीत्॥ कषितः। कृच्छ्रगहनयोः कष्टम्।

लवः। [ हर्षेण सम्भ्रमेण त्वरया च सह परावृत्य चन्द्रकेत्वभिमुखम् आगत्य ] प्रसन्ना प्रसादगुणविशिष्टा खेदमसहा कर्कशा कथा च इति प्रसन्नकर्कशा। विशेषणयोः

कर्म्मधारयनिर्व्वाहः। वीरस्य वचनानि इति वीरवचनानि वीरजनोचितवाक्यानि तेषां प्रयुक्तिः प्रयोगः व्यवहारः इत्यर्थः इति वीरवचनप्रयुक्तिः विकर्त्तनः सूर्य्यः तस्य कुलम् इति विकर्त्तनकुलम् सूर्य्यवंशः तस्य कुमारः इति विकर्त्तनकुलकुमारः तस्य। विकर्त्तनोविवस्वांश्च मार्त्तण्डोभास्करोरविः।

The Sun is called विकर्त्तन, because a portion of it was cut off by Viswakarma to lessen its heat. This mythical story will be referred to later on.

सम्भावयामि सम्मानयामि युद्धेन इत्यर्थः। अनेन सह योत्स्ये इत्यर्थः।

लवः। [ क्रोधेन कोपेन निर्व्वेदेन दैन्येन च सह वर्त्तमानमिति सक्रोधनिर्व्वेदम्। वीरेण सह संवादः समागमः तस्य विघ्नम् अन्तरायं कुर्व्वन्ति ये ते वीरसंवादविघ्न-कारिणः तैः एभिः पामरैः कदर्थितः विडम्बितः विघ्नितः अस्मि। कुत्सितः अर्थः इति कदर्थः। कोः कत्तत्पुरुषे अचि इति कदादेशः। कदर्थं करोति इति कदर्थयति तत् करोति इति णिच् ततः कर्म्मणि क्तः कदर्थितः। संवादः समागमः प्रत्यर्थिभावेन मेलनमित्यर्थः। सम् + वद + घञ् = संवाद। वि + हन् + घञर्थे क = विघ्न।

चन्द्रकेतुः। द्रष्टव्यम् दर्शनयोग्यम्।

दर्पेणेति। कौतुकवता दर्पेण मयि बद्धलक्ष्यः पश्चात् बलैः अनुसृतः उदीर्णधन्वा अयम् द्वेधा समुद्धतमरुत्तरलस्य माघवतचापधरस्य मेघस्य लक्ष्मीम् धत्ते ॥ ११ ॥

कौतुकं औत्सुक्यम् कीदृगस्य वीरत्वमिति परिज्ञानार्थं कौतूहलमित्यर्थः तदस्यास्तीति कौतुकवान् तेन कौतुकवता कौतूहलसहितेन दर्पेण गर्व्वेण हेतुना मयि बद्धं लक्ष्यं येन स बद्धलक्ष्यः मयि निहितदृष्टिः इत्यर्थः पश्चात् पृष्ठतः बलैः सैन्यैः अस्मदीयैः अनुसृतः अनुधावितः अतः पर्य्यायेण तदभिमुखं प्रेरितदृक्, उदीर्णम् ऊर्द्धमुत्तोलितं विस्फारितं धनुः येन स उदीर्णधन्वा मण्डलीकृतशरासनः इत्यर्थः अयं कुमारः द्वेधा समुद्धतेन प्रतिकूलयोर्दिशोः पर्य्यायेण पर्य्याकुलं चलता मरुता वायुना तरलस्य चञ्चलीकृतस्य, मघवतः इन्द्रस्य इदम् इति माघवतं तच्च तत् चापञ्चेति माघवतचापं तस्य धरः तस्य माघवतचापधरस्य शक्रशरासनलाञ्छनस्य मेघस्य लक्ष्मीं शोभां धत्ते धारयति। लवस्य अम्बुदनीलत्वात् मेघसाम्यम्। तत्सदृशीं शोभां धत्ते इति औपम्ये पर्य्यवसानात् निदर्शनालङ्कारः वसन्ततिलकंवृत्तम् ॥ ११ ॥

अनु + सृ + क्त ( कर्म्मणि ) = अनुसृत। उत् + ॠ + क्त ( कर्म्मणि ) = उदीर्ण। ॠ—ऋणाति; ( लङ् ) आर्णात् लिट् अराञ्चकार; लुङ् आरीत्। उदीर्णं धनुर्य्येन स उदीर्णधन्वा धनुषश्च इति अनङादेशः समासान्तः। सम + उद् + हन् + क्त ( कर्म्मणि ) = समुद्धत = made restless ; moved. मृ + उति = मरुत्।

मयीकृतिः। संख्याया विधार्थे धा इति विहितस्मात् धाप्रत्यये प्राप्ते—"एधाच्च" इति द्वित्र्योः सम्बन्धिनी धाप्रत्ययस्य एधाजादेशोभवत्यन्यतरस्याम्—द्वेधा; (similarly त्रेधा)। In the sense of विधा, the affix धा may be replaced by धमुञ् also, so far as द्वि and त्रि are concerned. Thus द्विधा, द्वैधम्, and द्वेधा; त्रिधा, त्रैधम् and त्रेधा are the forms in the same sense.

मघवत् + अण् = माघवत। मघवा बहुलम्—The base मघवन् (which is irregularly derived from the root मह with कनिन्) is declined optionally like मघवत्। मिह + अच् = मेघ। कुत्वं निपात्यते। मेहति। मिहसेचने।

सुमन्त्रः। परवन्तः पराधीनाः परतन्त्राः। परतन्त्रः पराधीनः परवान् नाथवानपि इत्यमरः। विस्मयेन इति हेतौ तृतीया।

पञ্চম অঙ্ক।

নেপথ্যে ]

হে হে সৈনিকগণ, আমাদিগের গতি হইয়াছে, আমাদিগের গতি হইয়াছে। এই চন্দ্রকেতু তোমাদিগের যুদ্ধের সংবাদ প্রাপ্ত হইয়া সুমন্ত্রকর্তৃক সত্বরভাবে পরিচালিত, ধাবমান, বেগশালী অশ্বদ্বারা আকৃষ্ট রথে আরোহণ করিয়া আসিতেছেন; কোবিদার কাষ্ঠনির্ম্মিত তদীয় রথধ্বজ উদ্ঘাতবশতঃ কম্পিত হইতেছে॥ ১॥

[ সুমন্ত্রচালিত রথে ধনুষ্পাণি হর্ষবিস্ময়সম্ভ্রমান্বিত চন্দ্রকেতুর প্রবেশ ]

চন্দ্রকেতু। আর্য্য সুমন্ত্র, দেখুন, দেখুন—

অদ্ভুত শৌর্য্যসম্পন্ন এই বীরশিশু সমরাঙ্গণে অস্মদীয় সৈন্যগণের উপরি হিমবৃষ্টির ন্যায় অবিশ্রান্ত শরবর্ষণ করিতেছে। ঈষৎ কোপবশতঃ ইহার মুখশ্রী আরক্ত হইয়াছে, এবং নিরন্তর জ্যাসঙ্ঘর্ষে শব্দায়মান কার্ম্মুক আকৃষ্ট করিয়া বাণবর্ষণ করাতে ইহার শিখাপক্ষক কম্পিত হইতেছে॥ ২॥

আশ্চর্য্য!

রঘুবংশের অপ্রসিদ্ধ নব অঙ্কুরের ন্যায় দৃশ্যমান এই মুনিশিশু একাকী সমগ্র সৈন্যব্যূহে, বিদার্য্যমাণকরিকপোলগ্রন্থির টঙ্কারে ভীষণ শরসহস্রানল প্রজ্বলিত করিয়া আমার কৌতুক উৎপাদন করিতেছে॥ ৩॥

আশ্চর্য্য! আশ্চর্য্য!

সুমন্ত্র। আয়ুষ্মন্

তোমারই তুল্যরূপ, সুরাসুরাতিশায়িপ্রভাবসম্পন্ন এই শিশুকে অবলোকন করিয়া, বিশ্বামিত্রযজ্ঞদ্রোহী রাক্ষসগণের দলনে সমুদ্যত, চাপপাণি রঘুনন্দনকে স্মরণ করিতেছি॥ ৪॥

চন্দ্রকেতু। এই একাকী বালকের প্রতি অস্মৎপক্ষীয় বহুসংখ্যক সৈনিকগণ অস্ত্রচালনা করিতেছে ইহাতে আমার হৃদয় লজ্জাভারাক্রান্ত হইয়াছে।

সুবর্ণময় ক্ষুদ্র ঘণ্টিকার নিক্কণে ঝণঝণশব্দোদ্গারি স্যন্দনবৃন্দসনাথ, প্রভূত-মদধারাবর্ষি-জলদোপম-গজশ্রেণীসমন্বিত এই (অসংখ্য) সৈন্য ভূরিসমরোপযোগী শাণিত ভীষণ শস্ত্রজাল কবকন্দলীদ্বারা বারণ করিয়া এই অসহায় শিশুকে বেষ্টন করিয়াছে ॥ ৫ ॥

সুমন্ত্র। বৎস, ইহারা সকলে মিলিত হইয়াও ইহার কিছুই করিতে পারিতেছে না। প্রত্যেকে ব্যষ্টিভাবে কি করিবে?

চন্দ্রকেতু। আর্য্য, শীঘ্র শীঘ্র চলুন। এই শিশু আমাদিগের আশ্রিত জনসমূহকে অতি ভীষণভাবে নির্মথিত করিতে আরম্ভ করিয়াছে। দেখুন—

যাহা শ্রবণ করিয়া সুদূর গিরিকুঞ্জবর্ত্তী কুঞ্জরসমূহ কণজ্বর প্রাপ্ত হইয়া বৃংহিতনাদ করিতেছে, যাহা অশ্বদীয় প্রভূত দুন্দুভিনাদে দ্বিগুণীকৃত হইতেছে, তাদৃশ জ্যানির্ঘোষ উজ্জৃম্ভিত করিয়া এই বীর ভূমিতলে বিচেষ্টমান অপমূর্দ্ধকলেবরসমূহের বিচ্ছিন্নমুণ্ড-নিবহদ্বারা বসুধাতল আচ্ছন্ন করিতেছে, যেন বিশ্বগ্রাসে প্রবৃত্ত ভূরিভোজনে তৃপ্ত কৃতান্তের বদনপ্রান্ত হইতে গলিত ভোজনাবশেষ দ্বারা পৃথ্বীতল আকীর্ণ হইয়াছে ॥ ৬ ॥

সুমন্ত্র। [স্বগত] ঈদৃশ বীরের সহিত বৎস চন্দ্রকেতুর দ্বন্দ্বযুদ্ধ কিরূপে অনুমোদন করিব। [চিন্তা করিয়া] অথবা আমি ইক্ষ্বাকুবংশীয় রাজগণের গৃহে বৃদ্ধ হইয়াছি, যদি দ্বন্দ্বযুদ্ধ উপস্থিত হয় তাহা হইলে উপায় কি?

চন্দ্রকেতু। [বিস্ময়, লজ্জা ও সম্ভ্রমের সহিত] ধিক্, ধিক্, আমার সমস্ত সৈন্য রণে পরাঙ্মুখ হইল!

সুমন্ত্র। [রথের বেগ বর্দ্ধন করিয়া] আয়ুষ্মন্ সেই বীর এক্ষণে তোমার সহিত সংলাপের যোগ্য প্রদেশে বর্ত্তমান।

চন্দ্রকেতু। [বিস্মরণের অভিনয় করিয়া] আর্য্য, বার্ত্তাহরগণ ইহার কি নাম বলিয়াছিল?

সুমন্ত্র। বৎস, লব এই নাম বলিয়াছিল।

চন্দ্রকেতু। হে হে মহাবাহো লব, এই সৈনিকগণের সহিত যুদ্ধে কি প্রয়োজন? এই আমি উপস্থিত আছি, আমার নিকট আসুন তেজে তেজ প্রলীন হউক ॥ ৭ ॥

সুমন্ত্র। কুমার, দেখ, দেখ।

দৃপ্তসিংহশিশু মেঘগর্জ্জন শুনিয়া যেমন হস্তিশ্রেণীর অবমর্দ্দন হইতে বিরত হয়, (ও মেঘাভিমুখে ধাবিত হয়), এই বীরশিশুও সেইরূপ তোমাকর্ত্তৃক যুদ্ধার্থ আহূত হইয়া সৈন্যদলন কর্ম্ম হইতে নিবৃত্ত হইতেছে (ও তোমার দিকে আসিতেছে) ॥ ৮ ॥

[তাহার পর ত্বরিত ও উদ্ধত গতিতে লবের প্রবেশ]

লব। সাধু, রাজপুত্র, সাধু, সত্যই তুমি ইক্ষ্বাকুবংশধর, আমি এই পরাগতপ্রায়।

[নেপথ্যে মহান্ কলকল শব্দ]

লব। [আবেগের সহিত পরাবৃত্ত হইয়া] কি? এইমাত্র পরাজিত হইয়াও সেনাপতিগণ পুনর্ব্বার প্রতিনিবৃত্ত হইল এবং যুদ্ধার্থী হইয়া আমার সমীপে উপসর্পণপূর্ব্বক প্রহার করিতেছে। ধিক্ এই মূর্খদিগকে—

চতুর্দ্দিক হইতে সমুত্থিত এই গভীর ও তুমুল সেনাকোলাহল, প্রলয়পবন দ্বারা আস্ফালিত সাগরের জলরাশির ন্যায়, সমুদ্রান্তর্লীনশৈলরাজির সজ্ঘর্ষে সন্ধুক্ষিতবাড়বানল তুল্য প্রচণ্ড মদীয় কোপানলশিখাসমূহের কবলত্ব প্রাপ্ত হউক ॥ ৯ ॥

[ গমন করিতে লাগিল ]

চন্দ্রকেতু। হে কুমার,

অতিবিস্ময়কর গুণাতিশয়বশতঃ আপনি আমার প্রিয় সখা। অতএব যাহা আমার তাহা আপনার। তবে কেন আপনি নিজ পরিজনবর্গকে এরূপ নিষ্ঠুরভাবে নিহত করিতেছেন? আপনার দর্পশাতন চন্দ্রকেতু এই উপস্থিত ॥ ১০ ॥

লব। [ হর্ষ ও সম্ভ্রমের সহিত পরাবৃত্ত হইয়া ] মহানুভব সূর্য্যবংশকুমারের কি প্রসন্ন অথচ কর্কশ বীরজনোচিত বাক্যাবলী। এই সৈনিকদিগের সহিত যুদ্ধ করিয়া কি প্রয়োজন? ইঁহাকেই সম্মানিত করি।

[ পুনর্ব্বার নেপথ্যে কল কল শব্দ ]

লব। [ ক্রোধ ও বিরক্তির সহিত ] আঃ বীরের সহিত সমাগমের বিঘ্নোৎপাদন-কারী ইহারা আমাকে অতীব বিড়ম্বিত করিতেছে।

তাহাদিগের অভিমুখে গমন করিতে লাগিল ]

চন্দ্রকেতু। আর্য্য, দেখুন ইহা দেখিবার যোগ্য।

ঔৎসুক্য ও দর্পবশতঃ আমার প্রতি বদ্ধলক্ষ্য, পশ্চাদ্ভাগে সৈনিকগণ কর্ত্তৃক অনুসৃত, মণ্ডলীকৃতচাপপাণি এই কুমার, দিগ্দ্বয়ে পর্য্যায়ক্রমে প্রচালিত পবনভরে উত্তরলীকৃত শক্রচাপলাঞ্ছিত মেঘখণ্ডের শোভা ধারণ করিয়াছে ॥ ১১ ॥

সুমন্ত্র। কুমারই কেবল ইহাকে দেখিতেও জান। আমরা কিন্তু বিস্ময়ে অভিভূত হইয়াছি।

## Act V

[*Behind the scenes.*]

Oh ye soldiers, succour has come to our rescue.

Having heard of your fight, there comes Chandraketu in a car, the swift coursers of which are running fast, being urged on by Sumantra in haste, and his flag-staff made of the *kobidara* wood is shaking on account of the jolting of the car. (1)

[*Then enter in a car having Sumantra as its charioteer Chandraketu with bow in hand, and with feelings of amazement, joy and haste.*]

*Chandraketu.*—Behold, noble Sumantra, behold. This unknown young hero, with the beauty of his face tinged red on account of slight anger, and with his five locks of hair waving,

is showering, in the fore-front of battle, a volley of arrows like a hailstorm on the armies by means of his bow, the ends of which are twanging unceasingly. (2)

Wonderful!

This young lad of the ascetic folk, like a new, unknown off-shot of the race of Raghu, awakens my curiosity and wonder, by lighting up, alone, on the whole array of the troops, (a fire of) countless arrows, frightful on account of the clashing noise proceeding from the cloven temple-joints of the elephants. (3).

Wonderful! wonderful!

*Sumantra.*—Beholding this boy, whose appearance is like that of yours, and whose puissance excels that of gods and demons, I remember Rama Chandra wielding the bow, while he spread a havoc among the foes of the sacrifice of the son of Kusika (4)

*Chandraketu.*—But my heart feels shame in as much as so many (of us) put forth their exertions against him, single-handed.

This boy, alone and unaided, has been surrounded by ou armies, holding in their bush-like, thick, stout and fierce hanp several weapons which shine forth on the battle-field, whose war-chariots are resonant with the jingling noise of the sounding golden bells; and the cloud-like elephants in which are shedding copious showers of ichor. (5).

*Sumantra.*—Dear boy, what can they, even when acting in concert, do to him? How much less would they do, when (fighting) separately.

*Chandraketu.*—Make haste, noble sir, make haste. He has been making a terrible havoc among my followers. Raising the twang of his bow, which is swollen by the loud sounds of (our) war-drums, and which gives a harsh shock to the ears of the herds of elephants grunting in the mountain-groves, this hero makes the ground strewn with heaps of heads and with frightfully writhing headless trunk, as if with superfluous remains of food fallen from the horrid mouth of the satiated god of death. (6).

*Sumantra.*—[*To himself.*] How should I approve of a duel between such a hero and our dear boy Chandraketu? [*Reflecting*]

Or we have grown old in the house of Ikshwaku. When it has come to pass what help is there.

*Chandraketu.*—[*With wonder, shame and haste*] Fie! shame! my soldiers have all retreated!]

*Sumantra.*--[*Representing the speed of the car.*] Long-lived one, the hero is now come within the call.

*Chandraketu.*—[*Representing forgetfulness*]. Respected sir, what did our messengers report to be his name?

*Sumantra.*—Dear boy, it is Lava.

*Chandraketu* —O Lava of long arms, what is the use of fighting with these soldiers? Here I am; come to me. Let the fire of (your) energy be extinguished by the fire of (my) energy. (7).

*Sumantra.*—Prince, see, see.

This young hero, challenged by you, forbears from the slaughter of the army, just as a proud cub of a lion desists from killing droves of elephants on hearing the roar of clouds. (8).

[*Then enter Lava with quick and haughty strides*].

*Lava.*—Bravo! Prince, bravo, you are truly a scion of Ikshwaku. So here I am come (to meet you.)

[*A loud noise behind the scenes*].

*Lava.*—[*Turning back in agitation*]. How now these generals, though routed, have come back; and, marching to battle, have surrounded me and are striking at me. Fie on these stupid fellows

Let this deep and tumultuous uproar of the army rising from all sides like a huge bore of the ocean swollen by the doomsday gales be swallowed up by the countless flames of my anger, fierce as the submarine fire issuing from the mouth of a mare, stirred up by being dashed against (submarine) rocks. (9).

[*Steps onward*].

*Chandraketu.*—O youth!

On account of the extreme excess of your merits you have become a dear friend to me. Therefore what is mine is yours. Why do you then crush your own followers? Here stands Chandraketu who will indeed be a test-stone to your arrogance. (10).

*Lava.*—[*Turning back with haste and joy.*] Oh, how polite and severe (at the same time) is the heroic speech of this majestic Prince of the solar race! What is the good of fighting with these? I will honour him.

[*Again a noise behind the scenes.*]

*Lava.*—[*With anger and vexation.*] Ah! I have been annoyed by these wretches who throw obstacles to my meeting a hero.

[*Marches towards them.*]

*Chandraketu.*—Noble sir, see, it is worth seeing.

Having fixed his gaze on me on account of haughtiness mixed with curiosity, and being pursued from behind by the army, he with his bow drawn and raised aloft holds the splendour of a cloud carrying the rain-bow or the bow of Indra, and agitated by an (irregular) wind from two (opposite) directions. (11).

*Sumantra.*—The prince alone knows how to observe him, As for ourselves, we are simply overpowered with astonishment.

चन्द्रकेतु:। हे राजान:—संख्येति। संख्यातीतै: द्विरदतुरगस्यन्दनस्थै: कवचनिचितै: कालज्यष्ठै: भवद्भि: एकस्मिन् पदातौ मेध्यचर्म्मोत्तरीये अभिनववय:काम्यकाये अत्र युधि य: अयं परिकर: बद्ध: तेन व: धिक्, अस्मान् धिक्॥ १२॥

संख्याम् अतीता: इति संख्यातीता: द्वितीया श्रितातीतेत्यादिना समास: तै: संख्यातीतै: संख्यातुमशक्यै: द्विरदा: हस्तिन: तुरगा: अश्वा: स्यन्दना: रथा: तेषु तिष्ठन्ति ये ते द्विरदतुरगस्यन्दनस्था: तै: विविधयानारूढै: कवचेन वर्म्मणा तनुत्रेणेति यावत् निचिता व्याप्ताङ्गा: तै कवचनिचितै: तनुत्राव्रतगात्रै, कालेन समयेन ज्येष्ठा: तै: कालज्यष्ठै: प्रवृद्धवयोधर्म्मवशात् कठोरावयवैरित्यर्थ: भवद्भि: एकस्मिन् एकाकिनि पदातौ पादचारिणि भूमिष्ठे इत्यर्थ: मेध्यं पवित्र चर्म्म अजिनम् उत्तरीयम् प्रावार: यस्य तस्मिन् मेध्यचर्म्मोत्तरीये अनायासच्छेद्यमृगचर्म्ममात्रावरणे इत्यर्थ. अभिनवेन तरुणेन वयसा काम्य: मनोहर: मृदुश्चेतिभाव: काय: शरीरं यस्य तस्मिन् अभिनववय:-काम्यकाये तारुण्यादजरठगात्रे कोमलकाये सर्व्वथा वाणपातानर्हे इतिभाव: अत्र अस्मिन् कुमारे युधि रणे विषये योऽयं परिकर: उद्यम: बद्ध: विहित: तेन हेतुना व: युष्मान् धिक् अधर्म्मयुद्धोद्यतान् कापुरुषान् युष्मान् धिक् अस्मान् च धिक्; यदहं भवादृशानां अन्याय्यसंग्रामरतानां नेता इति हेतोरहमपि निन्दनीय: संवृत्तोऽस्मि॥ यूयं वर्म्मावृतशरीरा: अयमगुप्तदेह:। यूयं प्रौढ़त्वमापन्ना: दृढावयवा: अयं कौमारभाक् कोमलकाय:। इमं प्रति युष्माकमयं रणोद्यम: सर्व्वथा निन्दनीय:

इत्यर्थः॥ अतिवैषम्यात् नायं रणव्यापारः सङ्गच्छते इति विषमालङ्कारः व्यज्यते। मन्दाक्रान्ता वृत्तम्॥

सम् + ख्या + अङ् — संख्या। अति + इण् + क्त (कर्त्तरि) = अतीत। तुर + गम् + ड = तुरग। स्यन्द + युच् = स्यन्दन। स्यन्दन + स्था + क = स्यन्दनस्थ। पादाभ्याम् अतति इति पदातिः अज्यतिभ्याम् इति अनुवृत्तौ पादे च इति पादशब्दोपपदात् अततेः इण् औणादिकः पादस्य पदाज्यातिगोपहतेषु इति पादशब्दस्थाने पद इत्यदन्तादेशः। नि + चि + क्त कर्म्मणि = निचित। मेध + ण्यत् = मेध्य। अथवा मेध + यत् ( तद्धित ) = मेध्य। उत्तर + छ = उत्तरीय। वृद्ध + इष्ठन् = ज्येष्ठ। अज + असुन् = वयस्। कम + ण्यत् = काम्य। चि + घञ् = काय। परिकरः गात्रबन्धः उद्यमः इत्यर्थः। भवेत् परिकरः सङ्घे पर्य्यङ्कपरिवारयोः। प्रगाढ़गात्रिकाबन्धे समारम्भविवेकयोः। इति मेदिनी। अथ तनुत्रं वर्म्म दंशनम्।

उरच्छदः कङ्कटको जगरः कवचोऽस्त्रियामित्यमरः। कौतेः अचः इत्येके इति कवचः।

लवः। [ चोभेण चेतश्चाञ्चल्येन, व्यथया इत्यर्थः सह वर्त्तते इति सचोभम ] अनुकम्पते दयते। नाम इति क्रोधे। नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने इत्यमरः। कालस्य समयस्य हरणं चेपः तस्य प्रतिषेधाय निवारणाय जृम्भकाणाम् अस्त्राणां प्रयोगेण इमानि सैन्यानि संस्तम्भयामि निर्व्यापारविलचणानि करोमि। जृम्भकास्त्रेण एतान् योधान् अवसन्नान् विरतयुद्धोत्सवान् निद्राविधेयानिव करोमि। सम + स्तम्भ् ( णिच् ) + लट् मि = संस्तम्भयामि। [ ध्यानं प्रणिधानं अस्त्रस्य प्रयोगमन्त्रस्मरणमित्यर्थः नाटयति ]।

सुमन्त्रः। अकस्मात् हठात् अस्माकं सैन्यानां घोषः कलकलः प्रशाम्यति विरमति। विलयं यातीत्यर्थः।

लवः। प्रगल्भम्—सदर्पम् दर्पपूर्णवचःसंहतिं प्रयुञ्जानमित्यर्थः। प्र + गल्भ् + अच् (कर्त्तरि) = प्रगल्भ। गलभते ; जगल्भे ; अगल्भिष्ट।

सुमन्त्रः। आमन्त्रितम्—मन्त्रोच्चारणपूर्व्वकमाहूतम्, प्रयुक्तमित्यर्थः।

चन्द्रकेतुः। व्यतिकर इति—भीमः तामसः वैद्युतश्च व्यतिकरः इव ग्रस्तमुक्तं प्रणिहितम् अपि चक्षुः छिनत्ति। अथ एतत् सैन्यं लिखितम् इव अस्पन्दम् आस्ते। नियतम् अजितवीर्य्यं जृम्भकास्त्रं जृम्भते॥ १३॥

भीमः भीषणः तामसः तमःसम्बन्धी, वैद्युतश्च विद्युत्सम्बन्धीच व्यतिकरः इव सम्पर्कः समागमः इत्यर्थः तमस्तड़ितोर्य्योगपद्येन आविर्भाव इव अतिभयङ्करोऽयं ध्वान्ततेजसोः समवायः ग्रस्तमुक्तम् आदौ ग्रस्तं निगीर्णं अन्धीकृतमित्यर्थः पश्चात् मुक्तम् तमोऽपावरणात् निर्म्मुक्तम् पुनरुपलब्धदृक्शक्तिकमित्यर्थः पूर्व्वकालेत्यादिना समासः,

प्रणिहितम् द्रष्टव्यविषयोपलब्धये एकाग्रीकृतमपि चक्षुः नयनं हिनस्ति पीड़यति क्लेशयति इति यावत्। अथ तादृशस्य अपूर्व्वस्य अन्धकारप्रभापुञ्जसमागमस्य सङ्घटनादनन्तरम् एतत् अस्मदीयं सैन्यं लिखितं चित्रार्पितमिव आस्ते निष्पन्दमवतिष्ठते। । नियतं निश्चितम् अजितं कुत्रापि न नीचीकृतं वीर्य्यं प्रभावः शक्तिरिति यावत् यस्य तत् अजितवीर्य्यम् अप्रतिहतशक्ति जृम्भकास्त्रं जृम्भते प्रादुर्भवति। जृम्भकास्त्रस्यैव प्रभावेण अस्मत्सैनिका ईदृक् निश्चेष्टाः निष्पन्दाश्च जाता इत्यर्थः। मालिनी वृत्तम्। उपमालङ्कारः उत्प्रेक्षा च। कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासश्च।

वि + अति + कृ + अप् = व्यतिकर। बिभेति अस्मात् इति भीमः भी + मक्। भीमादयः अपादाने। तमस् + अण् = तामस। वि + द्युत् + क्विप् = विद्युत्। विद्युत् + अण् = वैद्युत।

प्र + नि + धा + क्त (कर्म्मणि) = प्रणिहित। नेर्गदनदपतघुमास्था इत्यादिना णत्वम्। ग्रस् + क्त (कर्म्मणि) = ग्रस्त। ग्रसते; जग्रसे; अग्रसिष्ट। हिन्स् + लट् ति = हिनस्ति। जिहिंस; अहिंसीत्। हिंसितः। नास्ति स्पन्दः कम्पः यस्य तत् अस्पन्दम्। अमितम् अप्रमेयम् मा + क्त = मित। न मितम् इति अमितम् जृम्भ + लट्ते = जृम्भते। जजृम्भे अजृम्भिष्ट। जृम्भितः।

पातालोदरेति। पातालोदरकुञ्जपुञ्जिततमःश्यामैः उत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः जृम्भकैः, कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैः मीलन्मेघतड़ित्कड़ारकुहरैः विन्ध्याद्रिकूटैः इव नभः अवाकीर्य्यते ॥ १४ ॥

पातालस्य रसातलस्य उदरं गर्भः तदेव कुञ्जं यद्वा तत्र यत् कुञ्जम् लतादिपिहितोदरं स्थानं तत्रपुञ्जितानि राशीभूतानि यानि तमांसि ध्वान्तानि इति पातालोदरकुञ्जपुञ्जिततमांसि तानि इव श्यामानि कृष्णानि इति पातालोदरकुञ्जपुञ्जिततमःश्यामानि, उपमानानि सामान्यवचनैरिति समासः। तैः सूर्य्यसम्पर्कराहित्यात् निरालोकरसातलनिकुञ्जनिविड़ीभूततमःसङ्घातमलिनैः, उत्तप्तं क्वथितं स्फुरत् दीप्यमानं यद् आरकूटं रीतिः, पित्तलमिति यावत् तस्य यत् कपिलं पिङ्गलं ज्योतिः भाः तद्वत् ज्वलन्ती दीप्यमाना भास्वरेति यावत् दीप्तिः द्युतिः येषां तैः उत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः गुरुतापयोगाद् द्रवीभावमापन्नात् पित्तलान्निर्य्यत्प्रभापटलपिशङ्गैः जृम्भकैः जृम्भकास्त्रैः, कल्पस्य युगस्य ब्रह्मणोदिनस्य इत्यर्थः आक्षेपः क्षयः नाशः इति यावत् तस्मिन् कल्पाक्षेपे युगक्षये कठोरैः प्रचण्डैः भैरवैः भीषणैः मरुद्भिः प्रभञ्जनैः व्यस्तानि विक्षिप्तानि पर्व्वतगात्रात् च्युतानि इत्यर्थः तैः कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैः प्रलयप्रचण्डपवनवेगाक्षिप्तैः मीलन्तः संसृज्यमानाः

मेघाः कृष्णाम्भोदाः येषुर्य्वा तानि मीलन्मेघानि, तडिद्भिः कड़ाराणि पिङ्गलानि कुहराणि गह्वराणि येषां तानि तडित्कड़ारकुहराणि मीलन्मेघानि च तानि तडित्कड़ारकुहराणि च इति मीलन्मेघतडित्कड़ारकुहराणि तैः मेघसंसर्गेद्विगुणीकृतकृष्णिमभि स्तडिच्छटापातपिशङ्गीकृतकन्दरैश्च विन्ध्याद्रेः कूटैः शृङ्गैः इव नभः व्योमतलं अवाकीर्य्यते आस्तीर्य्यते आच्छाद्यते इत्यर्थः। उपमालङ्कारः। अत सम्भावनाया एव प्राधान्यात् उत्प्रेक्षा इति केचिन्मन्यन्ते। शार्द्दूलविक्रीड़ितम् वृत्तम्।

रीतिः स्त्रियां स्यन्दप्रचारयोः। पित्तलेलोहकिट्टे च इति मेदिनी। रीतिःस्त्रियामारकूटो न स्त्रियामित्यमरः अथ कुहरं शुषिरं विलमिति चामरः। कड़ारः कपिलः पिङ्गलपिशङ्गौ कद्रुपिङ्गलौ इति चामरः। कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने इति मेदिनी। आङ् + क्षिप् + घञ् = आक्षेप। वि + अस् + क्त कर्म्मणि = व्यस्त। अव + आङ् + कॄ + लट् ते ( कर्म्मणि ) = अवाकीर्य्यते। मील् + शतृ = मीलत्। मीलति; मिमील; अमीलीत्। मीलितः। पुञ्जं करोति इति पुञ्जयति तत् करोति तदाचष्टे इति णिच्। ततः कर्म्मणि क्तः। श्यै + मक् = श्याम। मृ + उति = मरुत्। विन्ध्यः एव अद्रिः इति विन्ध्याद्रिः तस्य कूटानि इति विन्ध्याद्रिकूटानि कूटोऽस्त्री शिखरं शृङ्गमित्यमरः।

*N. B.* Observe how Bhavabhuti has expressed in his own way the idea which was suggested to him by the following sentence in Kalidasa's Meghaduta :—अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभिर्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः। Bhavabhuti's description at once carries home to the mind of the reader the sublime grandeur of the awful scenery. The very sound is an echo of the sense.

सुमन्त्रः। आगमः आसादनं प्राप्तिरित्यर्थः।

सुमन्त्रः। सर्व्वज्ञत्वात् अयं वाल्मीकिर्धनुर्व्वेदादिकं विजानाति सत्यम्; किन्तु अयं कदापि अस्त्रादीनां प्रयोगं स्वयं कृतवान् इति न श्रूयते। जृम्भकास्त्राणां प्रयोगसंहारमन्त्रोपदेशे अस्य पाटवं न सम्भाव्यते खलु ॥ १५ ॥

यतः इमानि अस्त्राणि कृशाश्वप्रभृतीनां पुराणानां गुरूणां तेजःसम्भूतानि। स च भगवान् कृशाश्वः एतानि विश्वामित्राय अभ्यादिदेश। स च रामचन्द्राय इमानि अददात्। एष खलु एषामस्त्राणां गुरुपदेशक्रमः एते इति विधेयप्राधान्यात् पुंस्त्वम्। यद्वा अधिष्ठातृदेवाभिप्रायेण पुंलिङ्गता। सम्प्रदीयते इति सम्प्रदायः। गुरुपरम्परोपदेशः। सम् + प्र + दा + घञ् = सम्प्रदाय। वि + अव + स्था + क्त ( कर्त्तरि ) = व्यवस्थित। व्यवस्थिताः कृतसंश्रयाः।

चन्द्रकेतुः। परमम् अत्यर्थम् उपचीयमानः प्रकृष्यमाणः वृद्धिं गच्छन् इत्यर्थः सत्त्वस्य सत्त्वगुणस्य प्रकाशः आविर्भावः येषु ते परमोपचीयमानसत्त्वगुणप्रकाशाः। यद्वा परमोपचीयमानस्य अतिप्रकर्षं गतस्य सत्त्वस्य प्रकाशो येषां येषां वा इति परमोपचीयमानसत्त्वप्रकाशाः इति विग्रहः "ज्ञानोद्रेकात् विघटिततमोग्रन्थयः सत्त्वनिष्ठाः इत्यर्थः। मन्त्रं पश्यन्ति इति मन्त्रदृशः वेदादीनां अन्येषाञ्च मन्त्राणां द्रष्टारः पश्यन्ति गुरूपदेशमन्तरेण विलोकयन्ति। ज्ञानप्रभावात् हस्तामलकवत् सर्व्वं याथार्थ्येन विदन्ति इत्यर्थः। अतो नैतच्चित्रम् यदयं जृम्भकास्त्रमधिगतवान्वाल्मीकिसकाशात्।

कुमारौ। [स्नेहेन अनुरागेण च सह वर्त्तमानं यथा तथा सस्नेहानुरागम् निर्व्वर्ण्य निपुणं विलोक्य]

यदृच्छेति। एतस्मिन् दृष्टे यदृच्छासंवादः किम्, गुणानाम् अतिशयः किम् जन्मान्तरनिविडबन्धःपुराणः परिचयः वा विधिवशात् अविदितः कः अपि निजः सम्बन्धः किमु मम हृदयम् अवधानं रचयति ॥ १६ ॥

एतस्मिन् कुमारे दृष्टे विलोकिते सति यदृच्छया दैवगत्या संवादः समागमः किम् गुणानाम् अस्मिन् कुमारे दृश्यमानानां शौर्य्यादिप्रकर्षाणाम् अतिशयः अतिरेकः आधिक्यमिति यावत् किम्, अन्यत् जन्म इति जन्मान्तरं मयूरव्यंसकादयश्चेति समासः, तस्मिन् जन्मान्तरे निविडः गाढः दृढः इत्यर्थः बन्धः बन्धनं संश्लेषणमिति यावत् यस्य स जन्मान्तरनिविडबन्धः जननान्तरे समुत्पन्नः अन्तर्हृदये दृढमङ्कितश्च पुराणः प्राक्तनः परिचयः संस्तवः वा अथवा विधिवशात् भाग्यस्य विवर्त्तनात् हेतोः अविदितः अविज्ञातः कोऽपि निजः स्वीयः सम्बन्धः ज्ञातित्वादिः स्वजनभावः किमु मम हृदयं चित्तम् अन्तःकरणमिति यावत् अवधानम् अवहितत्वम् ऐकाग्र्यम् रचयति आसादयति, गमयतीति यावत्। अस्मिन् कुमारे नयनविषयीभूते यदिदं मम हृदयम् अवहितमेकाग्रं सानन्दोच्छ्वासञ्च भवति तत्र कोनु हेतुः स्यात्। ईदृशेन महावीरेण सह दैवगत्या एतदचिन्तितपूर्व्वं सम्मेलनम् किं तत्कारणम्, अथवा अस्यालौकिकवीर्य्यातिशयस्तत्र हेतुः, अन्यस्मिन् जन्मनि समुत्पन्नं भावबन्धन सौहार्द्दं वा तत्र कारणं भवेत्; अथवा अयं मम कोऽपि निजोजनः दैववशात् अनेन सह सम्बन्धः न विज्ञातः स एव अविज्ञातोऽपि मम हृदयम् आह्लादयति। तथाचोक्तं भारविणा—अविज्ञातेऽपिबन्धौहि बलात् प्रह्लादते मनः इति।

यद् + ऋच्छ + अप् = यदृच्छा Accident. स्वाच्छन्द्यं निर्निमित्तञ्च यदृच्छेत्यभिधीयते इति हलायुधः। अति + शी + अच = अतिशय। परि + चि + अच् = परिचय। संस्तवः स्यात् परिचयः। पुरा + ट्यु = पुराण (irregularly formed)। नि + विड् + क = निविड़। विड् आक्रोशे लट् वेडति। सम् +

बन्ध + घञ् = सम्बन्ध। न विदितः इति अविदितः। विद् + क्त (कर्मणि) = विदित। रचयति रदन्तग्रुरादिः क्रत्यर्थे वर्त्तते। रचयतेः हेतुमति चेति प्रेरणार्थे णिच्। ततः लटि रूपम्। गत्यर्थत्वात् अणिकर्त्तुः कर्म्मत्वम्। अयमत्र शाब्दबोधः — मम हृदयम् अवधानम् एकाग्रत्वं रचयति विधत्ते। यद्दृच्छासंवादः गुणातिशयः परिचयो वा सम्बन्धो वा मम हृदयम् अवधानं रचयति कारयति इत्यर्थः। हेतुमन्णिचि पूर्व्वस्य णेर्लोपः। यद्वा अवधानं प्रणिधानम् अस्ति अस्य इति अवधानम् अर्श आदित्वादच्। हृदयम् अवधानम् अवहितमित्यर्थः रचयति कुरुते इत्यर्थः। अयमन्तिमः पक्षः नादरणीयः।

*N B.* The second foot of the verse पुराणोवा...is an echo of the following lines of Kalidasa :

(i) मनो हि जन्मान्तरसंगतिज्ञम्

(ii) तच्चेतसा स्मरति नूनमबोधपूर्व्वं भावस्थिराणि जननान्तरसौहृदानि।

Bhavabhuti endorses the view that in some calm and fortunate moments when we are in a reflective mood we have faint recollections or reminiscences of our ante-natal experiences ; which has been elaborated into a theory by Plato with the object of arguing the immortality of the Soul, and which has been so beautifully and sublimely expressed by Wordsworth in his celebrated "Ode on the Intimations of Immortality from the Recollections of early childhood"

Cf. Hence in a moment of calm weather,
Though inland far we be,
We have glimpses of that immortal sea,
Which brought us hither
Can in a moment travel thither,
See the children sporting on the shore,
And hear the mighty waters rolling ever more.

सुमन्त्रः। भूयसा प्रायेण बाहुल्येनेति यावत् जीविनां प्राणिनां एषएव धर्म्मः स्वभावः इत्यर्थः यत् कस्यचित् जनस्य कुवचित् जने रसमयी स्नेहात्मिका प्रीतिर्जायते, चेतसोवृत्तिः प्रीतिस्निग्धा मधुराच भवति। प्रथमदर्शनक्षणे एव चित्तं प्रीतिप्रवणम् आकृष्टञ्च भवति। एवंविधां चेतोवृत्तिं लोकाः अनुरागसंज्ञया अभिदधति। दर्शनादेव

चूड़ेति। आकूतजः वेपथुः चूडामण्डलबन्धनम् तरलयति। कोकनदच्छदस्य किञ्चित् सदृशे नेत्रे स्वयं रज्यतः। वक्त्रम् अकाण्डताण्डवितयोः भ्रुवोः भङ्गेन उत्कटलाञ्छनस्य चन्द्रस्य, उद्भ्रान्तभृङ्गस्य कमलस्य च कान्तिं धत्ते॥ ३६॥

आकूतं स्यादभिप्रायः इति हलायुधः तस्मात् जायते इति आकूतजः क्रोधजन्यः इत्यर्थः वेपथुः कम्पः चूडामण्डलस्य शिखामण्डलस्य बन्धनं संयमनं तरलयति तरलं करोति चञ्चलं करोति, ईषत् शिथिलयति इत्यर्थः क्रोधवशात् अनयोः शिरसी मुहुः कम्पेते इत्यर्थः। कोकनदस्य रक्तोत्पलस्य छदस्य किञ्चित् ईषत् सदृशे तुल्ये स्वभावतः ईषद् रक्ते नेत्रे स्वयम् आत्मना क्रोधोदयादित्यर्थः रज्यतः रक्तीभवतः। यद्वा स्वयम् निसर्गतः कोकनदच्छदस्य किञ्चित् सदृशे नयने रज्यतः इत्यन्वयः कार्य्यः। वक्त्रम् अनयोराननम्, जात्याख्यायामेकवचनम्, अकाण्डे अनवसरे ताण्डवितयोः नृत्यन्त्योः उत्क्षिप्तयोरित्यर्थः भ्रुवोः भङ्गेन पृथग्भावेन, भीमेन भ्रूभङ्गेन इत्यर्थः, उत्कटं प्रकटं सुव्यक्तमिति यावत् लाञ्छनं कलङ्कः यस्य तस्य उत्कटलाञ्छनस्य प्रकटाङ्कस्य चन्द्रस्य विधोः उद्भ्रान्ता उद्पतिता भृङ्गाः भ्रमरश्रेणी इत्यर्थः यस्मात् तस्य उद्भ्रान्त-भृङ्गस्य उत्पतदलिश्रेणीकस्य कमलस्य सरोरुहस्य कान्तिं शोभां धत्ते धारयति। तत्सदृशीं शोभां प्राप्नोति इत्युपमायां पर्य्यवसानात् निदर्शनालङ्कारः। कम्पनेत्र-लौहित्यभ्रूभङ्गादयः कोपविकाराः आविर्भूताः। शार्दूलविक्रीडितम् वृत्तम्।

तरलं करोति इति तरलयति। तत् करोति तदाचष्टे इति णिच्। आ + कू + क्त + आकूत। आकूत + जन् + ड = आकूतज। वेप् + अथुच् (भावे) = वेपथु। वेपते; विवेपे; अवेपिष्ट। कोकनदच्छदस्य इत्यत्र तुल्यार्थैरतुलोपमाभ्यामिति पाक्षिकी षष्ठी। छादि + घ = छद।

राजीवमरविन्दञ्च पद्मं पङ्कजमिष्यते।
रक्तं कोकनदं प्रोक्तं पुण्डरीकं सिताम्बुजम्॥

इति हलायुधः।

अथरक्तसरोरुहे। रक्तोत्पलं कोकनदम्—इत्यमरः। कोकान् चक्रवाकान् नदति नादयति इति कोकनदम्। कोक + नद + अच् = कोकनद।

ताण्डवं नटन जातमनयोः इति ताण्डविते। तारकादित्वादितच्। भञ्ज + घञ् = भङ्ग। उत् + भ्रम् + क्त (कर्त्तरि) = उद्भ्रान्त। कम् + क्तिन् = कान्ति।

कुमारौ। विमर्द्दस्य रणकर्म्मणः क्षमा योग्या इति विमर्द्दक्षमा रणव्यापारानुकूला ताम् भूमिं स्थलीम् अवतराव: गच्छाव:।

कुमारयोः विक्रमो नाम पञ्चमः अङ्कः समाप्तः॥

सुमन्त्र। অতি পবিত্রস্বভাবসম্পন্ন, বাল্মীকিশিষ্য এই কুমার আর্য্যসংস্কারপূত ভাষায় কথা বলিতেছে॥

লব। হে চন্দ্রকেতো! তুমি যে বলিতেছ "তাত রামচন্দ্রের প্রতাপোৎকর্ষ ও কি তোমার অসহনীয়" সে বিষয়ে তোমাকে এই কথা জিজ্ঞাসা করি, ক্ষত্রিয়ের শৌর্য্যাদি ধর্ম্ম কি কোন ব্যক্তিবিশেষে সীমাবদ্ধ ?

সুমন্ত্র। তুমি ঐক্ষ্বাক নৃপতিকে জাননা, এই নিমিত্ত এরূপ বলিতেছ। অতএব এরূপ প্রাগল্‌ভ্যাতিশয় প্রদর্শন হইতে বিরত হও।

সৈনিকগণকে প্রমথিত করিয়া তুমি ওজস্বী বীরের ন্যায় আচরণ করিয়াছ সত্য। কিন্তু জমদগ্নিতনয়ের বিজেতা রামচন্দ্রের প্রতি এরূপ বাক্যপ্রয়োগ করা তোমার পক্ষে উচিত নহে ॥ ৩২ ॥

লব। [ হাস্য করিয়া ] আর্য্য, সেই ভূপতি জামদগ্ন্যকে দমন করিয়াছেন ইহাতে তাঁহার সবিশেষ প্রশংসার কথা কি আছে ?

ইহা সর্ব্বত্র প্রসিদ্ধ যে ব্রাহ্মণের শক্তি বাক্যে নিহিত ; ক্ষত্রিয়ই বাহুবলের অধিকারী। জামদগ্ন্য শস্ত্রধারী ব্রাহ্মণ ; তাঁহাকে দমন করায় সেই নৃপতির প্রশংসার এমন কি কারণ উপস্থিত হইয়াছে ? ॥ ৩৩ ॥

চন্দ্রকেতু। [ব্যথিতের ন্যায়] আর্য্য, আর্য্য, ইহার সহিত উত্তর প্রত্যুত্তরের প্রয়োজন নাই।

ইনি একজন অভিনব বীরপুরুষ সম্প্রতি জগতে অবতীর্ণ হইয়াছেন, যাঁহার নিকট ভগবান্ ভৃগুনন্দনও বীর বলিয়া গণ্য নহেন ; এবং যিনি ( কণ্টকোন্মূলন দ্বারা ) সপ্তভুবনে অভয়দানে পর্য্যাপ্ত, তাত রামচন্দ্রের পবিত্র অবদানপরম্পরা অবগত নহেন ॥ ৩৪ ॥

লব। রঘুপতির চরিত্র ও মহিমা কে না অবগত আছে ? তবে কিনা সে সম্বন্ধে কিছু বক্তব্য আছে ; অথবা তাহার উল্লেখ করিবার প্রয়োজন নাই।

তাঁহারা বয়োবৃদ্ধ, তাঁহাদিগের চরিত্রের সমালোচনা করা উচিত নহে। তাঁহারা থাকুন, কি আর বর্ণনা করিব। সুন্দপত্নী তাড়কাকে বধ করিলেও তাঁহাদের যশোরাশি অক্ষুণ্ণ রহিয়াছে, এবং জগতে তাঁহারা পূজনীয়। খরের সহিত সংগ্রামে অপরাঙ্মুখ হইয়াও পশ্চাৎদিকে যে তিনটি পাদক্ষেপ করিয়াছিলেন অথবা ইন্দ্রতনয় বালীর নিধনার্থ যে কৌশল অবলম্বন করিয়াছিলেন তাহা লোকে জানে ॥ ৩৫ ॥

চন্দ্রকেতু। আঃ তাত রামচন্দ্রের নিন্দা করিয়া তুমি মর্য্যাদা উল্লঙ্ঘন করিয়াছ ? তুমি অত্যন্ত প্রগল্‌ভতা প্রকাশ করিতেছ।

লব। কি! আমারই প্রতি ভ্রূভঙ্গ করিতেছে!

সুমন্ত্র। ইহাদিগের উভয়েরই ক্রোধ প্রকাশ পাইয়াছে। কেননা ক্রোধহেতুক কম্প ইহাদিগের চূড়ামণ্ডলের বন্ধন চঞ্চল করিতেছে। স্বভাবতঃ কোকনদদলের কিঞ্চিৎ সদৃশ লোচনযুগল আরক্ত হইয়াছে। এবং অকাণ্ডে উৎক্ষিপ্ত ভ্রূযুগলের ভঙ্গবশতঃ ইহাদিগের মুখমণ্ডল প্রস্ফুটকলঙ্ক চন্দ্রবিম্বের এবং উপরি উৎপতিতভৃঙ্গপঙ্‌ক্তিপরিশোভিত কমলের শোভা ধারণ করিয়াছে ॥ ৩৬ ॥

কুমারদ্বয়। তবে এস্থান হইতে রণব্যাপার যোগ্য ভূমিতে অবতরণ করি ॥

[ সকলে নিষ্ক্রান্ত ]

ইতি কুমারবিক্রমনামক পঞ্চম অঙ্ক সমাপ্ত ॥

*Sumantra.*—Of a pure character, this disciple of Prachetas makes a speech marked by culture and refinement received from sages.

*Lava*—As to what you say, Chandraketu, whether I am unable to bear the superiority of your father's valour, I ask you if the virtues of the military castes are confined to any particular individual.

*Sumantra.*—You do not surely know that King of Ikshwaku's race, and hence you speak in this strain Cease, therefore, from this excess (of bold talks).

True that you have conducted yourself like a valorous hero by putting the army to rout, but it does not become you to speak disparagingly of the chastiser of Jamadagnya. (32).

*Lava.*—[ *With a laugh* ] Noble sir, what high praise is it that the King is the chastiser of Jamadagnya ?

It is an admitted fact that the strength of a Brahman lies in his speech ; while the strength of a pair of arms belongs to the Kshatriyas (alone). Jamadagnya was a Brahman who weilded weapons (of warfare). If he was vanquished, what praise is it for the King ? (33).

*Chandraketu.*—[ *With a pang.* ] Noble sir, noble sir, have done with (any more) altercation.

He must be a novel and extraordinary incarnation of manhood, in whose estimation even the mighty and holy son of Bhirgu is not a hero ; and who does not know the holy deeds of our father, which are competent enough to grant freedom from fear to the seven worlds. (34).

*Lava.*—Who does not know the exploits and greatness of the chief of Raghu's race ? But then there is something to say about them ; or heaven forbid it.

They are old men, and their conduct should not be criticised. Let them alone ; what good describing it ? Their fame is intact

and unsullied, though they killed the wife of Sunda ; and yet they are great and honourable men in the world ! In the fight with Khara the three backward steps though without turning the face, and the artifice in the matter of killing the son of Indra—these are facts which the people are fully acquainted with. (35).

*Chandraketu.*—Ah ! you have transcended the limits of politeness by reviling our father Too much do you brag !

*Lava.*—O ! He frowns at me !

*Sumantra.*—The anger of both has been worked up. For,—The tremor caused by wrath shakes the knots of their hair Their eyes which slightly resemble the leaf of a red lotus are getting redder spontaneously.

And by the knitting of the eye-brows suddenly caused to dance or move, their face assumes the beauty of the moon with its spot made prominent, and also of a lotus with black bees hovering over it. (36).

*The two youths*—Let us then descend to a spot suitable for fighting.

[ *Exeunt omnes.* ]

End of the Fifth Act—called the Valour of the Princes.

# षष्ठोऽङ्कः ।

[विद्याधरो देवयोनिविशेषः विद्याधरी च विद्याधरश्च इति विद्याधरौ, पुमान् स्त्रिया इति पुंलिङ्गैकशेषः, तयोः मिथुनं युगलम् इति विद्याधरमिथुनम् उज्ज्वलेन भास्वरेण विमानेन देवयानेन प्रविशति ]।

विद्याधरः। अकाण्डे अनवसरे यः कलहः विवादः तेन प्रचण्डौ उग्रौ क्रोधोद्धतौ तयोः उद्द्योतिता दीपिता प्रकटिता इत्यर्थः चत्त्राणामियम् इति चात्त्री लक्ष्मीः श्रीः याभ्यां तौ उद्द्योतितचात्त्रलक्ष्मीकौ प्रकटितशौर्य्यसम्पदौ तयोः उद्द्योतितचात्त्र-लक्ष्मीकयोः नद्यृतश्चेति कः विकर्त्तनस्य सूर्य्यस्य कुलं वंशः तस्य कुमारौ तयोः सूर्य्यवंशकुमारयोः विक्रान्तानि चरितानि विक्रमकर्म्माणि। कीदृशानि कर्म्माणि इत्याह अद्भुतेन आश्चर्य्येण विस्मयवशादित्यर्थः उद्भान्ताः विह्वलाः देवाः सुराः असुराश्च यैः तानि अद्भुतोद्भान्तदेवासुराणि। लोकोत्तरशौर्य्यशालिनोरनयोः संग्रामव्यापारं दृष्टा देवाः असुराश्च विस्मयपरवशाः सम्भूताः॥

झणदिति—झणज्झणितकङ्कणक्वणितकिङ्किणीकं ध्वनद्गुरुगुणाटनीकृतकराल-कोलाहलम् धनुः वितत्य शरान् किरतोः अविरतस्फुरच्चूडयोः भुवनभीमम् विचित्रम् आयोधनम् अभिवर्त्तते॥ १॥

झणज्झणितं झणझणाकारशब्दयुक्तं यत् कङ्कणं करभूषणं तस्येव क्वणितं रणितं यासां ताः झणज्झणितकङ्कणक्वणिताः उपमानपूर्व्वपदो बहुव्रीहिरुत्तरपदलोपश्च, तथोक्ताः किङ्किण्यः क्षुद्रघण्टिकाः यस्य तत् झणज्झणितकङ्कणक्वणितकिङ्किणीकम्, नद्यृतश्चेति समासान्तः कः, ध्वनता शब्दायमानेन गुरुणा महता गुणेन शिञ्जिन्या अटनीभ्यां अग्रभागाभ्यां च कृतः उत्पादितः करालः भीषणः विकटः कोलाहलः शब्दः यस्य तत् ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम्, ज्यासङ्घर्षादुच्चरद्भीमध्वान-मुखरिताटनीकं धनुः चापं वितत्य विस्फार्य्य शरान् वाणान् किरतोः वर्षतोः, अविरतं निरन्तरम् स्फुरन्ती चञ्चला चूडा शिखा ययोः तयोः अविरतस्फुरच्चूडयोः शरक्षेपोत्-कम्पादनारतचञ्चलशिखयोः अनयोः कुमारयोः भुवनभीमं भुवनानां जगतां भीमं भयोत्पादकं विचित्रं विस्मयकरम् आयोधनम् संग्रामः अभिवर्त्तते प्रसरति॥ पृथ्वी वृत्तम्। जसौ जसयला वसुग्रह यतिश्च पृथ्वी गुरुः। अनुप्रासः शब्दालङ्कारः। झणज्झण: शब्दः जातः अस्य इति झणज्झणितम्।

ध्वमत्, गुरु इति च पदच्छेदो वा कार्य्यः तत्र पक्षे ध्वनत् शब्दायमानं गुरु विपुलं धनुः इति अन्वयः कार्य्यः। कॄ + शतृ = किरत्। वि + तन् + ल्यप् = वितत्य। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। इति अनुनासिक-लोपः ; ह्रस्वस्य क्ङति पिति इति तुक्। न विरतम् अविरतम्। वि + रम + क्त = विरत। स्फुर + शतृ = स्फुरत्। आ + युध् + ल्युट् = आयोधन। अटनी (अटनिः) धनुष्कोटी। कोटिरस्याटनी इत्यमरः।

विजृम्भितमिति—द्वयोः अपि मङ्गलाय स्तनयित्नोः इव दिव्यस्य दुन्दुभेः आमन्द्रं दुन्दुमायितम् विजृम्भितम् च ॥ २ ॥

द्वयोः उभयोरपि कुमारयोः मङ्गलाय कल्याणाय विजयार्थमित्यर्थः स्तनयित्नोः मेघस्य इव दिव्यस्य स्वर्गीयस्य दुन्दुभेः वाद्यविशेषस्य आमन्द्रं गम्भीरं दुन्दुमायितम् दुन्दुमे त्याकारः शब्दः इत्यर्थः विजृम्भितम् प्रादुर्भूतञ्च ; अनयोः कुमारयोः कल्याणार्थं देवा दिवि मङ्गल्यं दुन्दुभिशब्दं प्रवर्त्तयन्ति ॥

मन्द्रस्तु गम्भीरे इत्यमरः। भेरी स्त्री दुन्दुभिः पुमान् इति चामरः। दुं दुं इति शब्देन भाति इति दुन्दुभिः इति अमरटीकायां महेश्वरः। स्तनयित्नुर्बलाहकः। स्तनयतेः इत्नुः। अव्यक्तानुकरणाद्द्व्यजवरार्द्धादनितौ डाच्। डाचि विवक्षिते द्वे बहुलम्। इति दुन्दुमा ततः लोहितादि डाज्भ्यः क्यष् इति क्यष् प्रत्यये दुन्दुमाय इति नामधातुः तस्मात् भावे क्तः दुन्दुमायितम्। वि + जृम्भ + क्त ( कर्त्तरि ) = विजृम्भित।

तदिति—तत् तस्मात् प्रवीरयोः प्रकृष्टवीर्य्यशालिनोः अनयोः कुमारयोः उपरि इतिशेषः पुष्पाणां सुरकुसुमानां निपातः पातनं प्रवर्त्त्यताम् आरभ्यताम् क्रियताम् इत्यर्थः। कीदृशः पुष्पनिपातः इत्याह अविरलानि सान्द्राणि प्रभूतानि इत्यर्थः ललितानि मनोहराणि विकचानि विकस्वराणिप्रस्फुटितानीति यावत कनककमलानि हेमपद्मानि तैः कमनीया मनोहरा संहतिः सङ्घातः राशिरित्यर्थः यस्य सः अविरल-ललितविकचकनककमलकमनीयसंहतिः अमरतरूणां देवतरूणां पारिजातादीनां तरुणानि सद्यः समुज्जृम्भितानि यानि मणिमयानि मुकुलानि तेषां निकरस्य समूहस्य मकरन्दैः मधुभिः सुन्दरः चित्तहारी इति अमरतरुतरुणमणिमुकुलनिकरमकरन्द-सुन्दरः एवंविधः पुष्पनिपातः प्रवर्त्त्यताम् ॥ प्र + वृत् ( णिच् ) + लोट् ताम् ( कर्म्मणि ) = प्रवर्त्त्यताम्। सम् + हृन् + क्तिन् = संहति।

विद्याधरी। अकाण्डे अनवसरे विस्फुरितानां विलसन्तीनां तडितां विद्युतां छटाभिः प्रभाभिः कडारं पिङ्गलम् इति अकाण्डविस्फुरिततडिच्छटाकडारम् अकाल-विलसद्विद्युत्प्रभापिङ्गलम् अम्बरं व्योम सम्वृत्तम् जातम्। अम्बरं व्योम्नि वाससि ॥

विद्याधरः। त्वाष्ट्रेति—त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्त्तण्डज्योतिरुज्ज्वलः ललाटस्थ-नीललोहितचक्षुषः पुटभेदः किम् नु जातः इति शेषः॥ ३॥

त्वष्टुः विश्वकर्म्मणः इदमिति त्वाष्ट्रम् तथोक्तम् यन्त्रं शाणयन्त्रम्, तस्य भ्रमिः भ्रमणम् आवर्त्तनम् तया भ्रान्तः आवर्त्तितः यो मार्त्तण्डः सूर्य्यः तस्य ज्योतिः प्रभा तदिव उज्ज्वलः दीप्तिमान् भास्वरः इति यावत्, उपमानानि सामान्यवचनैरिति समासः। ललाटस्थं भालस्थितं नीललोहितस्य धूर्ज्जटेः यत् चक्षुः नयनं तत् ललाटस्थ-नीललोहितचक्षुः तस्य, स्मरारेस्तृतीयनयनस्य पुटभेदः पुटस्य आवरणस्य भेदः उन्मोचनम् इति पुटभेदः उन्मेषः इत्यर्थः किमद्य जातः। जगन्नाशाय किं हरस्य तृतीयं नयनमुन्मुक्तम्। तस्माच्च नयनादिदम् अत्युज्ज्वलम् अर्च्चिःपटलं, विश्वकर्म्मणा शाणोल्लिखितस्य रविमण्डलस्य वर्द्धितकान्ति तेजः इव निःसृत्य विश्वग्रसनाय व्योमतलमुद्भासयति किमु इति संशयालङ्कारः।

अत मार्कण्डेयपुराणम्—विश्वकर्म्मा उवाच—

तवातितेजसा व्याप्तमिदं रूपं सुदुःसहम्।
असहन्ती ततः संज्ञा वने चरति वै तपः॥
श्रुतं मे ब्रह्मणो वाक्यं यदि ते देव रोचते।
रूपं निवर्त्तयाम्येतत् तव कान्तं दिवस्पते॥

मार्कण्डेय उवाच—

यतो हि भास्वतो रूपं प्रागासीत् परिमण्डलम्।
ततस्तथेति तं प्राह त्वष्टारं भगवान् रविः॥
विश्वकर्म्मा त्वनुज्ञातः शाकद्वीपे विवस्वता।
भ्रमिमारोप्य तत्तेजःशातनायोपचक्रमे॥

... ... ...

एवं सूर्य्यस्तवं कुर्व्वन् विश्वकर्म्मा दिवस्पतेः।
तेजसः षोड़शं भागं मण्डलस्थ मधारयत्॥
शातितस्तेजसो भागो दशभिः पञ्चभिस्तथा।
अतीव कान्तिमच्चारु भानोरासीत् तदावपुः॥
शातितश्चास्य यत्तेजस्तेन चक्रं विनिर्म्मितम्।
विष्णोः शूलञ्च शर्व्वस्य शिविका धनदस्य च॥
दण्डः प्रेतपतेः शक्तिर्देवसेनापतेस्तथा।

A reference to this story may be found in the Raghuvansam of Kalidasa :—

अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥

The transcendent effulgence of the third eye of Siva has been very powerfully described by Bhavabhuti in his Malati Madhava :—

पश्चालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुलं कालयज्वा जुहाव ।
अर्चिर्निष्टप्तचूडाशशिगलितसुधासारझङ्कारिकोणम्
तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥

त्वच् + तृच् = त्वष्टृ । भ्रम् + इ ( उणादि ) = भ्रमि । भ्रम + क्त = भ्रान्त । मृताण्डाज्जातः इति मार्त्तण्डः । मृताण्ड + अण् = मार्त्तण्ड । The history of the word is thus given in the Markandeypurana—

ततस्तां कश्यपः प्राह किञ्चित्कोपप्लुताक्षरम् ।
किं मारयसि गर्भाण्डमिति नित्योपवासिनी ॥
सा च तं प्राह गर्भाण्ड मेतत् पश्यसि कोपन ।
न मारितं विपक्षाणां मृत्यवे तद्भविष्यति ॥

अथान्तरीक्षादाभाष्य कश्यपं मुनिसत्तमम् ।
सतोयमेघगम्भीरवागुवाचाशरीरिणी ॥
मारितं ते यतः प्रोक्तमेतदण्डं त्वया मुने ।
तस्मान् मुने सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति ॥

कण्ठे नीलः केशेषु लोहितः इति नीललोहितः । ललाटे तिष्ठति यत् तत् ललाटस्थम् । सुपिस्थः इति तिष्ठतेः क । 

आङ् इति स्मरणे अव्ययम् । अग्निर्देवता अस्य इति आग्नेयम् । अग्नि + ढक् = आग्नेय । सर्व्वत्राग्निकलिभ्यां ढग् वक्तव्यः । यस्य अस्त्रस्य अग्निच्छटानां ज्वालानां सम्पातः प्रसरः इत्यर्थः । अग्नेःच्छटाः इति अग्निच्छटाः ।

अवदग्धेति । सम्प्रति अवदग्धकर्बुरितकेतुचामरैः विमानमण्डलैः अपयातम् एव । इमाः शिखाः ध्वजांशुकपटाञ्चलेषु चञ्चत्कुसुम्भपुरणविभ्रमं दधति ॥ ४ ॥

केतवश्चामराणि च इति केतुचामराणि ; अवदग्धानि प्लुष्टानि कर्व्वुरितानि शवली-कृतानि च केतुचामराणि येषां तैः अवदग्धकर्व्वुरितकेतुचामरैः अग्निशिखासंस्पर्शात् अशतः प्लुष्टानि अतएव विचित्रवर्णानि जातानि येषां ध्वजचामराणि तथोक्तैः विमान-मण्डलैः देवयानसमूहैः सम्प्रति अपयातमिव पलायितमेव। समरदिदृक्षया समागतानां विबुधानां देवयोनीनाञ्च विमानानि अग्निशिखासम्पातदग्धानि दूरं प्रयातानि इत्यर्थः। इमाः शिखाः ज्वालाः ध्वजानां केतूनां अङ्कुशानां ध्वजदण्डाग्रे निहितानां सृणीनां पटाञ्चलेषु चेलप्रान्तेषु क्षणं मुहूर्त्तं व्याप्य कुङ्कुमच्छुरणस्यकुङ्कुमरागरञ्जनस्य विभ्रमं शोभां दधति धारयन्ति। अग्निशिखास्पृष्टाः ध्वजांशुकप्रान्ताः कौसुम्भरागरञ्जिता इव मुहूर्त्तं विभान्ति इत्यर्थः॥ निदर्शनालङ्कारः। मञ्जुभाषिणी वृत्तम्। सजसा जगौ च यदि मञ्जुभाषिणी इति लक्षणम्। कर्वुरं करोति इति कर्वुरयति। तत्करोतितदाचष्टे इति णिच् ततः कर्म्मणि क्तः। चित्रं किर्म्मीरकल्माषशवलैताश्चकर्वुरे इत्यमरः विमानानां मण्डलानि इति विमानमण्डलानि। अङ्कुशोऽस्त्री सृणिः स्त्रियामित्यमरः। अंशुकखण्ड विलम्बनार्थं ध्वजदण्डाग्रे निहितः अङ्कुशः ध्वजाङ्कुशः तस्य यः पटः तस्य अञ्चलाः प्रान्ताः तेषु ध्वजाङ्कुशपटाञ्चलेषु। वस्त्रस्यान्तो मतोऽञ्चलः इति हलायुधः। क्षणं कुङ्कुमच्छुरणम् इति क्षणाकुङ्कुमच्छुरणम्‚ अत्यन्तसंयोगेच इति द्वितीयासमासः कुङ्कुमेन च्छुरणम् इति कुङ्कुमच्छुरणम्। छुर + ल्युट् = छुरण। छुरति, चुच्छोर, अच्छुरीत्, छुरितः। विभ्रमः शोभा—शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीश्रीकान्तिविभ्रमाः इति हलायुधः। शी + ख = शिखा। शीङो ह्रस्वश्च इति ह्रस्वत्वम्, चात् खः। अथ कुङ्कुमं काश्मीरजन्माग्निशिखं वरं वाह्लीकपीतने रक्तसङ्कोचपिशुनं धीरं लोहित-चन्दनमित्यमरः।

आश्चर्य्यमिति—उच्चण्डानां भीषणानां वज्रखण्डानाम् अशनिच्छेदानाम् अवस्फोटाः भङ्गाः ते इव पटुः प्रबलः इति उच्चण्डवज्रखण्डावस्फोटपटुः। उत्सर्पिभिः ऊर्द्ध्वं प्रसरद्भिः स्फुलिङ्गैः अग्निकणैः गुरुः महान् उत्तालाः दुर्धर्षाः तुमुलं सङ्कुलं यथास्यात् तथा लेलिह्यानाः अत्यर्थं ग्रसमानाः याः ज्वालाः भासः तासां सम्भारेण निचयेन राशिना भैरवः भीषणः उषर्वुधः अनलः प्रवृत्तः प्रज्वलितः एव। उच्चण्डवज्रखण्डाव-स्फोटपटुतरस्फुलिङ्गविकृतिरितिपाठे उच्चण्डानां वज्रखण्डानाम् अवस्फोटाः इव पटुतरा ये स्फुलिङ्गाः अग्निकणाः तद्रूपाविकृतिर्यस्य स उच्चण्डवज्रखण्डावस्फोटपटुतरस्फुलिङ्ग-विकृतिः इति विग्रहः कार्य्यः। उत्तालाः उत्कटाः विकराला वा उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गमे॥ इति मेदिनी॥

उत् पूर्व्वात् तालयतेः घञ् = उत्तालः। यद्वा तालमुत्क्रान्ताः इति उत्तालाः। प्रादि तत्पुरुषः। लिह + यङ् = लेलिह्य ; लेलिह्य इति धातोः यङ्लुगन्तात् शानचि लेलिह्याना इति रूपसिद्धिः स्त्रियाम्। सम् + भृ + घञ् = सम्भार। उषसि बुध्यते

दीप्यते इत्यर्थः इति उषर्बुधः अग्निः। शोचिष्केश: उषर्बुधः इत्यमरः। विप्रु स्फुलिङ्गोऽग्निकणः इत्यमरः। अव + स्फुट + घञ् = अवस्फोट। उत् + सृप + णिनि = उत्सर्पिन्। ज्वल + ण = (कर्त्तरि) ज्वाल। स्त्रियां ज्वाला।

अस्य वह्नेः सन्तापः प्रचण्ड. अतिमहान् दु.सह: इत्यर्थः सर्व्वतः समन्तात् प्रसरति। अनेन सन्तापेन मम प्रियायाः गात्रं निपीडितं स्यात् अतः तन्निवारणाय अहम् आत्मनः गात्रेण अस्याः शरीरं आच्छाद्य आवृत्य इति यावत् विप्रकृष्टे स्थाने गच्छामि यत्र वह्नितापो नानुभूयते।

विद्याधरी। मुक्ता एव इति मौक्तिकानि (स्वार्थे ठक् प्रत्यय.) मौक्तिकानि फलानि इव इति मौक्तिकफलानि विमलानि विशुद्धानि यानि मौक्तिकफलानि, तानि इव शीतल: स्निग्धः अरूक्षः मसृणः श्लक्ष्णः मांसलः प्रभूतश्च इति विमलमौक्तिकफलशीतलस्निग्ध-मसृणमांसलः। उपमानानि सामान्यवचनैरिति समासः। तथोक्तेन नाथस्य देहस्य स्पर्शेन, आनन्देन हर्षेण मन्दम् ईषत् मुकुलिते मुद्रिते घूर्णती अनवस्थिते च लोचने नेत्रे यस्याः सा तस्याः आनन्दमन्दमुकुलितघूर्णल्लोचनायाः मम सन्तापः अनलज्वालास्पर्शजन्या पीडा, अन्तरितः दूरीकृतः। अन्तरम् अन्तर्धानं करोति इति अन्तरयति। तत् करोति तदाचष्टे इति णिच्, ततः कर्म्मणि क्तः। मुकुलम् अविकाशभावं करोति आपादयति इति मुकुलयति। ततः कर्म्मणि क्तः। मुकुलिते निमीलिते इत्यर्थः। घूर्ण + शतृ = घूर्णत्। घूर्णति, घूर्णते ; जुघूर्ण, जुघूर्णे ; अघूर्णीत् अघूर्णिष्ट। घूर्णितः।

विद्याधरः। अकिञ्चिदपि......श्लोकोऽयं तृतीये अङ्के व्याख्यातः॥ ५॥

विद्याधरी। अविरलं निरन्तरं मुहुर्मुहुरित्यर्थः विलोलानां चञ्चलानां घूर्णन्तीनां अव्यवस्थितानाञ्च विद्युल्लतानां तड़िद्दाम्नां विलासैः स्फुरणैः मण्डिताः अलङ्कृताः तैः अविरलविलोलघूर्णद्विद्युल्लताविलासमण्डितैः मुहुःस्फुरच्चञ्चलचपलादामशोभितैः मत्तस्य रत्युत्कण्ठस्य मयूरस्य कण्ठःइव श्यामला: तैः मत्तमयूरकण्ठश्यामलैः मदमत्त-कलापिकण्ठनीलैः जलधरैः मेघैः नभस्तलं व्योमतलम् अवस्तीर्य्यते आच्छाद्यते। कथं हठात् सान्द्रैर्नीलैर्वारिदैरम्बरमावृतम्, मुहुश्चपलास्फुरणञ्च दृश्यते॥ अव + स्तृ + लट् ते ( कर्म्मणि ) = अवस्तीर्य्यते। स्तृधातोः कर्म्मणि स्तर्य्यते इति रूपम्॥ वि + लस् + घञ् = विलास।

विद्याधरः। हन्त इति हर्षे अव्ययम्। हर्षातिरेकद्योतनार्थम् द्विर्वचनम्॥ कुमारेण लवेन प्रयुक्तम् आग्नेयास्त्रप्रतीकाराय क्षिप्तं यद् वारुणं वरुणदैवताकम् अस्त्रम आयुधम् तस्य प्रभावः सामर्थ्यं खलु अयं जलधराविर्भावः। वारुणास्त्र-प्रयोगात् इष्टार्थं मेघानामुदयः। वरुणः दैवतमस्य इति वारुणम्। वरुण + अण् = वारुण। अविरलं निरन्तरं प्रवृत्तानि प्रक्रान्तानि इत्यर्थः वारिधारासहस्राणि नभस-

लात् धारासारैःगलन्ति अम्भःप्रषन्ति इत्यर्थः तेषां सम्पातैः पतनैः पावकास्त्रमाग्नेयमस्त्रं-प्रशान्तं प्रशमितम् निर्व्वापितमित्यर्थः। प्र + शम् (णिच्) + क्त (कर्म्मणि) = प्रशान्त। Alternative form प्रशमित। Similar instances दान्त, (दमित), पूर्ण (पूरित), ज्ञापित (ज्ञप्त) पावकः दैवतमस्य इति पावकं तच्च तदस्त्रञ्चेति पावकास्त्रम्। यद्वा पावकस्य अस्त्रमिति पावकास्त्रम्। सम्बन्धसामान्ये विहितया षष्ठ्या समासः॥

विद्याधरः। हन्त इति खेदे अव्ययम्। अत्र भयजनितसम्भ्रमद्योतनार्थं द्विर्वचनम्। मात्रां परिमाणमतिक्रान्तमिति अतिमात्रम् अतिप्रमाणम्। अत्यादयः क्रान्ताद्यर्थे द्वितीयया वा समस्यन्ते। इति समासः। यद्वा अतिक्रान्ता मात्रा येन तत् अतिमात्रम् प्रादिभ्यो धातुजस्येति वहुव्रीहिः॥ प्रवलानाम् अत्युत्कटानां वाताव-लीनां मरुत्समूहानां वात्यानामित्यर्थः क्षोभेण सञ्चलनेन गम्भीरं यथास्यात् तथा गुणगुणायमानाः गुणगुण इति अव्यक्तं भीमं ध्वानं कुर्व्वन्तः ये मेघाः तैः मेदुरं स्निग्धं निविड़ मित्यर्थः अन्धकारं ध्वान्तं तेन तत्र वा नीरन्ध्रं निरवकाशं यथा तथा निवद्धं निरुद्धम् इति प्रवलवातावलिक्षोभगम्भीरगुणगुणायमानमेघमेदुरान्धकारनीरन्ध्र-निरुद्धम् सहचरभूतैः प्रवलैः मरुद्भिः क्षुभितानां गर्ज्जताञ्च निविड़ानां जलदजालानां सर्व्वत्र व्यापनात् नीलकान्तपटेनइव अन्धतमसेन समन्तादावृतम् इत्यर्थः। एकेन वारेण एकेनैव उद्यमेन इत्यर्थः विश्वस्य ब्रह्माण्डस्य ग्रसने ग्रासे कवलीकरणे विकचः उन्मुक्तः व्यात्त इति यावत् यः विकरालः भीषणः कालकण्ठस्य तमोमूर्त्तेः रुद्रस्य कण्ठरूपः कन्दरः गलविवररूप गह्वरम तत्र विवर्त्तमानम् अवतिष्ठमानम् विचेष्टमान-मित्यर्थः विश्वसंहाराय व्यात्ताननस्य महाकालरूपिणः रुद्रस्य आननद्वारेण गलविवरं प्रविष्टमिव इत्यर्थः। युगस्य अन्ते कल्पक्षये इत्यर्थः योगः चित्तवृत्तिनिरोधः स एव निद्रा, निद्रेव इत्यर्थः, इति युगान्तयोगनिद्रा तया निरुद्धानि संवृतानि सर्व्वाणि द्वाराणि नेत्रश्रुतिमुखादिरूपाः प्रवेशनिर्गममार्गाः यस्य तत् युगान्तयोगनिद्रानिरुद्धसर्व्वद्वारं तथोक्तं नारायणस्य भगवतः विष्णोः उदरम् तत्र निविष्टं सविकाशमवस्थितम् इव भूतानां प्राणिनां जातम् ओघः प्रवेपते कम्पते। निविडजलदोपरोधजन्यतमः-सङ्घातप्रादुर्भावात् किमिति अकाण्डे कल्पक्षयः समुपस्थितः, किं रुद्रस्य कण्ठविवरं प्रविशामः उत नारायणकुक्षिम् इत्युत्प्रेक्षमाणाः भूतग्रामा महता भयेन प्रकम्पन्ते इत्यर्थः।

वातानाम् आवलिः इति वातावलिः। गुणगुणायमानः गुण इत्यव्यक्तशब्दस्य अनुकरणार्थे डाच्; ततः द्वित्वे, डाच्प्रत्ययात् परं क्यष् प्रत्ययेकृते गुणगुणाय इति नामधातुः ततः शानच्। मिद + घुरच् = मेदुर। भञ्जभासमिदो घुरच्। निः न सन्ति इत्यर्थः रन्ध्राणि विवराणि यस्मिन् कर्म्मणि तद् यथा तथा नीरन्ध्रम् ढ्रलोपे

पूर्व्वस्य अत: दीर्घ:। ग्रस् + ल्युट् = ग्रसन। वि + वृत् + शानच् ( कर्त्तरि ) = विवर्त्तमान। नि + द्रा + अङ् = निद्रा। नि + विश + क्त ( कर्त्तरि ) = निविष्ट। जात means crowd or multitude. जातं जात्यौघजन्मसु।

वायुर्देवतमस्य इति वायव्यम्। वायुदेवताकम् अस्त्रम् ईरितम् प्रयुक्तम्, प्रक्षिप्तं इत्यर्थ:। वाय्वृतुपित्रुषसो यत्। वायव्यम्, ऋतव्यम् पित्र्यम्, उषस्यम्।

विद्येति। विद्याकल्पेन मरुता भूयसाम् अपि मेघानाम् विवर्त्तानां ब्रह्मणि इव क्वापि विप्रलय: कृत: ॥ ६ ॥

विद्या परा विद्या आत्मज्ञानमित्यर्थ: तत्तुल्येन, विद्याकल्पेन ईषदसमाप्तौ-कल्पप्प्रत्यय: मरुता वायुना भूयसां प्रभूतानाम् अपि मेघानां घनानां, विवर्त्तानां परमार्थत: सत्ताशून्यानां नामरूपादिभेदानां जगत्प्रपञ्चस्य इत्यर्थ: ब्रह्मणि सच्चिदानन्दस्वरूपे अद्वैततत्त्वे इव क्वापि कुत्रापि विप्रलय: अन्तर्धानं कृत: ॥ यथा सद्गुरूपदेशात तत्त्वमस्यादिमहावाक्यानां मुहुरालोचनया समुत्पन्ने अद्वयविशुद्ध-ब्रह्मज्ञाने नानात्वं भजमानस्य जगत्प्रपञ्चस्य पृथक्सत्ताविषयको बोध: विलीयते, भेदबुद्धिरन्तर्हिता भवति, जगदित्याकारकं ज्ञानमपैति ; केवलं निरञ्जनं ब्रह्मैवाव-तिष्ठते ; तथा अस्य वायव्यास्त्रस्य प्रभावेण असंख्येया मेघराजिरन्तर्धानं गता सुप्रसन्नं निर्लेपं नभ: परिदृश्यते ॥ इत्यर्थ:। उपमालङ्कार:।

बहु + ईयसुन् = भूयस्। The affix कल्पप् is like इव, वत् यथा, वा a sign of the figure उपमा or simile. वि + वृत् + घञ् = विवर्त्त। or वि + वृत् + अच् (कर्त्तरि) = विवर्त्त। विवर्त्तन्ते इति विवर्त्ता:।

सतत्त्वतोऽन्यथाप्रथा विकार इत्युदाहृत:।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरित: ॥

विवर्त्त = phenomenal change. विकार = noumenal change.

वि + प्र + ली + अच् = विप्रलय। विद्या here means the knowledge of the Supreme Soul or Brahman. विद् + क्यप् = विद्या।

*N.B.* In the foregoing speech of the celestial being विद्याधर, Bhavabhuti refers to the different views of the Puranas as to the mode of Universal Destruction. It is difficult to say with certainty whether the author borrowed the idea and to a certain extent the phraseology from Banbhatta's Kadambari or Banbhatta borrowed them from Bhavabhuti. In the couplet विद्याकल्पेन etc. he refers to the Vedanta doctrine that the world has no real existence ; it is an illusion due to ignorance or

*avidya.* There is but one unchangeable, eternal, infinite Being, and that Being is Brahman, transcending time and space. It is only through ignorance that we think that Being to be projected into space and conditioned by time, containing in itself the promise and potency of an infinite variety of existence, just as in a dark night one mistakes a piece of rope for a snake.

It is generally believed that this form of the absolute monistic theory was disseminated by the teachings of the great scholiast Sankara, whom, on the above view of the case, Bhavabhuti must have been posterior to.

विद्याधरी। सम्भ्रमेण त्वरया सह वर्त्तमानं यथा तथा ससम्भ्रमम् व्यग्रं यथा तथा उत्क्षिप्तः ऊर्द्ध्वं प्रेरितः यः करः हस्तः तेन करेण भ्रमितः प्रेङ्खोलितः घूर्णितः इत्यर्थः पट्टकस्य वस्त्रस्य अञ्चलः प्रान्तः येन सः ससम्भ्रमोत्क्षिप्तकरभ्रमितपट्टकाञ्चलः, संग्रामनिरतयोः कुमारयोः दृष्टिमाक्रष्टुं सत्वर करेण उत्तरीयाञ्चलं भ्रमयन् इत्यर्थः। मधुरेण स्नेहनिष्यन्दिना प्रीतिपूर्णेन इत्यर्थः वचनेन करणेन प्रतिषिद्धः निषिद्धः निवारित इति यावत् युद्धव्यापारः संग्रामचेष्टा येन स मधुरवचनप्रतिषिद्धयुद्धव्यापारः स्नेहपूर्णैः वचोभिः रणकर्म्मणो निवारयन्, कोऽय महानुभवः अनयोः कुमारयोः अन्तरे मध्ये विमानवरं श्रेष्ठं देवयानं पुष्पकं अवतारयति अवरोहयति।

भ्रम् ( णिच् ) + क्त (कर्म्मणि) = भ्रमित। प्रति + सिध् + क्त ( कर्म्मणि ) = प्रतिषिद्ध। युध् + क्त ( भावे ) = युद्ध। वि + आङ् + पारि + अच् = व्यापार। अव + तॄ ( णिच् ) + लट् ति = अवतारयति।

विद्याधरः। शब्दमिति। महापुरुषसंविहितं शब्दं निशम्य तद्गौरवात् समुपसंहृतसम्प्रहारः लवः शान्तः, चन्द्रकेतुः च प्रणत एव। सुतसङ्गमनेन राज्ञः कल्याणम् अस्तु॥

महान् पुरुषः इति महापुरुषः तेन संविहितं कृतमुच्चारितम् इत्यर्थः महानुभवेन लोकोत्तरप्रभावशालिना पुरुषेण उच्चारितं वाक्यं निशम्य श्रुत्वा, निशाम्यति इत्यपि श्रवणे इति भट्टमल्लः, तथाच वामनः निशम्यनिशमय्यशब्दौ प्रकृतिभेदात्, तस्य महापुरुषस्य गौरवं महिमातिशयः तस्मात् तद्गौरवात महापुरुषे भक्तिवशादित्यर्थः, सर्व्वनाम्ना अनुसन्धिर्वृत्तिच्छन्नस्य इति वामनोक्तेः तच्छब्देन समासान्तर्गतस्य महापुरुषशब्दस्य परामर्शः यद्वा तस्मिन् शब्दे गौरवं श्रद्धातिशयः भक्तिरित्यर्थः तस्मात् तद्गौरवात्

समुपसंहृत: समाप्तिं नीत: सम्प्रहार: संग्राम: रणकर्म इत्यर्थ: येन स समुपसंहृत-सम्प्रहार: त्यक्तरणव्यापार: युद्धात् विरत इत्यर्थ: लव: शान्त: शममुपपन्न: रणोत्साहं क्रोधौद्धत्यञ्च विहाय विनयनम्र: संवृत्त: इत्यर्थ: चन्द्रकेतुश्च प्रणत एव, रामपादमूले प्रलुठित इत्यर्थ:। सुतयो: पुत्रयो: कुशलवयोरित्यर्थ: सङ्गमनं समासादनं इति सुतसङ्गमनं तेन, यद्वा सुताभ्यां पुत्राभ्यां सह सङ्गमनं मेलनम् इति सुतसङ्गमनम् सुप्सुपेति समास:, तेन राज्ञ: रामस्य कल्याणं मङ्गलम् अस्तु। आशिषि लोट् ॥ वसन्ततिलकं वृत्तम्।

, सम् + वि + धा + क्त ( कर्म्मणि ) = संविहित, कृत। The general has been put here for the particular. करोति इति सामान्यार्थाभिधायकस्य विदधाते: उच्चारणरूपे विशिष्टे अर्थे पर्य्यवसानम्। नि + शम् + ल्यप् = निशम्य। सम् + उप + सम् + हृ + क्त ( कर्म्मणि ) = समुपसंहृत। सम् + प्र + हृ + घञ् ( अधिकरणे ) = सम्प्रहार। शम् + क्त ( कर्त्तरि ) = शान्त।

অথ ষষ্ঠ অঙ্ক।

[ অনন্তর উজ্জ্বল বিমানে ( আরূঢ ) বিদ্যাধরমিথুনের প্রবেশ ]

বিদ্যাধর। অনবসরপ্রবৃত্ত কলহবশতঃ প্রচণ্ডমূর্ত্তি, ক্ষাত্রিয়তেজোলক্ষ্মীর প্রকাশে দীপ্যমানকান্তি, সূর্য্যবংশসম্ভূত এই কুমারদ্বয়ের কি বিক্রম? ইহাদিগের বিক্রমদর্শনে দেবাসুরগণ বিস্ময়বিহ্বল হইয়া পড়িয়াছেন। প্রিয়ে, দেখ, দেখ ;—

যাহার প্রান্তদ্বয় গুণসংযোগে করাল কোলাহল উৎপাদন করিতেছে, যাহা কঙ্কণের ঝণৎকারের ন্যায় নিক্বণবিশিষ্টকিঙ্কিণীজালমণ্ডিত, তাদৃশ শব্দায়মান বিপুল কোদণ্ড বিস্ফারিত করিয়া নিরন্তর শরবর্ষণে নিরত, চঞ্চলচূড় এই কুমারদ্বয়ের লোকবিত্রাসন, বিস্ময়কর যুদ্ধ উত্তরোত্তর বৃদ্ধি পাইতেছে ॥ ১ ॥

উভয়েরই মঙ্গলের জন্য মেঘগর্জ্জনের ন্যায় আমন্দ্র দিব্য দুন্দুভিনাদ প্রাদুর্ভূত হইতেছে ॥ ২ ॥

অতএব এই প্রবীরদ্বয়ের উপরি দেবতরুর তরুণ মণিময় মুকুলসমূহের মকরন্দসৌরভামোদী, বিকসিত প্রভৃত সুন্দর কনককমলশ্রেণীসনাথ মনোহর পুষ্পরাশি বর্ষিত কর।

বিদ্যাধরী। হঠাৎ অম্বরতল অনবসরে স্ফুরিত সৌদামনীচ্ছটায় পিঙ্গলবর্ণ হইল কেন?

বিদ্যাধর। তবে কি অদ্য বিশ্বকর্ম্মার শাণযন্ত্রে আবর্ত্তিত রবিমণ্ডলের জ্যোতির ন্যায় সমুজ্জ্বল, নীললোহিতের ললাটস্থিত তৃতীয় নয়নের আবরণোন্মোচন হইল ॥ ৩ ॥

[ চিন্তা করিয়া ] হঁা বুঝিয়াছি, বৎস চন্দ্রকেতু আগ্নেয় অস্ত্র প্রযুক্ত করিয়াছে ; সেই অস্ত্রনির্গত অগ্নিচ্ছটা সম্পতিত হইতেছে। সম্প্রতি -

ধ্বজবসন ও চামরসমূহ দগ্ধ ও কর্ব্বুরিত হওয়াতে বিমান সমূহ দূরে প্রস্থান করিতেছে। এবং ঐ বিমানগুলির ধ্বজদণ্ডাগ্রনিহিত অঙ্কুশবিলম্বী চেলাঞ্চলে অগ্নিশিখা পতিত হইয়া ক্ষণকালের জন্য কুঙ্কুমচ্ছুরণের শোভাসম্পাদন করিতেছে ॥ ৪ ॥

আশ্চর্য্য! উচ্চণ্ড বজ্রখণ্ডের প্রস্ফুটনের ন্যায় পটু, নিঃসৃত স্ফুলিঙ্গমালাসঙ্কুল,

লোলজিহ্বার ন্যায় লেলিহান উত্তাল তুমুল শিখাসমূহে ভীষণাকৃতি অনল প্রজ্বলিত হইয়া উঠিল। ইহার প্রচণ্ড তাপ সর্ব্বত্র পরিব্যাপ্ত হইয়া পড়িতেছে। অতএব প্রিয়াকে নিজগাত্র দ্বারা আচ্ছাদিত করিয়া দূরে প্রস্থান করি। [ সেইরূপ করিল ]

বিদ্যাধরী। সৌভাগ্যক্রমে বিমলমুক্তাফলশীতল, স্নিগ্ধমসৃণ মাংসল নাথদেহস্পর্শে সন্তাপ বিদূরিত হইয়াছে,এবং আনন্দে আমার নয়নদ্বয় ঈষৎ মুকুলিতও ঘূর্ণিত হইতেছে।

বিদ্যাধর। অয়ি প্রিয়ে, এ বিষয়ে আমি তোমার কি উপকার করিয়াছি। অথবা প্রিয়জন কিছু না করিয়াও সুখসন্তান দ্বারা দুঃখরাশি দূর করিয়া দেয়। যে যাহার প্রিয় সে তাহার পক্ষে এক অলৌকিক দ্রব্য ॥ ৫ ॥

বিদ্যাধরী। নিরন্তর স্ফুরিত ও ঘূর্ণমান তড়িল্লতার প্রকাশে সমুদ্ভাসিত, মত্ত ময়ূরের কণ্ঠের ন্যায় শ্যামল জলধরমালা ব্যোমতল আচ্ছন্ন করিতেছে কেন ?

বিদ্যাধর। সাধু! সাধু! কুমার লব বরুণাস্ত্র প্রয়োগ করিয়াছে ; ইহা সেই অস্ত্রের প্রভাব ; অবিরলপ্রবৃত্ত বৃষ্টিধারাসহস্রের সম্পাতে আগ্নেয়াস্ত্র নির্ব্বাণ হইয়া গেল দেখিতেছি।

বিদ্যাধরী। আমার পক্ষে ইহা বড়ই প্রিয়, বড়ই প্রিয়।

বিদ্যাধর। হায়, হায় ; সকল বিষয়ই অতিমাত্র হইলে দোষের হেতু হইয়া পড়ে। যে হেতু প্রবল বাতবেগে বিকম্পিত গম্ভীর গুম্ গুম্ শব্দে নিনাদিত মেঘমালা দ্বারা ঘনীভূত অন্ধকারে নীরন্ধ্রভাবে নিরুদ্ধ নিখিল প্রাণিবর্গ যেন একবারে সমস্ত বিশ্বগ্রাসে প্রবৃত্ত নীলকণ্ঠের কণ্ঠকন্দরাভ্যন্তরে প্রবিষ্টের ন্যায়, অথবা যুগান্তে যোগনিদ্রাভিভূত বিষ্ণুর নিরুদ্ধসর্ব্বদ্বার কুক্ষিমধ্যগতের ন্যায় কম্পিত হইতেছে।

সাধু! বৎস, চন্দ্রকেতু, সাধু! উপযুক্ত অবসরেই বায়ব্য অস্ত্রপ্রয়োগ করিয়াছ।

কারণ, এই বহুতর মায়াপ্রপঞ্চ জগদ্রূপ বিবর্ত্ত তত্ত্বজ্ঞানোদয়ে যেরূপ ব্রহ্মে বিলীন হইয়া যায়, সেইরূপ এই প্রভূত মেঘরাজি বায়ুদ্বারা বিতাড়িত হইয়া কোথায় অন্তর্হিত হইয়া গেল ॥ ৬ ॥

বিদ্যাধরী। নাথ, সসম্ভ্রমে হস্তোত্তোলন পূর্ব্বক বস্ত্রাঞ্চল ঘূর্ণিত করিয়া, এবং মধুর বাক্যে যুদ্ধব্যাপার নিষিদ্ধ করিয়া কে এই কুমারদ্বয়ের মধ্যে বিমানবর পুষ্পক অবতীর্ণ করাইতেছেন।

বিদ্যাধর। [ অবলোকন করিয়া ] উনি রঘুপতি রামচন্দ্র, শম্বুকের বধসাধন করিয়া প্রতিনিবৃত্ত হইতেছেন ॥

মহাপুরুষোচ্চারিত শব্দ শ্রবণ করিয়া, তাঁহার প্রতি শ্রদ্ধা ও ভক্তিবশতঃ লব সংগ্রামব্যাপার হইতে নিবৃত্ত হইয়া শান্তভাব অবলম্বন করিয়াছে। চন্দ্রকেতু উঁহার চরণপ্রান্তে প্রণত হইয়াছে। পুত্রদ্বয়ের সহিত মিলিত হইয়া নৃপতি কল্যাণলাভ করুন ॥ ৭ ॥

অতএব এস্থান হইতে নির্গত হওয়া যাউক। [ উভয়ে নিক্রান্ত ]

বিষ্কম্ভক ॥

## SIXTH ACT.

[ *Then Enter in a bright aerial car a pair of Vidyadharas—or Demigods.* ]

*Vidyadhara.*—Oh! how wonderful are the heroic deeds of these

two princes of the Solar race, who have become very fierce by reason of a sudden quarrel, and who have displayed at best the glory and splendour of the military tribe ! The gods and the demons are confounded with amazement at their deeds For, look, my love, look !

There is waxing the wonderful combat, terrific to the world, between the two princes whose locks of hair are constantly shaking, and who are showering arrows, after having drawn their heavy and clanging bows, the strings of which in friction with the points have set up a fearful noise, and the tiny bells of which are ringing like the jingling wristlets (of a female). (1).

And for the welfare of both of them the deep and sonorous sound of the celestial drum proceeds like the rumbling of the cloud. (2).

Let therefore a continuous shower of (celestial) flowers, with their masses rendered attractive by a thick intermixing of beautiful and full-blown golden lotuses, and charming on account of the fragrant honey of numerous gem-like fresh buds of the trees of the immortals,—be poured upon these two eminent heroes.

*Vidyadhari.*—But how is it that the sky has become tawny, as though with the glow of lightning flashing all on a sudden ?

*Vidyadhara.*—Can it be that to-day has been opened the lid of the eye on the forehead of the blue-necked and red-haired Siva, glowing as the lustre of the Sun whirled round and pruned by the lathe of the divine architect Vulcan ? (3)

[*Reflecting*].—Ah ! I see it. The dear boy Chandraketu has discharged the fiery missile ; and these flames of fire are proceeding therefrom.

Now indeed —

The multitudes of aerial cars, with their chowries and banners scorched slightly and thus chequered, have retreated (to a safe place). And these flames have put forth for a moment the beauty and splendour of saffron paint on the borders of clothes attached to hooks on the flag-staff. (4).

Wonderful ! The fire, violent as the fierce thunder-bolt burst-

ing forth into pieces, mighty with sparks proceeding upwards, and terrific with masses of lofty, tumultuous and spreading (tongue-like, licking) flames, has already been raging. Fierce is its heat on all sides. I will therefore screen my beloved wife with my own body and remove to a great distacne. [*Does the same*].

*Vidyadhari.*—Luckily the scorching heat of the fire is warded off by the touch of my husband's body, cool, smooth, soft and massive like that of pure pearls, and I have my eyes slightly closed and rolling on account of joy.

*Vidyadhara.*—My love, what have I done? Or—one who is a beloved person is some indescribable possession or treasure to him whose beloved he is. For though he does nothing, he removes all grief and sorrow by ministering to happiness and pleasure. (५).

*Vidyadhari.*—How is it that the sky is being overcast with clouds, dark as the neck of excited peacocks, and bedecked with the flashings of constantly restless and rolling lightning?

*Vidyadhara.*—Oh! Joy! It is the effect of the missile presided over by the water-god, which has been discharged by the Prince Lava. How now! The fiery missile has been extinguished by the shower of thousands of streams of continuously pouring rains.

*Vidyadhari.*—It is agreeable to me; it is agreeable to me.

*Vidyadhara.*—Alas! Alas!

All things when carried to excess become a source of evil and harm. For the entire animal creation is trembling, being completely enveloped in the thick darkness caused by clouds sending forth a deep booming sound on account of agitation due to a series of violent storms;—as if it is rolling within the dismal cavity of the dark-necked Siva's throat opened to swallow up all at once the whole universe; or as if it has been placed inside the belly of Narayana, all the outlets of which have been shut up and closed by the sleep of trance at the end of a mundane existence. Well done! Chandraketu, well done! just at the proper time have you employed the weapon presided over by the wind-god.

For—the clouds, though many, have all been made by the wind to disappear in some unknown region, as the illusions (of *Maya* or nescience, that is to say, the world) are caused by right know- to disappear (and lose their entity) in Brahman. (6).

*Vidyadhari.*—My husband, who is this person that waving the end of his cloth by means of his hand raised in haste, forbids with sweet words from a distance the work of fighting, and causes a noble aerial car to descend between the two princes ?

*Vidyadhara.*—[*Beholding*]. He is the chief of Raghu's race, just returned from the (mission) of killing Sambuka.

Having heard the words uttered by a great personage, Lava out of respect for him, has desisted from fighting and become calm. Chandraketu has already prostrated himself (at his feet). May the king be blessed by his union with his sons. (7).

Let us then retire from this place

[*Exeunt.*]

Prelude to the Sixth Act.

रामः। दिनकरेति—हे दिनकरकुलचन्द्र चन्द्रकेतो, सरभसम् एहि दृढं परिष्वजस्व मामिति शेषः, तव तुहिनशकलशीतलैः अङ्गैः मम चित्तदाहः अपि शमम् उपयातु ॥ ८ ॥

पुष्पकात् विमानात् अवतरन् अवरोहन् रामः चन्द्रकेतुमाभाष्य ब्रूते—दिनकरस्य सूर्य्यस्य कुलं इति दिनकरकुलं तस्य चन्द्रः चन्द्रवदाह्लादकः इति दिनकरकुलचन्द्रः तत्-सम्बोधने हे दिनकरकुलचन्द्र सूर्य्यान्वयाह्लादक, चन्द्रकेतो रभसेन वेगेन सह वर्त्तते इति सरभसम्, रभसोवेगहर्षयोः, एहि मदन्तिकमागच्छ। दृढं गाढं निर्भरमिति यावत् परिष्वजस्व परिरभस्व आलिङ्ग इति यावत् मामितिशेषः। तुहिनस्य हिमस्य शकलानि खण्डानि इति तुहिनशकलानि, तानिइव शीतलानि इति तुहिनशकल-शीतलानि तैः हिमानीच्छेदशीतैः तव अङ्गैः गात्रैः मम चित्तस्य दाहः सन्तापः इति चित्तदाहः मनःसन्तापः सः अपि शमम् शान्तिम् उपयातु प्राप्नोतु ॥ अपिरत्र भिन्नक्रमे चित्तदाहः अपि ; न केवलं गात्रसन्तापः अपितु चित्तस्य सन्तापः नाशमुपैतु इत्यर्थः। यद्वा ममापि, तीव्रेण मनःखेदेन नितरां सन्तप्तस्यापि मम तापोपशमने पटुस्ते गात्रस्पर्शः इति अपिकारेण द्योत्यते ॥ ८ ॥

पुष्पिताग्रा वृत्तम्। अयुजिनयुगरेफतोयकारो युजितु नजौ जरगाश्च पुष्पिताग्रा इति लक्षणम् ॥

रामः। [उत्थाप्य प्रणतं चन्द्रकेतुम् उत्तोल्य, उत् + स्था (णिच्) ल्यप् = उत्थाप्य ] दिव्यानि अस्त्राणि आयुधानि तेषां धरः इति दिव्यास्त्रधरः, षष्ठीसमासः ; तथोक्तः देहः शरीरं यस्य स दिव्यास्त्रधरःदेहः तस्य तव कुशलम् क्षेमम् अपि। अपि इति,प्रश्ने। यद्वा दिव्यास्त्रधरः देहः इति दिव्यास्त्रधरदेहः कर्म्मधारयः। तस्य देहस्य कुशलम् मङ्गलम् किमु संग्रामे आयुधपातेन स देहः न क्षतः किमु। अत पक्षे तव इत्यस्य देहस्य इति पदेन सह अन्वयः।

चन्द्रकेतुः। अत्यद्भुता अतिविस्मयावहा क्रिया रणकर्म्म यस्य सः अत्यद्भुतक्रियः तस्य, लोकोत्तरप्रभावस्य रणदुर्म्मदस्य इति भावः प्रियं हृद्यं दर्शनं मूर्त्तिः इत्यर्थः यस्य तस्य प्रियदर्शनस्य हृदयङ्गममूर्त्तेः अस्य लाभः प्राप्तिः स एव अभ्युदयः मङ्गलं तेन लाभाभ्युदयेन मम क्षेमं वर्त्तते। महान् वीरः इति महावीरः प्रशस्तः महावीरः इति महावीरप्रकाण्डं तत् अमुं कुमारं लवं मामिव शिवेन मङ्गलैषिणा स्नेहप्रचुरेण चक्षुषा आलोकयतु। मत्तो मदपेक्षया विशेषेण आधिक्येन वा उपलक्षितेन प्रीतिस्निग्ध-चक्षुषा अमुं पश्यतु॥ प्रशस्तः महावीरः इति विग्रहे महावीरप्रकाण्डम्। प्रशंसा-वचनैश्च इति नित्यसमासः। मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौप्रशस्तवाचकान्य-मूनि इत्यमरः। एते तु पञ्च नित्यं द्रव्ये एव लिङ्गान्तरेण सामानाधिकरण्येऽपि स्वलिङ्गं न जहति इति अमरटीकायां महेश्वरः। According to अमर प्रकाण्ड is neuter : but the word is used in the masculine gender also. प्रकाण्डो नस्त्री विटपे मूलशाखान्तरे तरोः। शस्ते इति मेदिनी। अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयोरितिरभसः॥ मत्तः इति पञ्चम्यास्तसिल्। पञ्चमी विभक्ते इति पञ्चमी। विशेषेण इत्यत्र प्रकृत्यादिभ्यश्चोपसंख्यानमिति तृतीया। चक्षुषा इत्यत्र जात्यभिप्रायेण एकवचनम॥

रामः। अतिगम्भीरा, गाम्भीर्य्ययुक्ता, अक्षोभ्या अप्रधृष्या इति यावत् मधुरा हृदयङ्गमा कल्याणी मङ्गलास्पदमित्यर्थः आकृतिः मूर्त्तिः यस्य सः अतिगम्भीरमधुर-कल्याणाकृतिः। वयसि तुल्ये वर्यास इत्यर्थः भवः इति वयस्यः सुहृत। अज् + असुन् = वयस्। वयस् + यत = वयस्य।

त्रातुमिति—लोकान् त्रातुं कायवान परिणतः अस्त्रवेदः इव, ब्रह्मकोषस्य गुप्तै सम्यं श्रितः क्षात्त्रः धर्म्मः इव, सामर्थ्यानां समुदयः इव गुणानां वा सञ्चयः इव जगत्पुण्यनिर्म्माणराशिः आविर्भूय स्थित इव॥ ९॥

लोकान् भुवनानि त्रातुं रक्षितुम् अनिष्टापातात् परिपातुं लोकस्तु भुवने जने इत्यमरः, कायः शरीरं मूर्त्तिरिति यावत् विद्यते यस्य स कायवान् शरीरी परिणतः सम्पन्नः कृतशरीरपरिग्रहः इत्यर्थः अस्त्रवेदः धनुर्व्वेदः इव, जगद्रक्षार्थे शरीरमास्थाय

भुवि प्रकाशमाना अस्त्रविद्येव, ब्रह्मवेदः वेदस्तत्त्वं तपोब्रह्मइत्यमरः तद्देव कोषः रत्नौघः कोषोऽस्त्रीकुड्मले खड्गपिधानेऽर्थौघदिव्ययोरित्यमरः, इति ब्रह्मकोषः तस्य गुप्त्यै वेदरूपस्य रत्नस्य रक्षार्थं तनुं शरीरं श्रितः आस्थितः क्षात्रः धर्म्मः क्षत्रियस्य धर्म्मः पराक्रमः इव, "आत्मकर्म्मक्षमं देहं क्षात्रोधर्म्म इवाश्रितः" सामर्थ्यानां शक्तीनां समुदयः समुच्चयः राशिरिव, गुणानां शौर्य्यवीर्य्यादिप्रकर्षाणां या सञ्चयः इव आकार-विशेषमङ्गीकृत्य एकत्र समुदितः शौर्य्यादिगुणनिवहो वा, निर्म्मीयते एभिः इति निर्म्माणानि जगतः पुण्यानां सुकृतानां निर्म्माणानि, इति जगत्पुण्यनिर्म्माणानि पुण्यजनकानि अनुष्ठानानि इत्यर्थः यद्वा निर्म्माणमिति भावे ल्युट् जगत्पुण्यनिर्म्माणानि जगति अनुष्ठितानि पुण्यानि कर्म्माणि इत्यर्थः. कृदभिहितोभावः द्रव्यवत् प्रकाशते। तेषां राशिः समूहः आविर्भूय मूर्त्तिपरिग्रहं कृत्वा स्थितः इव। इत्युत्प्रेक्षा। अत्रश्लोके उत्प्रेक्षापञ्चकस्य समावेशात् मालोत्प्रेक्षा। मन्दाक्रान्ता वृत्तम्। मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ तौ गुरूचेदिति लक्षणात्।

त्रै + तुमुन् = त्रातुम्। परि + नम् + क्त (कर्त्तरि) = परिणत। उपसर्गाद-समासेऽपि णोपदेशस्य इति णत्वम्।

णोपदेशास्त्वनर्द्द नाटिनाथ्नाध्नन्दनक्कनॄनृतः इति भाष्यफलितम्। चि + घञ् = काय, निवासचितिशरीरोपसमाधानेष्वादेश्च कः इति घञि चकारस्य कः। चीयतेऽस्मिन् अस्थ्यादिकमिति कायः। अस्त्राणां वेदः ज्ञानं विद्या इति अस्त्रवेदः। विद् + घञ् = वेद। अस् + ष्ट्रन् = अस्त्र। क्षत्राणामयम् इति क्षात्रः। क्षत्र + अण्। गुप् + क्तिन् = गुप्ति। गुप्त्यै इत्यत्र तादर्थ्ये चतुर्थी। तुमर्थे वा चतुर्थी। ब्रह्मकोषं गोपायितुमित्यर्थः। गोपायति ; जुगोप, गोपायाम्बभूव... ; अगोपायीत्, अगौप्सीत्, अगोपीत्। मृग्यः।

समर्थस्य भावः इति सामर्थ्यम्। समर्थ + ष्यञ् = सामर्थ्य। सम् + उद् + इण् + अच् = समुदय। सम् + चि + अच् = सञ्चय। आविस् + भू + ल्यप् = आविर्भूय। प्राकाश्ये प्रादुराविः स्यात् इत्यमरः। अनयोरुपसर्गवद्वृत्तिः। गम् + क्विप = जगत्। पू + यत् (णुक् augment) ; long vowel shortened पुण्य। पूञो यत् णुक् ह्रस्वश्च। निर् + मा + ल्युट् (करणे, भावे वा) = निर्म्माण। Bhavabhuti is very fond of comparing abstract ideas with concrete objects. This verse is a clear illustration of it.

लवः। अनुगतो भावः इति अनुभावः तेजोविशेषः। अनुभावश्च दर्शनं आकृतिश्च इति अनुभावदर्शने पुण्ये पवित्रे अनुभावदर्शने यस्य स पुण्यानुभावदर्शनः।

आश्वासेति। आश्वासस्नेहभक्तीनाम् एकं महत् आलम्बनम् प्रकृष्टस्य धर्म्मस्य मूर्त्तिसञ्चारः प्रसादः वा॥ १०॥

आश्वासः परिसान्त्वनं स्नेहः प्रीतिः भक्तिः पूज्येषु अनुरागः ताः आश्वासस्नेहभक्तयः तासाम् एकम् अद्वितीयं महत् आलम्बनम् आश्रयः। प्रशान्तमधुरेण आकारेण पुण्येन अनुभावेन च अयं महापुरुषः असंस्तुतानामपि जनानां चेतःसु स्नेहरसार्द्रं भक्तिपूतस्य भावं समासजन् अभयं विश्वासस्योपजनयति। किञ्चायं प्रकृष्टस्य उत्कृष्टस्य धर्म्मस्य मूर्त्त्या आकृत्या सञ्चरते इति मूर्त्तिसञ्चरः शरीरी प्रसादः विमलता इव। उत्कृष्टस्य धर्म्मस्य आचरणेन उपजायमानः चेतःप्रसादो मूर्त्तिमवलम्ब्य बहिः प्रकाशित इव अयं महापुरुषः इत्युत्प्रेक्षा।

आङ् + श्वस् + घञ् = आश्वास। आङ् + लम्ब + ल्युट् आलम्बन। बाहुलकात् कर्म्मणि ल्युट्। प्र + सद् + घञ् = प्रसाद। मूर्त्त्या सञ्चरते इति मूर्त्तिसञ्चरः। सम् + चर् + अच्। यद्वा मूर्त्त्या मूर्त्तिपरिग्रहेण सञ्चरः सञ्चरणं यस्य स मूर्त्तिसञ्चरः इति बहुव्रीहिः। प्र + सद् + घञ् = प्रसाद।

विरोध इति। अस्मिन् दृष्टे विरोधः विश्रान्तः, निर्वृतिघनः रसः प्रसरति तत् औद्धत्यं क्वापि व्रजति, विनयः मां प्रह्वयति, झटिति किमपि परवान् अस्मि यदिवा तीर्थानाम् इव महतां कः अपि महार्घः अतिशयः॥ ११॥

अस्मिन् महापुरुषे दृष्टे विलोकिते सति यस्य च भावेन भावलक्षणमिति सप्तमी अस्य महापुरुषस्य दर्शनादेव इत्यर्थः विरोधः कलहः विश्रान्तः अपगतः, निर्वृत्या आनन्देन घनः निविड़ः रसः प्रसरति उच्छलति सान्द्रानन्दमयो भावः हृदयं क्षोभयति इत्यर्थः। तत् पूर्व्वमनुभूतम् औद्धत्यम् गर्व्वाभिमानजन्यचापल्यं क्वापि व्रजति क्वापि निलीयते अन्तर्हितं भवति इत्यर्थः ; विनयः प्रश्रयः मां प्रह्वयति आवर्ज्जयति भक्तिविनम्रमूर्त्तिं करोति ; किमपि परवान् पराधीनः अस्मि ; अस्य माहात्म्येनाभिभूतः परतन्त्रोऽस्मि ; यदिवा अथवा तीर्थानां पुण्यक्षेत्राणाम् इव महतां महापुरुषाणां महान् अर्घः मूल्यं यस्य स महार्घः बहुमूल्यः मूल्ये पूजाविधौ अर्घः इत्यमरः कोऽपि अनिर्व्वाच्यस्वरूपः अतिशयः अतिरेकः माहात्म्याधिक्यं यद्वशात् एतत् सर्व्वं समुपजायते इति भावः। पुण्ये वाराणस्यादौ क्षेत्रे चपलचित्तानामपि हृदयं यथा स्थानमाहात्म्यात् अपेतकालुष्यं सत् नैर्म्मल्यं प्रशमञ्चोपैति, तथा महापुरुषाणामपि महिमातिशयेनाभिभूताः दुर्व्विनीता अपि प्रसंभजन्ते निर्द्वन्द्वाश्च तिष्ठन्ति इत्यर्थः। कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासः। स च उपमया संसृज्यते। शिखरिणी वृत्तम्। वि + रुध + घञ् = विरोध। वि + श्रम् + क्त ( कर्त्तरि ) = विश्रान्त। निर् + वृ + क्तिन् = निर्वृति। हन् + अप् = घन। मूर्त्तौ घन इति। उत् + हन् + क्त = उद्धत। उद्धत + ष्यञ् = औद्धत्य। प्र + ह्वे + क + प्रह्व। प्रह्वं करोति इति प्रह्वयति। तत् करोति तदाचष्टे इति णिच्। अति + शी + अच् = अतिशय।

योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि। पुण्येऽवे तथा पात्रे तीर्थस्यादर्शनेष्वपि। इति हलायुधः। मह + अत = महत्।

राम:। एकपदे युगपदित्यर्थः तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृते इति हलायुधः। Cf. "कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे। दुःखस्य विश्रामः विराम इति दुःखविश्रामः दुःखोपशमः। कुतोऽपि निमित्तात् केनापि हेतुना अन्तरात्मानम् अन्तर्हृदयम् उपस्नेहयति, स्नेहाप्लुतं करोति। निमित्तसव्यपेक्षः कारणापेक्षी। स्नेहः कारणम् अपेक्षते, निमित्तवशादुपजायते इत्येतत् खलु विप्रतिषिद्धं विप्रतीपं विरुद्धम् असमीचीन मित्यर्थः।

उप + स्निह (णिच्) + लट् ति = उपस्नेहयति। व्यपेक्षया सह वर्त्तते इति सव्यपेक्षः; निमित्तेन कारणेन सव्यपेक्षः इति निमित्तसव्यपेक्षः। वि + प्रति + सिध् + क्त = विप्रतिषिद्ध। अन्तर्गतः आत्मा इति अन्तरात्मा। शाकपार्थिवादित्वात् समासः।

व्यतिषजतीति। आन्तरः कः अपि हेतुः पदार्थान् व्यतिषजति। प्रीतयः बहिरुपाधीन् न संश्रयन्ते खलु। पतङ्गस्य उदये पुण्डरीकं विकसति हि। हिमरश्मौ उद्गते चन्द्रकान्तः द्रवति च॥ १२॥

अन्तर्भवः इति आन्तरः अवाह्यः कोऽपि हेतुः निमित्तं पदार्थान् वस्तूनि व्यतिषजति अन्योन्यासक्तान् परस्परैः संसक्तान् आकृष्टान् मिलितान्.इत्यर्थः करोति। प्रीतयः स्नेहाः प्रेमाण इति यावत् बहिरुपाधीन् बाह्यानि विशेषणानि कारणानि इत्यर्थः न संश्रयन्ते खलु नापेक्षन्ते। वाह्यैः निमित्तैः प्रीतिः स्नेहोवा न सञ्जन्यते। उपाधिर्धर्म्मचिन्तायां कुटुम्बव्यापृतेछले विशेषणे पुंसि इति मेदिनी। पुण्डरीकं पद्म पतङ्गस्य सूर्य्यस्य उदये आविर्भावे विकसति प्रस्फुटति। हिमाः रश्मयः किरणाः यस्य स हिमरश्मिः तस्मिन् हिमरश्मौ चन्द्रे उद्गते उदयभाजि सति चन्द्रकान्तः मणिविशेषः द्रवति निष्यन्दते जललवं क्षरति। विशेषेण सामान्यसमर्थनरूपः अर्थान्तरन्यासः अलङ्कार। मालिनी वृत्तम्। पतङ्गौ पक्षिसूर्य्यौ च इत्यमरः। पत् + अङ्च् = पतङ्ग। पतेरङ्गच् पक्षिणि। अन्तर् + अण् = आन्तर। वि + अति + सञ्ज् + लट् ति = व्यतिषजति, उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जामिति षत्वम्।

उप + आङ् + धा + कि = उपाधि। बहिःस्थिता उपाधयः इति बहिरुपाधयः। शाकपार्थिवादित्वात् समासः। तान्। उपाधि here means limitation, condition (as of time, space etc.) e. g. देशाद्युपाधिरचितः भेदः। This meaning of limitation or condition is derived from the

sense of विशेषण or a distinguishing property or attribute (which limits or conditions the denotation of a term).

द्रु + लट्, ति = द्रवति। लिट्, दुद्राव ; लुङ् अदुद्रुवत्। पुण्डरीकं सिताम्भोजमित्यमरः।

लवः। धर्मतः धर्म्मेण, तृतीयायास्तसिः। प्रकृत्यादिभ्यश्चेति तृतीया यद्वा हेतौ तृतीया। एवं ईदृशः व्यपदेशः आख्या इति एवंव्यपदेशः तं भजन्ति ये ते एवंव्यपदेशभागिनः एवंव्यपदेश + भज् + घिनुण्। संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीड़विविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च इति घिनुण्। व्यपदिश्यते प्रख्याप्यते अनेन इति व्यपदेशः संज्ञा नाम इत्यर्थः। वि + अप् + दिश + घञ् = व्यपदेश। रामायणमिव कथा इति रामायणकथा तस्याः पुरुषाः नायकाः पात्राणि इत्यर्थः इति रामायणकथापुरुषाः। विशेषं ब्रूहि। तेषु चतुर्षु मध्ये कतमोऽयम् इति इतरव्यवच्छेदकं यथास्यात्तथा कथय।

लवः। [उल्लासेन आनन्देन सह वर्त्तमानं यथा तथा सोल्लासम् सहर्षम्—उत् + लस् + घञ् = उल्लास ] सुप्रभातम् अद्य दिनमुखं शोभनं खलु। प्राचेतसस्य वाल्मीकेः अन्तेवासी शिष्यः लवः अभिवादयते भवन्तं प्रणमति॥

रामः। एहि एहि इति आदरे द्विरुक्तिः। कृतमिति निषेधे अव्ययम्। अत्रापि आदरे द्विर्वचनम् अतिविनयेनेति गम्यमानक्रियानुरोधात् करणे तृतीया। अपरिश्लथम् अशिथिलम्, गाढ़मित्यर्थः परिष्वजस्व आलिङ्ग। श्लथ + अच् = श्लथ। श्लथते।

परिणतेति। परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः चन्द्रचन्दननिष्यन्दजडः तव स्पर्शः नन्दयति॥ १३॥

परिणतं परिपाकं गतं पूर्णावयवम् इत्यर्थः अतएव कठोरं जरठं यत् पुष्करं पद्मं तस्य गर्भच्छदः अभ्यन्तरदलं तद्वत् पीनः स्थूलः व्यापकः इत्यर्थः मसृणः श्लक्ष्णः सुकुमारः कोमलश्च इति परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः। उपमानानि सामान्यवचनैरिति समासः। सुजातोत्पलाभ्यन्तरदलवच्छ्लक्ष्णकोमलः, चन्द्रस्यचन्दनस्य च निष्यन्दः क्षरितोरसः स इव जडः शीतलः तव स्पर्शः नन्दयति मां प्रीणयति। मलयजरसशीतलः तवगात्रस्पर्शः सन्तप्तस्य मद्गात्रस्य तापशान्तये अनिर्व्वचनीयसुखाय च भवति इत्यर्थः। उपमालङ्कारः। आर्य्या जातिः।

१२
। । । । । ॥ । ॥ । ।
परिणतकठोरपुष्कर

१८
॥ ॥ । । ॥ । । । । । । । ॥ ॥
गर्भच्छदपीनमसृणसुकुमारः

१२
॥ । । । ॥ । ॥ । ।
नन्दयति चन्द्रचन्दन

१५
॥ ॥ । । ॥ । ॥ ॥ ॥
निष्यन्दजडस्तवस्पर्शः

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥
पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ।
व्योम्नि खड्गफले तीर्थौषधिविशेषयोः ॥ इत्यमरः ।

छादि + घ = छद । प्याय + क्त = पीन । पक्षे प्यान । प्यायः पी, पी वा स्यान्निष्ठायाम् । व्यवस्थित विभाषेयम् । तेन स्वाङ्गे नित्यं पीनम् मुखम् । अन्यत्र पीनः प्यानः स्वेदः । सोपसर्गस्य न, प्रप्यानः । आङ् पूर्व्वस्यान्धूधसोः आपीनोऽन्धुः, आपीनमूधः । प्यायते, पिप्ये, अप्यायिष्ट, अप्यायि । नि + स्यन्द + घञ् = निष्यन्द । अनुविपर्यभिनिविभ्यः स्यन्दतेरप्राणिषु इति षत्वं वैभाषिकम् ।

चन्द्रश्च चन्दनश्च तयोः निष्यन्दः इति चन्द्रचन्दननिष्यन्दः । द्वन्द्वात् परं श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते इति न्यायात् निष्यन्दः इत्यस्य उभयेन सम्बन्धः । With reference to चन्द्रनिष्यन्द, compare निष्पीडितेन्दुकरकन्दलजो नु सेकः । यद्वा चन्द्रश्च चन्दननिष्यन्दश्च तौ इव जड इति विग्रह. ।

लवः । नास्ति कारणम् यस्य सः अकारणः । स चासौ स्नेहश्चेति अकारणस्नेहः । एभ्य एव अभिद्रुग्धमित्यत्र चतुर्थीप्रयोगश्चिन्त्यः । क्रुधद्रुहोरुपसृष्टयोः इति सूत्रेण सम्प्रदानसंज्ञायाः निरवकाशत्वात् चतुर्थी न साधीयसी । इमे अभिद्रुग्धाः इत्येव वक्तुमुचितम् । क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः इति चतुर्थी इति यद् वीरराघवेणोक्तम् तन्न । क्रुधद्रुहोरुपसृष्टयोः कर्म्म इति अपवादसूत्रस्य परवर्त्तिनापि क्रियार्थोपपदेत्यादि सामान्यविधिना विषयापहारः कर्त्तुं न शक्यते । अनयोर्मिथः उत्सर्गापवादभावो नास्ति, स्वीकृतेऽपि एतस्मिन् अपवादस्यैव बलीयस्त्वम् ॥ अभिपूर्व्वस्य द्रुह्यतेः सकर्म्मकत्वेपि अत्र अकर्म्मकत्वविवक्षया भावे क्तः प्रत्ययः कृतः कविना । तथाचोक्तम् "अविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया" । इत्थमकर्म्मकत्वे प्राप्ते क्रियया यमभिप्रैति सोऽपि सम्प्रदानमिति चतुर्थी, महाकविप्रयोगात् कथञ्चित् समर्थनीया ।

restraint in private, had her eyes almost closed on account of native bashfulness ; and in a few days she also came to know it. (28).

[ *Weeping* ] Shall I then ask them in some way ?

लव: । वाष्पवर्षेणेति । जगन्मङ्गलं व: आननम् वाष्पवर्षेण अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् नीतम् ॥ २९ ॥

जगतां मङ्गलं माङ्गल्यं वस्तु इत्यर्थ: व: युष्माकम् आननम् मुखम् वाष्पस्य अश्रुण: वर्षेण पातनेन अवश्यायेन हिमेन अवसिक्तस्य आर्द्रीकृतस्य पुण्डरीकस्य अम्भोजस्य चारुताम् सौन्दर्य्यम् नीतम् प्रापितम्, अश्रुसिक्तम् भवत: आनन हिमविन्दुसिक्तम् सिताम्भोजमिव दृश्यते । निदर्शनालङ्कार: । विरहपाण्डुत्वात् रामस्य आननं सिताम्भोजेन सह उपमितं कविना ।

अव + श्यै + घञ् · अवश्याय । अवश्यायस्तुनीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका च इत्यमर: । चारुण· भाव: चारुता । ताम् । गौणे कर्म्मणि द्वितीया । आननमिति प्रधाने कर्म्मणि प्रथमा । अव + सिच् + क्त ( कर्म्मणि ) = अवसिक्त ।

कुश: । विनेति—सीतादेव्या विना रघुपते: किमिव दु:खं नहि प्रियानाशे कृत्स्नं जगत् अरण्यं भवति हि किल । स च तावान् स्नेह: अयम अपि निरवधि: वियोग: ॥ अनधिगतरामायण: इव किमिति एवं पृच्छसि ॥ ३० ॥

रामस्य वाष्पवर्षकारण पृष्ठमस्ति इत्याह विनेति सीतादेव्या विना सीतादेवीमन्तरेण रघुपते: किमिव किम् वस्तु दु:खं दु:खहेतुभूतं नहि । सीताविरहितस्य रामस्य इहजगति किञ्चिदपि सुख नास्ति अतएव निरन्तर दु:खेन दह्यमानहृदय: अयं वाष्प विसृजतीति यत् तन्नचित्रम् । सीतां विना रामस्य सुखलेशो नास्ति इति विशेषं सामान्येन समर्थयितुमाह प्रियेति प्रियाया: वल्लभाया: नाशे चये सति कृत्स्न समग्रं जगदिदम् अरण्य' वन भवति हि निश्चितम् किल इति लोका वदन्ति इत्यर्थ: । प्रियपत्न्या अपाये जीवनं भारभूतमिव भवति जगच्च तिरोहितानन्दं सत् विजनं विपिनमिव अवासयोग्यं सम्पद्यते इत्यर्थ: । तावान् तत्परिमित: अगाध: इति भाव: स च स्नेह: प्रेम अयञ्च निर् नास्ति अवधि: सीमा अवसानमित्यर्थ: यस्य स निरवधि: पुन:समागमाशाशून्य: इति भाव: विरह: विच्छेद: ; महदन्तरं खलु अनयोर्दशयोरिति भाव: ; ईदृशे अवस्थान्तरे सम्प्राप्ते, अश्रुवर्षणकारणे सत्यपि यत् त्वम् अधिगत्यापि समग्रं रामायणम् अविदितरामायण इव अश्रुकारणं पृच्छसि नैतत् ते योग्यमित्यर्थ: । शिखरिणीवृत्तम् । अर्थान्तरन्यास: अलङ्कार: ।

तद् + वतु ( परिमाणे ) = तावत् । आ सर्व्वनाम्न: इति आकारोऽन्तादेश: । अव + धा + कि = अवधि । अवधिस्तु बधाने स्यात् सीम्निकाले विलेऽपि च । इति विश्व: ।

न अधिगतं पठितम् रामायणं येन सः अनधिगतरामायणः। राम एव अयनम् उपजीव्यम् यस्य तत् रामायणम्। पूर्वपदस्थात् निमित्तात् संज्ञायामगः इति णत्वम्। Kusa, a young boy of 12 or 13, can have no personal experience of the sentiment he gives expression to; and therefore he modifies his own statement by the word किल, which signifies "so the people say."

रामः। तटस्थितः उदासीनः आलापः अनयोः कुमारयोः मिथोभाषणम्। सीतातनययोरीदृशः सीतासम्बन्धी सलापो भवितुं नार्हति इति भावः। The root meaning of the word तटस्थित is one standing on the bank of a river. From the attitude of such a person standing on the bank without taking any interest in what goes on the breast of the river, the present meaning of being indifferent is arrived at. प्रश्नेन अनुयोगेन कृतमलम्। अकस्मात् आगतः इति आकस्मिकः। हठात उपस्थितः। अकस्मादित्यव्ययम्। ततः ठक्। स्नेहेन हेतुना परिप्लवः चञ्चलः इति स्नेहपरिप्लवः हेतुतृतीययापि समासः इष्यते। विकारः चेतसोऽन्यथाभावः। निर्भिन्नं हृदयं येन स निर्भिन्नहृदयः तथोक्तः आवेगः चित्तचाञ्चल्यं दुःखसंक्षोभः इत्यर्थः यस्य स निर्भिन्नहृदयावेगः। यद्वा हृदयस्य आवेगः इति हृदयावेगः निर्भिन्नः बहिर्भिन्नः प्रकटितः इत्यर्थः, हृदयावेगो यस्य स निर्भिन्नहृदयावेगः बहिःप्रकाशित-चित्तसंक्षोभः अहं बालकजनेनापि अनुकम्पितः कृपापात्रीकृतः अस्मि। अन्तरयामि प्रच्छादयामि हृदयस्य आवेगम्। अन्तरम् अन्तर्धानं करोति इति अन्तरयति। तत्करोति तदाचष्टे इति णिच्। सरस्वत्याः भारत्याः वाचः इत्यर्थः निस्यन्दः प्रस्रवः प्रवाहः इति यावत्। भगवतः वाल्मीकेः गीःपरिणामः। गीर्वाग्वाणी सरस्वती इत्यमरः। प्रशस्तिः प्रशंसा। प्र + शंस् + क्तिन् = प्रशस्ति। कौतूहलेन औत्सुक्येन। हेतौ तृतीया।

कुशः। कृत्स्नः समग्रः एव सन्दर्भः रामायणप्रबन्धः अस्माभिः आम्नातः पठितः। सम् + दृभ् + घञ = सन्दर्भ। दृभति, दर्भयति। दृब्धः। स्मृतौ स्मरणवर्त्मनि उपस्थितौ बालचरितस्य अन्त्ये अन्तिमे अध्याये द्वौ श्लोकौ।

रामः। उदीरयतु उच्चारयतु।

कुशः। प्रकृत्येति। सीता प्रकृत्या एव महात्मनः रामस्य प्रिया आसीत्। स तु प्रियभावः तया स्वगुणैः एव वर्धितः॥ २१॥

सीता मैथिली प्रकृत्या स्वभावेन एव महात्मनः उदारहृदयस्य रामस्य प्रिया वल्लभा आसीत्। सीतां प्रति रामस्य प्रेम नैसर्गिकमासीत्। स तु प्रियभावः

प्रेमा इत्यर्थः तया सीतया स्वस्याः गुणैः आर्ज्जवमाधुर्य्यपातिव्रत्यादिगुणैः एव वर्द्धितः वृद्धिं नीतः।

तथैवेति। रामः तथैव सीतायाः प्राणेभ्यः अपि प्रियः अभवत्। हृदयम् एव तु परस्परं प्रीतियोगं जानाति ॥ ३२ ॥

रामः तथैव यथा सीता रामस्य प्रिया आसीत् तथा सीतायाः प्राणेभ्यः जीवितात् अपि प्रियः प्रेयान् अभवत् हृदयम् अन्योन्यस्य चित्तम् एव तु परस्परम् अन्योन्य-विषयकं प्रीतियोगम् जानाति।

प्राणेभ्यः इत्यत्र पञ्चमी विभक्तौ इति पञ्चमी। परस्परम् has been used here as an adjective to प्रीतियोगम्। These two verses do not appear in this form in the Ramayana. It may be that these verses had different readings, or very likely the dramatist makes a clean breast of it by saying स्मृत्युपस्थितौ। He remembered the import or sense of the two verses and expressed the sense in his own language. In this respect he was not very scrupulous. He felt no scruple to pass off his own composition as the writing of his master Valmiki. The verses in the Ramayana stand thus :—

प्रिया तु सीता रामस्य दाराः पितृकृता इति।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो विवर्द्धते॥
तस्याश्च भर्त्ता द्विगुणं हृदये परिवर्त्तते।
अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा॥

रामः। हृदयमेव मर्म्म तस्य अयम् उद्घातः ताडनम् प्रहार इति यावत् अतिदारुणः नृशंसः क्लेशकरः इत्यर्थः। अनेन अतीतवृत्तान्तोल्लेखेन हृदये भृशं ताड़ित इवास्मि इत्यर्थः। अत्र उद्घातशब्दस्य उपन्यासः वाङ्मुखमित्यर्थः न सङ्गच्छते। नास्ति अन्वयः हेतुर्यस्य स निरन्वयः अहेतुकः यो विपर्य्यासः दशाविपरिणामः तेन विरसा निष्ठुरा वृत्तिर्येषां ते निरन्वयविपर्य्यासविरसवृत्तयः अतर्कितोपनतदशापरिवर्त्तनेन क्लेशावहाः; विप्रलम्भे विच्छेदे मनोरथभङ्गे इत्यर्थः पर्य्यवस्यन्ति विपरिणमन्ति ये ते विप्रलम्भपर्य्यवसायिनः वियोगबहुला इति भावः संसारस्य वृत्तान्ताः भावाः। संसारभावा वियोगबहुलाः अरुन्तुदक्लेशदायिनः इत्यर्थः। वि + परि + आस् + घञ् = विपर्य्यास। Or वि + परि + अस् ( दिवादि ) + घञ् = विपर्य्यास। वि + प्र + लभ् + घञ् = विप्रलम्भ। परि + अव + सो + णिनि = पर्य्यवसायिन्।

क्वेति । निरतिशयविस्रम्भबहुल: तावान् आनन्द: क्व ? ते अन्योन्यं यत्ना: क्व ; गहना: कौतुकरसा: च क्व नु ? सुखे वा दु:खे वा हृदययो: तत् ऐक्यं क्व नु खलु ? तथापि एष: पाप: प्राण: स्फुरति न तु विरमति ॥ ३३ ॥

नास्ति अतिशयो यस्मात् स निरतिशय: परां कोटिं श्रित: तेन विस्रम्भेण विश्वासेन बहुल: गरीयान् तावान् तत्परिमित: अपरिमेय: इति भाव: आनन्द: क्व कुत्र गत: इति शेष: अन्योन्यं परस्परं यत्ना: अन्योन्यसुखहेतवे ते यत्ना: चेष्टा: क्व गता:, गहना: निविडा: कौतुकरसा: नर्म्मालापजन्यप्रमोदा: क्व गता: ; सुखे दु:खे वा हृदययो: चेतसो: आवयोरितिशेष: तत् ऐक्यम् सर्व्वासु अवस्थासु आवयोर्हृदयं यदपरिवर्त्तितैकरसम् आसीत् तदिदानीं क्व गतम् । सर्व्वमेतत् खलु इदानीमन्तर्हितम् एषामभावे जीवितधारणं निष्फलं सत्यम्, तथापि एष: पाप: दग्ध: प्राण: हृन्मारुत: स्फुरति चेष्टते किन्तु न विरमति । नास्य क्रियानिरोधो भवति । ईदृशस्य सुखसम्पर्कवर्ज्जितस्य जीवितस्य अवसानमेव श्रेय: इति भाव: शिखरिणीवृत्तम् ।

प्राणो हृन्मारुते वोल्ले काव्यजीवेऽनिले बले इति मेदिनी । व्याङ्परिभ्योरम: इति परस्मैपदम् ।

प्रियेति । प्रियागुणसहस्राणाम् एकोन्मीलनपेशल: य एव काल: दु:स्मर: वयं तमेव स्मारिता: ॥ ३४ ॥

प्रियाया: सीताया: गुणानां सहस्राणि तारुण्योद्गमादीनि तेषां एकम् उन्मीलनम् एकदैव युगपदित्यर्थ: आविर्भाव: तेन पेशल: चारु: मनोज्ञ: इत्यर्थ: य: काल: समय: दु:खेन स्मर्य्यते इति दु:स्मर: स्मर्त्तुमशक्य:, यस्य स्मरणं नितरां क्लेशकरमित्यर्थ: वयं तमेवकालं स्मारिता: । अनेन कर्णोपीडघातेन स समय: स्मृतौ आपतित: ।

चारौ दक्षे च पेशल: इत्यमर: । उत् + मील + ल्युट् = उन्मीलन । दुस् + स्मृ + खल् = दु:स्मर । वयमिति अणिकर्त्तु: णौ कर्म्मत्वात् उक्ते कर्म्मणि प्रथमा । स्मरतेर्बुद्ध्यर्थत्वात् अणिकर्त्तु: कर्म्मत्वम् । एतच्च भट्टोजीदीक्षितेन नानुमन्यते । "मृत ज्ञानसामान्यार्थानामेव ग्रहणम् न तु तद्विशेषार्थानामिति अनेन ज्ञाप्यते । तेन स्मरति जिघ्रति इत्यादीनां न ।" प्राचीनैरिष्ट मतं नाङ्गीक्रियते । अथवा निरङ्कुशा: हि कवय: ।

तदेति । तदा किञ्चित् किञ्चित् कृतपदम् मृगदृश: तत स्तनयुगलं कतिपयै: अहोभि: ईषद्विसारि अभवत् ।

यत्र वय:स्नेहाकृतव्यतिकरघन: मदन: हृदि प्रगल्भव्यापार: वपुषि मुग्धश्च स्फुरति ॥ ३५ ॥

दु:स्मरं कालं तावत् वर्णयति, तदा इति तदा तस्मिन् समये किञ्चित् किञ्चित् ईषदीषत् शनै: शनैरित्यर्थ: कृतं पदं स्थानं येन तत् कृतपदं लब्धपदम् आविर्भूतम्

लब्धात्मलाभं तत् स्मृतिपथारूढं मृगस्येव दृक् यस्याः तस्याः मृगदृशः हरिणलोचनायाः स्तनयोर्युगलम् पयोधरद्वयम् कतिपयैः स्वल्पैरेव अहोभिः दिवसैः ईषत् अल्प विस्तृणाति यत् तत् ईषदविस्तारि अभवत् ;दर्शनयोग्यतां गतमित्यर्थः नतु अन्योन्यमुत्पीडयत् पीवरं सञ्जातम् इति भावः। यत्र यस्मिन्काले वयसः यौवनस्य स्नेहस्य अनुरागस्य आकूतस्य अभिप्रायस्य च व्यतिकरेण सम्पर्केण घनः निविडः दुर्दमः इति भावः मदनः कन्दर्पः हृदि हृदये प्रगल्भः प्रौढः व्यापारः क्रिया यस्य स प्रगल्भव्यापारः अनियन्त्रणः स्फुरति विलसति वपुषि देहे मुग्धः अनुत्कटश्च स्फुरति। कन्दर्पस्य अनियन्त्रणः प्रभावः हृदये अनुभूयते ; देहे तु तदनुरूपा चेष्टाः न प्रसरन्ति सहजशालीनताजाड्यस्य दुरतिक्रमत्वात्। तारुण्योदयात् मन्मथभावावेशाच्च देहे कापि अपूर्व्वा श्रीः समुपजायते इति अर्थश्च मुग्धशब्देन ध्वन्यते। शिखरिणीवृत्तम्।

अहोभिरित्यपवर्गे तृतीया। वि + स्तृ + णिनि = विस्तारिन्। किम् + डति = कति। कति + अयच् पुक् is the augment कतिपय। किञ्चित् is indeclinable and is used as an adverb. It is repeated in the sense of नित्य or intensity नित्यवीप्सयोरिति द्विर्भावः।

कुशः। मन्दाकिनी चित्रकूटोपकण्ठवाहिनी नदी। तथाच रघौ—मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः। मन्दाकिनी च चित्रकूटः भरद्वाजाश्रमसन्निकृष्टः पर्व्वतविशेषश्च तौ तयोः वनानि, तेषु विहारः क्रीडा तस्मिन् समये सीतामुद्दिश्य अयं श्लोकः रामेण उक्तः।

त्वदर्थमिति। अयं शिलापट्टः त्वदर्थमिव अग्रतः विन्यस्तः। यस्य अभितः अयं केसरः पुष्पैः प्रवृष्टः इव ॥ ७६ ॥

अयं पुरोवर्त्ती शिलापट्टः विस्तीर्णः शिलाखण्डः त्वदर्थम् इव तव शयनार्थमिव अग्रतः अग्रे पुरः विन्यस्तः स्थापितः। यस्य शिलापट्टस्य अभितः उभयोः पार्श्वयोः भागयोरित्यर्थः अयं केसरः वकुलवृक्षः पुष्पैः प्रवृष्टः इव। एतेन पुष्पशय्यासमाधिर्गम्यते।

वि + नि + अस् + क्त ( कर्म्मणि ) = विन्यस्त। अग्रतः अग्रे सप्तम्यास्तसिः। यस्येति षष्ठी सम्बन्धसामान्ये। आर्षोऽयंप्रयोगः।

अयं श्लोकस्तु रामायणे न दृश्यते। प्रक्षिप्तोऽयमिति केचिन् मन्यन्ते ॥

प्र + वृष + क्त ( कर्त्तरि )। अववृषधातुरकर्म्मकः। पुष्पैरिति कर्म्मणः करणत्वम्। विवक्षावशात्कारकाणि।

रामः। [ लज्जया स्त्रिया स्मितेन कुमारस्य मुग्धतादर्शनेन ईषद्धास्येन, स्नेहेन, करुणेन शोकेन च सह वर्त्तमानम् इति सलज्जास्मितस्नेहकरुणम्। ]

मुग्धः अप्रबुद्धमनाः। वक्तव्यस्य अर्थमज्ञात्वा एव श्लोकमिममुदीरितवान्। विशेषेण

इत्यत्रप्रकृत्यादिभ्यश्चेति तृतीया। तृतीयायाः तसि। अरण्ये चरति इति अरण्यचरः। अज्ञातलोकसव्यवहारः इत्यर्थः। प्रदेशस्य इत्यत्र अधीगर्थदयेशां कर्म्मणि इति कर्म्मणि षष्ठी। तस्मिन् समये विहारकाले विश्रम्भस्य विश्वासस्य अतिशयेन प्रसङ्गः अत्यासक्ति. तस्य साक्षी इति तत्समयविश्रम्भातिशयप्रसङ्गसाक्षी। तस्य।

श्रमेति। श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनीमरुत्तरलितालकाकुलललाट-चन्द्रद्युति, अकुङ्कुमकलङ्कितोज्ज्वलकपोलम निराभरणसुन्दरश्रवणपाशसौम्य ते मुखम् उत्प्रेक्ष्यते ॥ ३७ ॥

श्रम. रतिखेदः तज्जन्य यदम्बु स्वेदजलमित्यर्थः तेन शिशिरीभवत् शीतलतां भजत् प्रसृताः प्रवाहिताः मन्दाः धीरा. ये मन्दाकिनीमरुतः मन्दाकिनीसमीरणाः तैः तरलिता चञ्चलीकृताः इतस्ततः विक्षिप्ता ये अलकाः चूर्णकुन्तलाः तैः आकुला व्याप्ता आच्छादिता इत्यर्थः ललाटरूपस्य चन्द्रस्य चन्द्रिकागौरस्य ललाटस्य द्युतिःकान्ति यस्मिन तत् प्रसृतमन्दमन्दाकिनीमरुत्तरलितालकाकुलललाटचन्द्रद्युति, न कुङ्कुमेन कलङ्कितौ इति अकुङ्कुमकलङ्कितौ कुङ्कुमरागवर्ज्जितौ तथापि उज्ज्वलौ सुप्रभौ कपोलौ यस्मिन तत अकुङ्कुमकलङ्कितोज्ज्वलकपोलम्,निरनसन्ति आभरणानि ययोः तौ निराभरणौ तथापि सुन्दरौ मनोहरौ निसर्गमनोहरौ यौ श्रवणपाशौ प्रशस्तौ कर्णौ ताभ्यां सौम्यं मधुरदर्शन तव मुखमाननम् उत्प्रेक्ष्यते सङ्कल्पवशात् दृशोः परतः उपस्थाप्य आलोक्यते इव। अहो तदानीं तव मुखस्य या अवस्था जाता तामिदानीं स्मरामि। रतिखेदेन घर्म्मो-दयात् तव आननं शीतलं सञ्जातम्। श्रमालसायास्ते ग्लानिं हर्त्तुं शनैः शनैः वहन् मन्दाकिनीवायुः तव अलकान् आन्दोलयन् समुज्ज्वलस्य ललाटस्य उपरि इतस्तत व्यक्षिपत् तेन च हेतुना नीरदैरष्टमीचन्द्रखण्डस्येव ललाटस्य चन्द्रिकागौरद्युति. किञ्चिदावृता अभवत्। तव गण्डद्वयम कुङ्कुमरागेण अरञ्जितमपि निसर्गत समुज्ज्वलम् आननस्य कामपि श्रियमपुष्यन्। किञ्च ते श्रवणयुगल कुण्डलादिभिरनलङ्कृतमपि प्रकृत्या सुन्दरम् आननस्य भूषणतामापद्यत। ईदृशं ते आननम् इदानीमहमुत्पश्यामि।

नात्र श्लोके उत्प्रेक्षालङ्कारः पूर्व्वं दृष्टस्य मुखस्य इदानीं स्मरणात स्मरणालङ्कारो-व्यङ्ग्यः। सदृशवस्तुनः अनुपन्यासात् नालङ्कारस्य स्फुटत्वम्। पृथ्वी वृत्तम्।

[ स्तम्भितः जडीकृत इव स्थित्वा ]

चिरमिति। चिरं ध्यात्वा ध्यात्वा निर्म्माय पुरतः निहितः इव प्रियजन. प्रवासे अपि आश्वास न खलु करोति इति न। विकल्पव्युपरमे जगत् जीर्णारण्यं भवति हि। ततन् हृदयं कुकूलानां राशौ पच्यते ॥ ३८ ॥

चिरं दीर्घकालं ध्यात्वा ध्यात्वा मुहुरभीक्ष्णेन चिन्तयित्वा निर्माय विरचय्य पुरतः, अग्रे निहितः निवेशितः स्थापित इति यावत् इव इत्युत्प्रेक्षा प्रियजनः प्रेमास्पदीभूतो

जन: प्रवासे वियोगकाले अपि इत्यर्थ: आश्वासं विरहतप्तस्य परिसान्त्वनम् न करोति खलु इति न अपितु करोत्येव। सम्भाव्यनिषेधनिवर्त्तने नञ्द्वयम् इति वामन:। विकल्पस्य सङ्कल्पस्य व्युपरमे निवृत्तौ कल्पनाशक्तेरपाये जगत् जीर्णं अरण्यमिव भवति दु:खावस्थान जायते। तदनु तत: पश्चात् कुकूलाग्ना राशौ मुर्म्मुरे तुषानले हृदय पच्यते सन्तप्यते क्वथ्यते इव। इत्युत्प्रेक्षा। कुकूल शङ्कुभि. कीर्णे श्वभ्रे नातु तुषानले इत्यमर:। पच्यते इति कर्म्मकर्त्तरि लट्। कर्म्मणि वा रूपम्। अत्र श्लोके शिखरिणीवृत्तम्। वि + उप + रम् + अल् = व्युपरम। व्युपरमे इत्यत्र भावे सप्तमी।

वशिष्ठ इति। [नेपथ्ये] शिशुकलहम् आकर्ण्य वशिष्ठ: वाल्मीकि:, दशरथमहिष्य: अथ जनक. अरुन्धत्या सह सभया. विदूराश्रमतया श्रमजडा: त्वरितमनस: अपि जराग्रस्त. गात्रै. चिरेण आगच्छन्ति ॥ ३९ ॥

शिशो: लवचन्द्रकेत्वो. कलह युद्धमाकर्ण्य श्रुत्वा वशिष्ठ: वाल्मीकि: दशरथस्य महिष्य: कौशल्याप्रमुखा:, अथ जनक: अरुन्धत्या वशिष्ठपत्न्या सह सभया: भीता: सन्त: विदूर. आश्रम: येषा ते विदूराश्रमा: तेषा भाव: विदूराश्रमता तया हेतुना दूरवर्त्तिन: आश्रमात् आगमनेन हेतुना श्रमेण अध्वलङ्घनजन्यखेदेन जडा: क्लान्ता: मन्दगमना. इत्यर्थ. त्वरित त्वरान्वित मनो येषा ते त्वरितमनस. त्वरया गन्तुकामा अपि जरया वार्द्धकेन ग्रस्तानि इति जराग्रस्तानि तै: वार्द्धकदुर्व्वलैरित्यर्थ: गात्रै: अवयवै: उपलक्षिता: चिरेण विलम्बेन आगच्छन्ति रणाङ्गनमभ्यायान्ति। सभयश्च, सभयाश्च, इति सभया: पुमान् स्त्रिया इति पुंलिङ्गैकशेष:। शिखरिणीवृत्तम्।

ग्रस + क्त ( कर्म्मणि ) = ग्रस्त। ग्रसते , जग्रसे , अग्रसिष्ट। गात्रैरित्यत्र प्रकृत्यादिभ्यश्चोपसंख्यानमिति उपलक्षणे तृतीया। चिरेण इत्यव्ययम्। अपवर्गे तृतीया। त्वरा + इतच् = त्वरित। Or त्वर् + क्त ( कर्त्तरि ) = त्वरित।

राम.। अहह इति शोके अव्ययम्। अस्मिन्काले जनकस्य दर्शनं हृदये वज्रपतनमिव दारुणपीडाकरम्।

सम्बन्धेति। सम्बन्धस्पृहणीयताप्रमुदितै. वशिष्ठादिभि: जुष्टे अपत्यविवाहमङ्गलमहे तातयो: तत् सङ्गत दृष्ट्वा ईदृशे महावैशसे वृत्ते ईदृश पितृसख पश्यन् सहस्रधा किं न दीर्य्ये अथवा रामेण किं दुष्करम् ॥ ४० ॥

सम्बन्धस्य रघूणा जनकानाञ्च यौनसम्बन्धस्य स्पृहणीयतया वाञ्छनीयतया श्लाघ्यतया इत्यर्थ: प्रमुदितै: हृष्टै: वशिष्ठादिभि: पुण्यव्रतै: ऋषिभि: जुष्टे सेविते सनाथीकृते अपत्याना पुत्रकन्यानां विवाहमङ्गलरूपेमहे उत्सवे तातयो: तातस्य पितुर्दशरथस्य तातस्य राजर्षेर्जनकस्य च तत् सङ्गतम् मिलनम् दृष्ट्वा ईदृशे एवविधे महावैशसे सीता-विवासनरूपे नृशंसे हत्याकर्म्मणि वृत्ते जाते सङ्घटिते ईदृशं भग्नहृदयं पितु: सखाय तातं जनकं पश्यन् अह किं सहस्रधा न दीर्य्ये विदीर्णोभवामि। अथवा रामेण

किं दुष्करं कर्त्तुमशक्यमस्ति। निरपराधायाः गर्भभरालसायाः पत्न्याः अकारण-परित्यागी नृशंसो रामः यत् कर्त्तुमशक्तः ईदृशं निष्ठुरं कर्म्मपृथिव्यां नास्ति। कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासः। शार्द्दूलविक्रीड़ितं वृत्तम्। स्पृह + अनीय = स्पृहणीय। स्पृहणीय + तल् = स्पृहणीयता। प्र + मुद + क्त (कर्त्तरि) = प्रमुदित। मोदते ; मुमुदे ; अमोदिष्ट। जुष + क्त = जुष्ट। जुषते ; जुजुषे ; अजोषिष्ट। अपत्यानां विवाह एव मङ्गलं तदेव महः इति अपत्यविवाहमङ्गलमहः। तातश्च तातश्च तौ तातौ। सरूपाणामेकशेषः एक विभक्तौ। पितुः सखा पितृसखः। समासान्तः टच्। वि + शस + अच् = विशस। विशस + अण् = वैशस। सहस्र + धाच् = सहस्रधा। दीर्य्ये इति कर्म्मकर्त्तरि लट् इति केचित् मन्यन्ते। अन्ये तु दीर्य्यतेरुभयपदित्वम् अङ्गीकुर्व्वन्ति। तन्मते कर्त्तरि लट्। दृस् + क्त + खल् (कर्म्मणि) रामेणेति कर्त्तरि तृतीया षष्ठीनिषेधात् न लोकेत्यादिना।

अनुभावेति। अनुभावमात्रसमुपस्थितश्रियं ईदृशम् रघुनाथ सहसा एव वीक्ष्य प्रथमप्रमूढ़जनकप्रबोधनात् विधुराः मातरः प्रमोहम् उपयान्ति ॥ ४१ ॥

अनुभावमात्रेण केवलेन तेजोविशेषेण समुपस्थिता विद्यमाना इत्यर्थः श्रीः शोभा यस्य तम् अनुभावमात्रसमुपस्थितश्रियम् तेजोविशेषमात्रावशेषं ईदृशं शोककर्शितं रघुनाथं रामं सहसा अतर्कितं यथा तथा वीक्ष्य एव दृष्ट्वैव प्रथमं प्राक् प्रमूढ़स्य मूर्च्छितस्य जनकस्य प्रबोधनात् प्रबोधनं विधाय ल्यब्लोपे कर्मण्यधिकरणे इति पञ्चमी जनकस्य चैतन्यसम्पादनं कृत्वा विधुराः व्यथिताः क्लिष्टाः मातरः कौशल्यादयः प्रमोहं मूर्च्छाम् उपयान्ति प्राप्नुवन्ति। मञ्जुभाषिणी वृत्तम्। सजसा जगौ च यदि मञ्जु-भाषिणी इति लक्षणम्।

रामः। जनकानामिति—जनकानां रघूणाञ्च यत् कृत्स्नं गोत्रमङ्गलम् तस्मिन् अकरुणे पापे मयि वः करुणा वृथा ॥ ४२ ॥

जनकानां रघूणां च उभयवंश्यानाम् यत् सीतालक्षणं वस्तु कृत्स्नं समग्रं गोत्रयोः वंशयोः मङ्गलं मङ्गलैकनिदानमित्यर्थः, तस्मिन् सीतारूपे मङ्गलैकनिलये अकरुणे निष्ठुरे कृपाशून्ये पापे दुरात्मनि वो युष्माकं करुणा दया वृथा निष्फला मयि युष्माकं करुणा न युज्यते इत्यर्थः। मय्यं कोपः एव कार्य्यः न करुणा इति भावः। नास्ति करुणा यस्य सः अकरुणः तस्मिन्। मयि इति विवक्षयाधिकरणे सप्तमी। वृथेत्यव्ययम्।

कुमारयोः कुशलवयोः प्रत्यभिज्ञानं स्वपुत्रत्वेन
परिज्ञानं यस्मिन् स कुमारप्रत्यभिज्ञानः
तन्नामा षष्ठः अङ्कः समाप्तः।

লব। এ কি? জগতের মঙ্গলস্বরূপ আপনার এই মুখারবিন্দ বিগলিতাশ্রু-বিন্দুসম্পর্কে হিমবিন্দুসিক্ত কমলের শোভা ধারণ করিল কেন? ॥ ২৯ ॥

কুশ। বৎস, সীতা দেবীর বিরহে রঘুপতি রামচন্দ্রের কি না দুঃখ? প্রিয়ার নাশে সমস্ত জগৎ অরণ্য বলিয়া বোধ হয়। সেই অগাধ প্রেম, এবং এই নিরবধি বিরহ। রামায়ণে অনভিজ্ঞের ন্যায় কেন এরূপ প্রশ্ন করিতেছ? ॥ ৩০ ॥

রাম। [স্বগতঃ] ইহাদিগের এই আলাপ সম্পূর্ণ নিঃসম্পর্কিত ও উদাসীনের ন্যায়। প্রশ্ন করিয়া ফল নাই। হতহৃদয়, হঠাৎ তোমার চাঞ্চল্যবিধায়ক এ কি বিকার উপস্থিত হইল? এইরূপে হৃদয়ের আবেগ প্রকাশ হওয়ায় শিশুজনেও আমার প্রতি অনুকম্পা প্রকাশ করিতেছে। যাহা হউক, এই আবেগ নিরুদ্ধ ও অন্তর্হিত করি। [প্রকাশ্যে] বৎসদ্বয়, ভগবান্ বাল্মীকির কবিত্ব শক্তির পরিণাম,সূর্য্যবংশের প্রশস্তিস্বরূপ রামায়ণ (কাব্যের) কথা শুনিয়াছি। কৌতূহলবশতঃ রামায়ণের কিছু শুনিতে ইচ্ছা করি।

কুশ। আমরা সমগ্র রামায়ণসন্দর্ভ পাঠ করিয়াছি। বালচরিতের অন্তিম অধ্যায়ের এই শ্লোক দুইটি স্মৃতিপথে উদিত হইতেছে।

রাম। বৎস, বল।

কুশ। সীতা স্বভাবতঃই মহাত্মা রামের প্রিয় ছিলেন। কিন্তু তিনি স্বীয় গুণনিচয় দ্বারা সেই প্রিয়ভাব বর্দ্ধিত করিয়াছিলেন ॥ ৩১ ॥

রামও সেইরূপ সীতার প্রাণ অপেক্ষা প্রিয় ছিলেন। তাঁহাদিগের হৃদয়ই এই অন্যোন্যপ্রীতি সম্যক্ অবগত ছিল ॥ ৩২ ॥

রাম। আহা এই বাক্যে হৃদয়ের মর্ম্মস্থানে কি নিদারুণ আঘাত লাগিল! হা দেবি, এইরূপই ছিল বটে। হায় অতর্কিতভাবে উপনত অবস্থার ভীষণ পরিবর্ত্তনে নিতান্ত অপ্রিয়, বিয়োগপরিণামী সংসারবৃত্তান্ত অত্যন্ত সন্তাপদায়ক।

নিরতিশয় বিশ্রম্ভপূর্ণ সেই আনন্দ এখন কোথায়? পরস্পরের প্রতি সেই যত্নই বা কোথায়? আর সেই নিবিড় কৌতুকরস কোথায়? সুখে বা দুঃখে আমাদিগের হৃদয়ের সেই একভাবই বা কোথায়? তথাপি এই পাপপ্রাণ রহিয়াছে, ইহার অবসান হইতেছে না ॥ ৩৩ ॥

অহো কি কষ্ট! প্রিয়ার অসংখ্য গুণরাশি এককালে আবির্ভূত হইয়া যে সময়কে অতি চারুতর করিয়াছিল, এবং যাহা স্মরণ করিতে হৃদয়ে অতীব ব্যথা অনুভূত হয় সেই সময়েরই কথা ইহারা আমাকে স্মরণ করাইয়া দিয়াছে ॥ ৩৪ ॥

তখন হরিণলোচনার ঈষৎ উদ্গত স্তনযুগল কতিপয় দিনেই কিঞ্চিৎ বিস্তারলাভ করিয়াছিল। যে সময়ে যৌবন, অনুরাগ ও তদ্বিষয়ক অভিলাষের সম্পর্কবশতঃ নিবিড় মন্মথভাব হৃদয়ে উদ্দামভাবে প্রবুদ্ধ হয় কিন্তু বহিঃশরীরে তাদৃশ প্রকটভাবে প্রকাশ পায় না ॥ ৩৫ ॥

কুশ। মন্দাকিনী নদী ও চিত্রকূট পর্ব্বতের সন্নিহিত অরণ্যপ্রদেশে বিহার কালে সীতাদেবীর প্রতি রঘুপতি এই কথা বলিয়াছিলেন। যাহার উত্তরপার্শ্বে ঐ কেসরবৃক্ষ

পুষ্পবর্ষণ করিয়া পুষ্পশয্যা সম্পাদন করিয়াছে, সেই ঐ শিলাপট্ট তোমারই জন্য যেন সম্মুখে বিন্যস্ত রহিয়াছে ॥ ৩৬ ॥

রাম। [ লজ্জা, ঈষৎ হাস্য, স্নেহ ও শোকের সহিত ] শিশুজন, বিশেষতঃ অরণ্যবাসী শিশু, অতি মুগ্ধপ্রকৃতি। হা দেবি, তৎকালোচিত অতিনিভৃত ক্রিয়াকলাপের সাক্ষী সেই দেশের কথা স্মরণ হয় কি?

শ্রমজন্য ঘর্ম্মবিন্দুর উদয়ে তোমার মুখমণ্ডল শীতলতা প্রাপ্ত হইয়াছিল ; ধীরে ধীরে প্রবাহিত মন্দাকিনী সমীরণে আন্দোলিত তোমার অলকগুচ্ছ ললাটচন্দ্রের দ্যুতি কিঞ্চিৎ তিরোহিত করিয়াছিল ; স্বভাবতঃ শুভ্রোজ্জ্বল কুঙ্কুমরাগের কলঙ্কবর্জ্জিত ; গণ্ডযুগল ও প্রশস্ত কর্ণযুগল আভরণশূন্য হইয়াও স্বীয় নৈসর্গিক শোভায় মুখের অপূর্ব্ব শ্রীসম্পাদন করিয়াছিল। আহা সেই মুখ খানি যেন এখনও দেখিতেছি ॥ ৩৭ ॥

[ স্তম্ভিতের ন্যায় অবস্থান করিয়া শোকাকুল ভাবে। ]

অহো ! পুনঃ পুনঃ ধ্যানযোগে ও কল্পনাশক্তির সাহায্যে প্রিয়জনের মূর্ত্তি যেন নির্ম্মিত ও সম্মুখে স্থাপিত হইয়া প্রবাসেও যে সান্ত্বনা প্রদান করে না এমন নহে। কল্পনা শক্তির বিলোপ ঘটিলে জগৎ জীর্ণারণ্যে পরিণত হয়, এবং তদনন্তর হৃদয় যেন তুষানলে দগ্ধ হইতে থাকে ॥ ৩৮ ॥

[ নেপথ্যে

শিশুদ্বয়ের কলহের কথা শুনিয়া, বশিষ্ঠ, বাল্মীকি, দশরথের মহিষীগণ, ও জনক অরুন্ধতীর সহিত ভীতচিত্তে আগমন করিতেছেন। সত্বর আসিতে ইচ্ছুক হইলেও আশ্রমের দূরত্বহেতু পরিশ্রমক্লান্ত উঁহারা জরাশিথিলগাত্রে অতি বিলম্বেই আসিতেছেন ॥ ৩৯ ॥

রাম। কি ? ভগবান্ বশিষ্ঠ ও ভগবতী অরুন্ধতী, মাতা কৌশল্যা, রাজর্ষি জনক ইঁহারা সকলেই এখানে ? হায় কি কষ্ট, ইঁহাদিগের সহিত কিরূপে সাক্ষাৎ করিব ? [ করুণভাবে অবলোকন করিয়া ] আহা তাত জনকও এখানে আসিতেছেন ; হতভাগ্য আমি বজ্রদ্বারা আহত হইলাম।

সম্বন্ধের স্পৃহণীয়তাহেতু হৃষ্টচিত্ত বশিষ্ঠ প্রভৃতি মহর্ষিগণ যে উৎসবে যোগদান করিয়াছিলেন, পুত্রকন্যার বিবাহমঙ্গলরূপ সেই উৎসবে তাত দশরথ ও তাত জনকের সেই আনন্দ মিলন দেখিয়াছিলাম। এক্ষণে ঈদৃশ ঘোর নৃশংস ব্যাপার সজ্ঘটনার পর এতদবস্থ পিতৃসখা এই রাজর্ষিকে অবলোকন করিয়াও কেন সহস্রধা বিদীর্ণ হইতেছি না। অথবা রামের পক্ষে দুষ্কর কি আছে ? ॥ ৪০ ॥

[ নেপথ্যে ] অহো কি কষ্ট ! অনুভাবমাত্রাবশেষশ্রী, শোককৃশ রামচন্দ্রকে হঠাৎ দেখিয়া রাজর্ষি জনক প্রথমেই মূর্চ্ছিত হইয়া পড়িলেন ; তাঁহার চৈতন্য বিধানের পর শোকসন্তপ্ত মাতৃগণ মোহপ্রাপ্ত হইতেছেন ॥ ৪১ ॥

রাম। হা পিতঃ, হা মাতৃগণ, হা রাজর্ষি জনক।

জনকবংশীয় ও রঘুবংশীয়দিগের বংশদ্বয়ের সমগ্র মঙ্গলনিদান সীতার প্রতি নিষ্ঠুরাচরণকারী পাপাত্মা আমার প্রতি আপনাদিগের করুণা প্রদর্শন করা নিষ্ফল ( অনুচিত ) ॥ ৪২ ॥

কুশ ও লব। তাত এদিকে আসুন, এদিকে আসুন।

[ শোকাকুলভাবে গমন করিয়া সকলে নিষ্ক্রান্ত ].

কুমার প্রত্যভিজ্ঞান নামে ষষ্ঠ অঙ্ক সমাপ্ত।

---

*Lava* :—What is this ?

By this shower of tears, your face, a blessing to the world, has been made to attain the loveliness of a white lotus besprinkled with (drops of) dew. (29)

*Kusa.*—Dear brother !

What is not a (source of) grief to the chief of Raghu's race, separated from the Queen Sita ? They say that the entire world becomes, indeed, a wilderness to a man at the loss of his beloved wife. That deep love and this endless separation. Why do you then ask so, as if you have not read the Ramayana ? (30).

*Rama.*—[*To himself.*]

Ah ! Their talk is like that of one unconcerned. No use asking them. Wretched heart ! Why this sudden change characterised by restlessness due to affection ?

The agitation of my heart having been betrayed, I have been pitied even by these boys. Well I will conceal it. [*Aloud.*] My dear boys, a work called Ramayana, the effusion of the poetic language of the holy sage Valmiki, and an encomium upon the solar race, is being talked of. Out of curiosity I should like to hear something from it.

*Kusa.*—The whole of that composition we have gone through. These two verses from the last chapter of the section devoted to Rama's boyhood do now present themselves to my memory.

*Rama.*—Let the dear boy recite them.

*Kusa.*—Sita was naturally a darling to high-minded Rama But it was by her virtues alone that she caused that love to grow (31).

In the same way Rama was dearer to Sita than even her life. It is the heart that knows the mutual love. (32).

*Rama.*—Alas ! It is a terrible blow to the vitals of my heart. Alas, my Queen it was then indeed so. Oh ! the incidents of life, disagreeable on account of sudden reverses ( of fortune ) and ending in disappointments, are tormenting.

Where is that joy great on account of unsurpassed trustfulness ? Where are those solicitudes for each other ? And where indeed are those deep festive pleasures ? Where again is that union of two hearts, whether in happiness, or in grief ? And yet this acursed life goes on, and it does not cease to exist. (33).

Oh ! Woe !

I have been put in mind of that time which, agreeable as it was on account of the simultaneous appearance of thousands of the virtues of my beloved, it is hard and painful to remember. (34).

At that time the two breasts of the gazelle-eyed one which had but made their appearance little by little, became in a few days slightly expanded ; (it is a time) when love, grown strong by the combination of youth, affection and yearning, waxes brisk in its workings in the heart, but is slow and gentle in the body. (35).

*Kusa.*—This is the verse addressed to the Queen Sita by the chief of Raghu's race at the time of their sporting in the forest of Mandakini and Chitrakuta—

This slab of stone, on both sides of which the Vakula tree has showered its flowers profusely, has been placed here before us, as if for you to lie down thereon. (36).

*Rama.*—[*With shame, smile, tenderness and pathos*].

Boys, specially those who reside in forests are indeed very simple. Alas! Queen ! Do you remember that place, the witness of our acts of great familiarily at that time ? Woe ! Oh ! Woe !

I seem to see that face which was getting cool by perspiration due to fatigue, the lustre of the moon-like brow wherein was slightly obscured by the fore-locks waved by the gentle breeze, blowing from the Mandakini, the cheeks whereof were bright and not soiled by *Kunkuma* or Saffrom paint ; and which was charming on account of a pair of ears, lovely though without any adornment. (37).

[*Remaining as if stupefied, with pathos*].

A beloved person, being created and placed as it were in front, by long and repeated reveries does not indeed fail to minister consolation even in separation. When the faculty of imagination

stops, the world becomes a desolate wilderness ; and then the heart is being burnt as it were on a pile of glowing chaff. (38).

[*Behind the scenes.*]

Frightened on hearing the quarrel between the boys, Vasistha, Valmiki, the Queens of Dasaratha, and Janaka together with Arundhati, with their aged and decrepit bodies, are coming slowly, being overcome with fatigue on account of the great distance of the hermitage, though their minds are hurrying on. (39).

*Rama.*—What ! the revered Vasistha and Arundhati, my mother and Janaka are all here ? Oh ! Woe ! How shall I be able to see them ? [*Pathetically looking*] Alas ! Father Janaka too comes here ; an accursed fellow that I am, I am being smitten with a thunderbolt, as it were.

Having witnessed that (joyful) meeting of my fathers on the auspicious festive occasion of the marriage of their children, which was graced by (the presence of) Vasistha and others being overjoyed at the desirability of the marital connection, why do I not split into thousand pieces on seeing the friend of my father in this condition after such a dreadful calamity has taken place ? Or what there is which it is difficult for Rama to do ? (40).

[*Behind the scenes*] Woe ! oh ! woe ?

The afflicted mothers are falling into a swoon after the revival of Janaka who first fainted on seeing suddenly the chief of Raghu's race in this condition, whose majestic appearance is the only thing left. (41).

*Rama.*—Alas ! Father ! Alas ! mother ! Alas ! Janaka.

Unprofitable and vain is your compassion for me who am a wretch and was cruel to her who is the entire blessing of the families of the Janakas and the Raghus. (42).

*Kusa and Lava.*—This way, father, this way.

[*Walking pathetically, exeunt omnes*].

The end of the Sixth Act,
called the Recognition of the Princes.

# सप्तमोऽङ्कः ।

लक्ष्मण: । ब्रह्मभि: ब्राह्मणै: क्षत्रै: बाहुजै: पौरै: पुरवासिभि: जनपदेभ्य: आगतै: जानपदै: जनपदवासिभि: सह वर्त्तमाना: इति सब्रह्मक्षत्रपौरजानपदा: प्रजा: प्रकृती: आहूय आकार्य, देवा: असुरा: तिरश्चां पशुपक्षिणां उरगाणां सर्पाणां च नायका: नेतार: श्रेष्ठा: इत्यर्थ: इति देवासुरतिर्य्यगुरगनायका: तेषां निकायेन समूहेन सह वर्त्तमान: इति सदेवासुरतिर्य्यगुरगनायकनिकाय: स्थावर: स्थितिशील: जङ्गम: गतिशीलश्च भूतानां प्राणिनां ग्राम: समूह: स्वस्य आत्मन: प्रभावेण" तप:सिद्धिजन्येन सामर्थ्येन सन्निधापित: उपस्थापित: एकत्र समावेशित: । किञ्चिदाश्चर्य्यप्रदर्शनाय भगवान् वाल्मीकि: स्वेन लोकोत्तरेण तप:प्रभावेण देवान् असुरान् पशुपक्ष्यादीनां सर्पाणाञ्च नेतॄन् एकत्र उपस्थापितवान् ; सर्व्वाश्च चातुर्व्वर्ण्यसहिता: प्रकृती: पौरान् जानपदान् अन्यांश्च तद्दर्शनाय आहूतवान् । जनानां पदम् इति जनपद: । नाभ्युप-जनोपपदानि व्रणाङ्गपदानि इति पुंलिङ्गता । जनपदेभ्य: आगता: इति जानपदा: तत आगत इत्यण् । जनपद + अण् = जानपद । पुरं निवसन्ति ये ते पौरा: । ब्रह्म तत्त्वतपोवेदे न द्वयो: पुंसि वेधसि । ऋत्विग्योगभिदोर्विप्रे इति मेदिनी ।

प्र + जन् + ड = प्रजा । उपसर्गे च संज्ञायामिति ड प्रत्यय: । तिरस् + अञ्च + क्विन् = तिर्य्यच् । तिरसस्तिर्य्यलोपे इति अञ्चेरकारलोपाभावे तिरस् इत्यस्य स्थाने तिरि इत्यादेश: । उरस् + गम् + ड = उरग । उरस: लोपोवक्तव्य: इति अन्त्यलोप: । नी + ण्वुल् = नायक । नायको नेतरि श्रेष्ठे हारमध्यमणावपि इति वैजयन्ती ।

नि + चि + घञ् = निकाय, निवासचितिशरीरोपसमाधानेष्वादेश्च क: इति घञ् । निकाय: समूह: । निकायस्तु पुमान्लक्ष्ये सधर्म्मिप्राणिसंहतौ । समुच्चये संहतानां निलये परमात्मनि इति मेदिनी । स्था + वरच् = स्थावर । स्थेशभासपिसकसो वरच् । गम् + यङ् = जङ्गम्य । जङ्गम्य + अच् ( यङ्लुकि ) जङ्गम । सङ्घातेऽपि ग्रामोभूतेन्द्रियशब्दविषयकरणानामिति हलायुध: । सम् + नि + धा + णिच् = सन्निधापि । सन्निधापि + क्त (कर्म्मणि) = सन्निधापित ।

आर्य्येण बहुमानास्पदेन अग्रजेन रामेण अहमादिष्ट: आज्ञापित: । स्वस्य कृतिं विरचितं दृश्यकाव्यभेदम् इत्यर्थ: । अप्सरोभि: सुरनारीभि: प्रयुज्यमानाम् अभिनीय-मानां द्रष्टुं वयमुपनिमन्त्रिता: आहूता: । तत् तस्मात् गङ्गाया: भागीरथ्या: तीरे

नटम् आतोद्यस्य गीतवादित्रस्य स्थानं रङ्गभूमिमित्यर्थः गत्वा। समाजस्य परिषदः सन्निवेशः स्थापनं व्यवस्था इत्यर्थः क्रियताम् इत्यहमादिष्टः आर्य्येण। मर्त्त्यश्चासौ अमर्त्त्यश्चेति मर्त्त्यामर्त्त्यः मरणधर्म्मा मनुष्यादिर्मर्त्त्यः अमर्त्त्यः देवः इत्यर्थः। तयोर्भूतस्य भूतग्रामस्य प्राणिजातस्य समुचितानि योग्यानि स्थानानि आसनानि इत्यर्थः तेषां सन्निवेशः विरचनं मयाकृतः। स्त्रियां बहुष्वप्सरसः इत्यमरः।

अद्भ्यः सरन्ति इति अप्सरसः। अप्+सृ+असुन्=अप्सरस्। प्र+युज्+शानच् (कर्म्मणि)=प्रयुज्यमान। आङ्+तुद्+ण्यत्=आतोद्य। आतोद्यम् चतुर्विधंवाद्यम्। अत्र लक्षणया रङ्गस्थानमित्यर्थः।

ततं वीणादिकं वाद्यम् आनद्धंमुरजादिकम्।
वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्॥
चतुर्व्विधमिदं वाद्यं वादित्रातोद्यनामकमित्यमरः॥

मृ+तन्=मर्त्त। मर्त्ते भवः इति मर्त्त्यः। न मर्त्त्यः अमर्त्त्यः। सम्+अज्+घञ=समाज। अजेर्व्वी अघञपोः इति वीभावनिषेधात् समाजः। पशूनां समजोऽन्येषां समाजः इत्यमरः।

राज्येति। राज्याश्रमनिवासे अपि प्राप्तकष्टमुनिव्रतः आर्य्यः वाल्मीकिगौरवात् इत एव अभिवर्त्तते॥ १॥

राज्यमेव आश्रमः इति राज्याश्रमः तत्र निवासः अवस्थानम् इति राज्याश्रमनिवासः तस्मिन् तत्रावस्थायामपि इत्यर्थः प्राप्तम् आसादितं कष्टं क्लेशकरं मुनिव्रतं स्त्र्यादिभोगनिवृत्तत्वात् मुनीनामिव कृच्छ्रसाध्यं जीवनम् इत्यर्थः येन स प्राप्तकष्टमुनिव्रतः अयम् आर्य्यः रामचन्द्रः वाल्मीकौ मुनौ यद् गौरवं भक्तिरित्यर्थः तद्वशात् इत एव अभिवर्त्तते अत्र स्थाने आगच्छति इत्यर्थः।

आङ्+श्रम्+घञ्=आश्रम। निवासे निवासकाले इत्यर्थः। अत्र कालाधिकरणे सप्तमी।

रामः। रङ्गः रज्यति अस्मिन् इति रङ्गः नाट्यशाला। रञ्जेर्घञिभावकरणयोर्नलोपविधानात्, अधिकरणे नलोपस्य अभावः। अत्र रङ्गशब्देन तत्स्थं कर्म्म लक्ष्यते। रङ्गः अभिनयकर्म्म इत्यर्थः तस्य प्रेक्षकाः इति रङ्गप्रेक्षकाः। प्र+ईक्ष+ण्वुल्=प्रेक्षक। रञ्ज्+घञ् (अधिकरणे)=रङ्ग।

रामः। चन्द्रकेतोः सदृशौ तुल्या इति चन्द्रकेतुसदृशौ। स्थानस्य उपवेशनस्थानस्य प्रतिपत्तिः प्राप्तिः गौरवं वा ताम् लम्भयितव्यौ प्रापयितव्यौ। लभ्+(णिच्) तव्य (कर्म्मणि)=लम्भयितव्य। गत्यर्थत्वात् प्रधाने कर्म्मणि तव्य प्रत्ययः।

लक्ष्मणः। प्रभोः स्वामिनः भवतः स्नेहः कुशे लवे च वात्सल्यम्। तस्य तत्र वा प्रत्ययः विश्वासः इति प्रभुस्नेहप्रत्ययः तस्मात्। हेतौ पञ्चमी। कुशं लवम् प्रति आर्य्यस्य अपत्यस्नेहं विलोक्य तयोरर्थे चन्द्रकेतुसदृशम् उपवेशनस्थानमुपकल्पितम्। राज्ञः आसनं इति राजासनम् आस्तीर्णम् विस्तीर्णम्। आङ्+स्तृ+क्त (कर्म्मणि) =आस्तीर्ण। प्रति+इण्+अच् = प्रत्यय। प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु इत्यमरः।

लक्ष्मणः। प्रस्तूयताम् आरभ्यताम्। प्र + स्तु + लोट् (कर्म्मणि)= प्रस्तूयताम्।

सूत्रधारः। सप्तमाङ्कोदरप्रविष्टस्य आमुखादिसहितस्य गर्भाङ्कस्य सूत्रधारः इत्यर्थः। गर्भाङ्कलक्षणम्—

अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान्।
अङ्कोऽपरः स गर्भाङ्कः सवीजः फलवानपि॥

इति साहित्यदर्पणः।

भूतः सत्यः अर्थः वस्तु इति भूतार्थः तम् वदितुं शीलमस्य इति भूतार्थवादी। सत्यवादी। जङ्गमैः स्थावरैश्च सह वर्त्तमानम् सजङ्गमस्थावरम् चराचरम् इत्यर्थः। आर्षेण ज्ञानमयेन नेत्रेण आलोक्य अतिपवित्रम् शोकोद्दीपनं विस्मयकरञ्च यत् किमपि मया रचितम् तत्र काव्यस्य वर्णयितव्यस्य वस्तुनः गौरवात् गुरुत्वात् अनुपेक्षणीयत्वात् युष्माभिर्दत्तमनःसंयोगैर्भवितव्यम्। मयि भक्तिवशात् मद्रचितप्रबन्धस्य गुणरीतिरसोत्कर्षाद्‌ वा हेतोः न अवहितैर्भाव्यम् इति प्रतीयमाना परिसंख्या।

अव+धा+तव्य (भावे)=अवधातव्य। करुणः शोकोद्दीपनः अद्भुतः विस्मयजननश्च रसः यस्मिन् तत् करुणाद्भुतरसम्। उप+नि+बन्ध्+क्त (कर्म्मणि)= उपनिबद्ध। ऋषि+अण्=आर्ष।

रामः। साक्षात् कृतः इति साक्षात्कृतः। सुप्सुपेति समासः। साक्षात्कृतः धर्म्मः यैः ते साक्षात्कृतधर्म्माणः अपरोक्षीकृतधर्म्माणः। बहुव्रीहौ धर्म्मशब्दात् समासान्तः अन्। धर्म्मादनिच् केवलात् इत्यन्। अमृतस्य अमरणस्य मोक्षस्य सारः येषु तानि अमृतसाराणि। मोक्षसाधनानि इत्यर्थः। रजसः पराणि इति परोरजांसि। सत्वप्रचुराणि प्रज्ञानानि कुत्रापि न व्याहतानि व्यर्थानि भवन्ति। अतः महर्षिभिः ज्ञानमयेन चक्षुषा अवलोकितानि तत्त्वानि न कदाचित् मिथ्या भवितुमर्हन्ति। भगवता वाल्मीकिना यदुपनिबद्धं तस्य सत्यत्वेन केनापि सन्दिहानेन भवितव्यम् इति भावः। परोरजांसि इति राजदन्तादित्वात् परनिपातः। पारस्करादित्वात् सुट्।

[ नेपथ्ये ]

एकाकिनीम् असहायाम् नास्ति शरणम् रक्षिता यस्याः सा अशरणा रक्षकहीना ताम् आसन्ना समुपस्थिता प्रसवस्य वेदना यस्याः सा आसन्नप्रसववेदना ताम् प्राप्तप्रसवयातनाम्। हता आशा जीविताशंसा यस्याः ताम् हताशां मां श्वापदाः हिंस्राः सत्वाः अभिलषन्ति खादितुमिच्छन्ति। इत्थं निरुपाया अहं गङ्गाप्रवाहे देहमुत्स्रक्ष्यामि। शुनः इव पदानि एषामिति श्वापदाः पूर्व्वपदस्य दीर्घः। शुनोदन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घोवाच्यः। एक + आकिनिच् = एकाकिन्। भज् + घिनुण् = भागिन्। स्त्रियां भागिनी। मन्दा भागिनी इति मन्दभागिनी।

लक्ष्मणः। बत इति खेदे अव्ययम्। अन्यदेव,—यन्मनसापि न चिन्तितमस्माभिः तत् किमपि प्रस्तूयते।

सूत्रधारः। विश्वेति। राज्ञा महावने त्यक्ता विश्वम्भरात्मजा देवी प्राप्तप्रसवम् आत्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

राज्ञा रामेण महावने विजने अरण्ये त्यक्ता विसृष्टा विश्वं बिभर्त्ति धारयति या सा विश्वम्भरा वसुन्धरा तस्याः आत्मजा दुहिता देवी सीता प्राप्तः समुपस्थितः प्रसवः गर्भमोचनं यस्य तम् प्राप्तप्रसवम् समुपस्थितप्रसवकालम् आत्मानं देहम् आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि इति विश्वः गङ्गादेव्यां भागीरथ्याः प्रवाहे विमुञ्चति क्षिपति। कथं सीता आत्महत्यां कर्त्तुमुत्सहेत : अनर्हं खलु एतद् इति द्योतयितुं गङ्गादेव्यामित्याहकविः। देवीं भागीरथीं शरणं प्रपन्ना इति भावः ॥ २ ॥

विश्व + भृ + खच् = विश्वम्भर। स्त्रियां विश्वम्भरा। संज्ञायां भृतॄ इत्यादिना खच्। आत्मन् + जन् + ड = आत्मज।

लक्ष्मणः। नाटकम् ; अभिनयः खल्वेषः नतु सीता परमार्थतः इदानीं गङ्गायां पतति। नाटयति यत् तत् नाटकम् नाटयतेः ण्वुल्।

रामः। दैवं भाग्यं तस्य दुर्व्विपाकः अशुभः परिणामः इति दैवदुर्व्विपाकः जातः इति शेषः। रामादिति अपादाने पञ्चमी। जनिकर्त्तुः प्रकृतिरित्यपादानत्वम् दैवं दिष्टं भागधेयं भाग्यं स्त्रीनियतिर्विधिः इत्यमरः। दुर् + वि + पच् + घञ् = दुर्व्विपाक।

लक्ष्मणः। प्रबन्धस्य भगवता उपनिबद्धस्य दृश्यकाव्यस्य अर्थः वस्तु इत्यर्थः दृश्यताम्।

रामः। वज्रमयः वज्रघटितान्तरात्मा निष्ठुरहृदयः इत्यर्थः एषः अहं सज्जः अभिनयदर्शनार्थं कृतक्षणः अस्मि।

वज्र + मयट् = वज्रमय। सज्ज् + अच् ( कर्त्तरि ) = सज्ज ready. सज्जति ; सज्जते इति केचित्।

[ एकः एकः इति एकैकः एकं बहुव्रीहिवत् इति पूर्व्वपदस्य सुपोलुक् ; एकैकः दारकः इति एकैकदारकः । उत्सङ्गितः उत्सङ्गमारोपितः, एकैकः दारकः शिशु याभ्यां ताभ्यां पृथ्वीगङ्गाभ्याम् अवलम्बिता धृता सीता प्रविशति ] उत्सङ्ग + इतच् = उत्सङ्गित । तारकादिभ्यादितच् । उत् + सञ्ज + घञ् = उत्सङ्ग = lap.

रामः । न संविज्ञातम् इति असंविज्ञातम् अज्ञातस्वरूपम्, नास्ति निबन्धनं हेतु र्यस्य तत् अनिबन्धनम् अहेतुकम् अतर्कितमुपपन्नम् इत्यर्थः । अन्धयति यत् तत् अन्धम् । अन्धञ्च तत् तमश्चेति अन्धतमसंगाढान्धकारम् । अवसमन्धेभ्यः तमसः इति समासान्तः अच् । ध्वान्तेगाढे ऽन्धतमसमित्यमरः ।

देव्यौ । समाश्वसिह्नीति । कल्याणि वैदेहि, समाश्वसिहि दिष्ट्या वर्द्धसे । रघुवंशधरौसुतौ अन्तर्जलं प्रसूता असि ॥ ३ ॥

हे कल्याणि मङ्गलस्वरूपे हे वैदेहि सीते, समाश्वसिहि, आश्वस्ता भव, दैन्यं जहि धैर्य्यं धेहि दिष्ट्या वर्द्धसे भाग्य ते सुप्रसन्नम् । रघोर्वंशस्य धरौ इति रघुवंशधरौ, रघुवंशविवर्द्धनौ सुतौ पुत्रौ अन्तर्जलम् जलस्य गङ्गाप्रवाहस्य अन्तः अभ्यन्तरे इत्यर्थः प्रसूता असि । पुत्रौ ते जातौ इत्यर्थः ।

जलस्य अन्तः इति विग्रहे अव्ययीभावः अन्तर्जलम् । नाव्ययीभावादतोऽमत्व-पञ्चम्याः इति अमादेशः । तृतीयासप्तम्योर्बहुलम् इति पक्षे 'अन्तर्जले' इत्यपिरूपं स्यात् । प्र + सू + क्त ( कर्त्तरि ) = प्रसूत । स्त्रियां प्रसूता । अत आदिकर्म्मणि कर्त्तरि क्तः इति कर्त्तरि क्तः । प्रसोतुमारब्धवती इत्यर्थः ।

लक्ष्मणः । कल्याणः मङ्गलः प्ररोहः अङ्कुरः यस्य सः कल्याणप्ररोहः । रघुवंशस्य मङ्गल्यः अङ्कुरः उत्पन्नः । प्ररोहसाहचर्य्यात् वंशशब्दे श्लेषः व्यङ्ग्यः

क्षुभितानाम् उत्तरलीकृतानां वाष्पाणाम् बहुलमुद्गीयमानस्य इत्यर्थः अम्भुणः उत्पीडेन समूहेन निर्भरः पूर्णः अजस्रं वाष्पायमाणः आर्य्यः प्रमुग्धः मूर्च्छितः एव । [ वीजयति व्यजनेन समीरं सञ्चारयति वीज इत्यदन्तश्चुरादिः । ]

भागीरथी । चारित्रेण पातिव्रत्यलक्षणेन शुभाचारेण उपचिताम् वृद्धिं नीताम् कल्याणानां मङ्गलानां सम्पदम् उतकर्षम् अधिगच्छ, लभस्व, आप्नुहीति यावत् । चर + णित्रन् = चारित्र । सम् + पद + क्विप् = सम्पद् । उप + चि + क्त कर्म्मणि = उपचित ।

वसूनि धरति या सा वसुन्धरा । वसु + धृ + खच्, स्त्रियां वसुन्धरा । संज्ञायां भृतॄ इत्यादिना खच् ।

लक्ष्मणः । अभ्युपपन्ना अनुगृहीता । अभ्युपपत्तिरनुग्रहः । अभि + उप + पद + क्त ( कर्म्मणि ) = अभ्युपपन्न ।

रामः। करुणतरम् अतिशोकोद्दीपनम् अतिशयेन करुणम् इति करुणतरम्। The affix here signifies intensity.

भागीरथी। विश्वम्भरा या सर्व्वं विश्वं विभर्त्ति सा देवी सर्व्वंसहा अपि व्यथते दुःसहशोकेन मथ्यमानहृदया मूर्च्छति। सर्व्वथा अपत्यस्नेहेन जितम्। अपत्येषु यः स्नेहः स सर्व्वथा सर्व्वोत्कर्षेण वर्त्तते। यत्प्रभावात् देवी पृथ्वी इत्थम् कातरा संवृत्ता। जितमिति भावे क्तः। मोहरूपः ग्रन्थिः ममत्वबन्धनम्। सर्व्वेषां देवासुरतिर्य्यङ्मनुष्याणाम् इत्यर्थः साधारणः अविशेषेण गोचरीभूतः चेतनावताम् चैतन्यविशिष्टानां प्राणिनाम् अन्तः हृदये इत्यर्थः चरति इति अन्तश्चरः प्राणिनां हृदये अव्यभिचारेण वर्त्तमानः अनुपप्लवः दुश्छेदः इत्यर्थः संसारस्य तन्तुः सूत्रम्। अनेन दुरुच्छेदेन मोहेन अन्धीकृतः जीवः भूयोभूयः संसरति। नास्ति उपप्लवः व्यापत् नाशः इति यावत् यस्य सः अनुपप्लवः निर्बाधः दुरुच्छेद इत्यर्थः। तन् + तुन् = तन्तु। भूतानां प्राणिनां धात्री पोषणकर्त्री इति भूतधात्री पृथिवी। तत् सम्बोधने नदीत्वात् ह्रस्वः।

पृथिवी। सीतां प्रसूय उत्पाद्य कथं आश्वस्ताभवामि यस्याः कन्या निरन्तरमेव दुःखदावदग्धा सा कथम् आश्वस्ता भवेदित्यर्थः। दुहितृदुःखेन सा निरन्तरमेव मर्म्मपीड़ामनुभवति। इत्यर्थः।

एक इति। दुहितुः क्लेशपरम्परां विवृण्वती आह—एक इति एक स्तावत् रावणेन हृतायाश्चिर दीर्घकालं व्याप्य राक्षसीभिः परिवृतायाः अशोकवनिकायामवस्थानम्। द्वितीयश्च भर्त्रा कारणं विनैव सापवादः अस्याः परित्यागः परिवर्ज्जनम्—ईदृङ्मन्दभागिन्याः जननी अहं कथं समाश्वस्ता भवामि।

राक्षसानां मध्ये वासः इति राक्षसमध्यवासः। सु + दुर् + सह + खल् (कर्म्मणि) = सुदुःसह। त्यज् + घञ् = त्याग।

भागीरथी। कोनाम जन्तुः प्राणी पाकाभिमुखस्य परिणामोन्मुखस्य आसन्नफलस्य इत्यर्थः दैवस्य भाग्यस्य द्वाराणि उपायान् पिधातुं निरोद्धुम् आवरीतुमिति यावत् ईष्टे प्रभवति। न कोऽपीति अर्थः। दुर्व्वारं खलु दैवविलसितमिति भावः। नियतिः केन बाध्यते ॥ ४ ॥

अभिगतं मुखमस्य इति अभिमुखम्। पाके अभिमुखम् इति पाकाभिमुखम्। अपि + धा + तुमुन् = अपिधातुम्, पक्षे पिधातुम्। वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरिति अकारस्य लोपः पाक्षिकः।

पृथिवी। सदृशम् अनुरूपम् युक्तम् इत्यर्थः। यत् त्वया उक्तम् तत् तव योग्यम्। किन्तु इदमाचरणम् रामभद्रस्य न योग्यम्।

नेति बालेन बाल्ये पीडितः पाणिः न प्रमाणीकृतः। अहं न, जनकः न, अग्निः न, अनुवृत्तिः न, सन्ततिः न प्रमाणीकृता ॥ ५ ॥

बालेन कुमारेण बाल्ये कौमारे पीडितः गृहीतः पाणिः न प्रमाणीकृतः। पाणिगृहीतायाः परिरक्षणं सर्व्वथा कर्त्तव्यम् सा त्यक्तुमनर्हा ; तथापि यथाधर्म्ममूढायाः धर्म्मपत्न्याः परित्यागस्तेन विहितः। किमिदं न्याय्य कृतम्। अहं भूतधात्री तस्याः जननी मद्दुहिता कथम् अनार्य्यमाचरेत् राजर्षि र्जनकस्तस्याः गुरुः तस्य कन्या कथ सन्मार्गाद विचलेत् इति रामेण कथ न विचारितम्। आस्तां तावत् आवयो: कथा भगवान् वैश्वानरः रामस्य अन्येषां कपिराक्षसानाञ्च समक्षम् सीतायाश्चारित्रं निर्णीतवान्। सः भगवान् अग्निरपि रामेण प्रमाणत्वेन न परिगृहीतः। अनुवृत्तिरनुवर्त्तनं स्वसुखनिरभिलाषं छायावदनुसरण भर्त्तुः शुश्रूषणञ्च कि न प्रमाणम्। वन्धकी किं भर्त्तारमेवं शुश्रूषते इत्यपि रामेण कथं नालोचितम्। सन्ततिः तस्याः गर्भे निहितमात्मनः तेजः कुलस्याविच्छेदस्य निदानं किं न प्रमाणम् सन्तत्यनुरोधेन अपि सा न परित्यागमार्हीत्। विद्यमानेषु अपि एतेषु वहुषु अपरित्यागकारणेषु रामो यत् सीताम् अत्याक्षीत् एतेन तस्य अविमृष्यकारिता एव विजृम्भते इति भावः ॥ ५ ॥

अप्रमाणं प्रमाणं कृतः इति प्रमाणीकृतः। सम् + तन् + क्तिन् + सन्तति।

रामः। ईदृशः आर्य्यपुत्रत्वस्य अयोग्यः स्मर्त्तुमनर्हः इत्यर्थः।

भागीरथी। संसारस्य शरीर देहभूता असि। त्वम् नराणां वृत्तम् जानासि। उक्तञ्च।

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्चरात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम् ॥

तथापि किम् असंविदाना अजानती इव जामात्रे रामाय कुप्यसि। कोपः न युक्तः।

सम + विद + शानच् — संविदान। अकर्म्मकत्वात् संपूर्व्वात् वेत्ते रात्मनेपदम्। विदिप्रच्छिस्वरतीनामुपसंख्यानम्।

घोरमिति। लोके घोरम् अयशः विततम्। लङ्काद्वीपे याच वह्नौ विशुद्धिः इह जनः कथं ताम् श्रद्दधातु। इक्ष्वाकूणाम् इद कुलधनं यत् कृत्स्नः लोकः समाराधनीयः। तदतिमहनम्। स वत्सः किं करोतु ॥ ६ ॥

लोके जगति घोरं भीषणम् अयशः कौलीनम् अवर्णः अपवाद इति यावत् विततम् विस्तीर्णम् व्याप्तमित्यर्थः। लङ्काद्वीपे दूरवर्त्तिन्यां लङ्कायाम् या च वह्नौ अनले सीतायाः विशुद्धिः चारित्रविशोधनम् अभूत् इति शेषः अयोध्यायां स्थितः जनः लोकः ताम् विशुद्धिं कथं श्रद्दधातु प्रत्येतु। यो वृत्तान्तः प्रत्यक्षीक्रियमाणः अपि अत्यद्भुतत्वात् लोकैः न प्रतीयते विप्रकृष्टदेशे वृत्ते तत्र वृत्तान्ते कथं लोकानां श्रद्धा समुत्पद्येत।

अस्तु नाम् अग्निविशुद्धौ प्रकृतीनामविश्वासः स्वयं प्रत्यक्षीकृताखिलवृत्तान्तः रामस्तु कथं तां त्यक्तवान् इत्याशङ्क्याह इक्ष्वाकूणामिति। कृत्स्नः समग्रः एव दुर्ज्जनः सुजनो वा जनः प्रकृतिवर्गः समाराधनीयः रञ्जनीयः तोषणीयः इति यावत् इति यत्, समुत्पन्नस्य प्रकृतिविरागस्य येन केनाप्युपायेन प्रमार्जनेन सन्तोषोत्पादनम् इक्ष्वाकूणां नृपतीनां कुलधनम् कुलक्रमागतम् व्रतमित्यर्थः सर्व्वप्रयत्नेन अनुष्ठेयं कर्म्म इत्यर्थः। तत् सर्व्वलोकतोषोत्पादनम् अतिगहनं दुष्करं कर्म्म इत्यर्थः। स मे वत्सः रामः ईदृशे सङ्कटे किं करोतु सीतावर्ज्जनमन्तरेण किमन्यत् कार्य्यं कुर्य्यात् सीतापरित्यागं विना निखिललोकरञ्जनमकृत्वा कुलधनेन रामेण कथं वा राजपदमधिष्ठातव्यम् अतः तेन नृशंसमिदं कार्य्यमनुष्ठितम्। मन्दाक्रान्ता वृत्तम्।

वि + तन् + क्त (कर्म्मणि) = वितत। वह्नौ इति आधारे सप्तमी करणस्य आधारविवक्षया अधिकरणे सप्तमी। लङ्का एव द्वीपः इति लङ्काद्वीपः। द्वयोर्दिशोरापोयस्य स द्वीप.। ऋक्पूरब्धूःपथामानक्षे इति समासान्तः अः। द्व्यन्तरुपसर्गेभ्यः अप ईत्। इति अप्शब्दस्य अकारस्थाने ईदादेशः। द्वि + अप् + (समासान्त) अ = द्वि + ईप् + अ = द्वीप। श्रद्धातु। श्रदन्तरोरुपसर्गवद्वृत्तिः। अत्र लिङर्थे लोट्। कथं प्रतीयात्, सम्भावनायां शक्यार्थेवा लिङ्। एवं करोतु इत्यत्रापि पूर्व्ववत् लोट् सम + आङ् + राध् (णिच्) + अनीय (कर्म्मणि) = समाराधनीय। इक्ष्वाकोरपत्यानि पुमांसः इति इक्ष्वाकवः। तद्राजत्वात् अणोलुक् बहुषु।

लक्ष्मणः। अन्तः अन्तर्हृदये प्रकाशः इति अन्त.प्रकाशः आन्तराभिप्रायपरिज्ञानम् अन्तर्य्यामित्वमित्यर्थः अव्याहतः अनिवारितः अन्तःप्रकाशो यस्याः सा अव्याहतान्तःप्रकाशा। देव एव इति देवता स्वार्थे तल्। देवता भूतेषु प्राणिषु विषये अविहतान्तरभावपरिज्ञानशक्तिः अन्तर्य्यामितया देवाः प्राणिनाम् अन्तर्गतं भावं विदुरित्यर्थः। विशेषेण इत्यत्र प्रकृत्यादिभ्यश्चेति तृतीया। ते तुभ्यम् अयम् अञ्जलिः प्रणामाञ्जलिः विहितः। क्रियार्थोपपदेत्यादिना चतुर्थी।

रामः। अनुवृत्तः अविच्छेदेन प्रकाशितः प्रसादः अनुग्रहः। भगीरथग्रहणम् वंशस्य भक्त्यतिरेकप्रकटनार्थम्।

पृथ्वी। तदात्वे पात आपात इति वैजयन्ती। आपाते इदानीं दुःसहः निरोद्धुमशक्यः इत्यर्थः यः स्नेहस्य आवेगः संक्षोभः तेन हेतुना एवं कथयामि। सीतां प्रति रामस्य स्नेहं किमहं न जानामि।

दह्यमानेनेति। दैवात् वत्सां विहाय दह्यमानेन मनसा स लोकोत्तरेण सत्वेन प्रजापुण्यैश्च जीवति॥ ७॥

दैवात् दुर्निवारनियतिवशात् वत्सां जानकीं विहाय परित्यज्य दह्यमानेन तद्वियोगेन सन्तप्यमानेन मनसा चेतसा उपलक्षितः सः लोकोत्तरेण स्वीयेन अलोक-

सामान्येन सत्त्वेन व्यवसायेन धैर्य्येण इत्यर्थः प्रजानां पुण्यैः सुकृतैश्च हेतुना जीवति अन्यथा दुःसहशोकेन म्रियेत इत्यर्थः ।

दह + शानच् (कर्म्मणि) = दह्यमान । मनसा इत्यत्र प्रकृत्यादिभ्यश्चोपसङ्ख्यानमिति उपलक्षणे तृतीया । दैवादिति हेतौ पञ्चमी । लोकेभ्यः उत्तरम् श्रेष्ठम् इति लोकोत्तरम् तेन । सत्त्वेन इत्यत्र प्रजापुण्यैरित्यत्र च हेतौ तृतीया ।

रामः । गर्भरूपेषु अपत्यरूपेषु करुणया दयया सह वर्त्तमाना. इति सकरुणा. सदया. ।

भागीरथी । न विलीना इति अविलीना । जीविता इत्यर्थः । संवत्सराणां सहस्रं इति संवत्सरसहस्रम् । तत् अत्यन्तसंयोगे द्वितीया । भूयाः इत्यत्र आशिषि लिङ् ।

पृथ्वी । अवेक्षणीयौ परिपालनीयौ इत्यर्थः ।

भागीरथी । नाथेन पत्या सह वर्त्तमाना इति सनाथा जीवत्पतिका त्वम् कथमनाथा नाथहीना ।

सीता । जीवति अपि पत्यौ यद्यहं एवम् अरण्ये प्रसूतापत्या कमपि त्रातारं न लेभे तस्या सनाथत्वं विफल खलु इति भावः ।

সপ্তম অঙ্ক ।

[ তাহার পর লক্ষ্মণের প্রবেশ ]

লক্ষ্মণ । হে (সামাজিকবর্গ), ভগবান্ বাল্মীকি অদ্য ব্রাহ্মণ ক্ষত্রিয় পুরবাসী ও জনপদবাসীদিগের সহিত সমস্ত প্রজাগণকে এবং আমাদিগকে আহ্বান করিয়া দেব, অসুর, তির্য্যগ্‌যোনি ও উরগদিগের নেতৃবর্গ সহিত সমস্ত স্থাবর জঙ্গম প্রাণিসমূহকে স্বকীয় তপঃপ্রভাবে একত্র সমুপস্থিত করিয়াছেন। আর্য্য রামচন্দ্র আমাকে আদেশ করিয়াছেন—"বৎস লক্ষ্মণ, ভগবান্ বাল্মীকি অপ্সরোগণকর্ত্তৃক তাঁহার স্বরচিত নাটকের অভিনয় দর্শন করিবার নিমিত্ত আমাদিগকে নিমন্ত্রিত করিয়াছেন, অতএব গঙ্গাতীরে রঙ্গভূমিতে উপস্থিত হইয়া সমাজসন্নিবেশের ব্যবস্থা কর।" মর্ত্ত্য ও অমর্ত্ত্য প্রাণিগণের যথাযোগ্য স্থানে উপবেশনের ব্যবস্থা করিয়াছি। রাজ্যাশ্রমে নিবাস করিয়াও যিনি মুনিদিগের ন্যায় ক্লেশকর জীবনযাপন করেন সেই ঐ আর্য্য রামচন্দ্র বাল্মীকির প্রতি ভক্তিবশতঃ এই দিকেই আগমন করিতেছেন ॥ ১ ॥

[ তাহার পর রামের প্রবেশ ]

রাম । বৎস লক্ষ্মণ, রঙ্গপ্রেক্ষকগণ উপবেশন করিয়াছেন কি ?

লক্ষ্মণ । আজ্ঞা হাঁ ।

রাম । স্নেহাস্পদ কুশ ও লবকে চন্দ্রকেতুর ন্যায় সম্মানাস্পদ স্থানে উপবেশন করাইবে ।

লক্ষ্মণ। বৎসদ্বয়ের প্রতি প্রভুর যেরূপ স্নেহ তদনুরোধে সেইরূপই করিয়াছি। রাজাসন এই আস্তীর্ণ রহিয়াছে আপনি ইহাতে উপবেশন করুন।

[ রাম উপবেশন করিলেন—সকলে উপবিষ্ট হইল ]

লক্ষ্মণ। ওহে, আরম্ভ কর।

সূত্রধার। [ প্রবেশ করিয়া ] হে সামাজিকবর্গ, সত্যবাদী ভগবান্ বাল্মীকি স্থাবর-জঙ্গমাত্মক সমস্ত জগৎকে আদেশ করিতেছেন—যে "আমরা জ্ঞাননেত্রদ্বারা অবলোকন করিয়া পরম পবিত্র, করুণ ও অদ্ভুতরসপূর্ণ যে সন্দর্ভ রচনা করিয়াছি, কার্য্যের গুরুত্বানুরোধে তোমরা তাহার প্রতি মনঃসংযোগ কর।"

রাম। এই কথা বলা হইতেছে – মহর্ষিগণ সত্যধর্ম্মের সাক্ষাৎকার লাভ করিয়াছেন। তাঁহাদিগের অমৃতসার, রজোহতীত প্রকৃষ্ট জ্ঞান্ কুত্রাপি ব্যাহত হয় না, অতএব তাঁহা-দিগের বাক্যের সত্যতা সম্বন্ধে কোন সন্দেহ করিবার অবসর নাই।

[ নেপথ্যে ]

হা আর্য্যপুত্র, হা কুমার লক্ষ্মণ, একাকিনী, হতভাগিনী, অশরণা, আসন্নপ্রসববেদনা ও জীবিতে হতাশা আমাকে শ্বাপদকুল ভক্ষণ করিতে অভিলাষী হইয়াছে। মন্দভাগিনী আমি ভাগীরথীপ্রবাহে আত্মাকে নিক্ষেপ করিব।

লক্ষ্মণ। [ আত্মগত ] হায়, কষ্ট, এ যে অন্য কিছু।

সূত্রধার। বিশ্বম্ভরার দুহিতা সীতাদেবী নৃপতিকর্ত্তৃক মহারণ্যে পরিত্যক্ত হইয়া প্রসববেদনাক্লিষ্টনিজদেহ গঙ্গাপ্রবাহে নিক্ষিপ্ত করিলেন ॥ ২ ॥

[ নিষ্ক্রান্ত ]

রাম। দেবি, ক্ষণকাল অপেক্ষা কর।

লক্ষ্মণ। আর্য্য, এ নাটক।

রাম। হা দেবি, দণ্ডকারণ্যবাসপ্রিয়সখি, রামই তোমার এই দৈবদুর্ব্বিপাকের মূল।

লক্ষ্মণ। আর্য্য, নাটকের অভিনয় দেখুন।

রাম। বজ্রময় আমি এই প্রস্তুত হইয়াছি।

[ তাহার পর এক একটি শিশু ক্রোড়ে করিয়া গঙ্গা ও পৃথিবী সীতাকে ধারণ করিয় প্রবেশ করিতেছেন ]

রাম। বৎস লক্ষ্মণ, আমাকে ধর, আমি কি এক অজ্ঞাতস্বরূপ, আকস্মিক অন্ধকারে প্রবেশ করিতেছি।

দেবীদ্বয়। কল্যাণি বৈদেহি, সমাশ্বস্ত হও। তোমার ভাগ্য প্রসন্ন; তুমি রঘুবংশধর দুইটি সন্তান জলমধ্যে প্রসব করিয়াছ।

সীতা। [ সমাশ্বস্ত হইয়া ] সৌভাগ্যক্রমে পুত্রদ্বয় প্রসব করিয়াছি; হা আর্য্যপুত্র! [ মূর্চ্ছিত হইয়া পড়িলেন ]

লক্ষ্মণ। [ রামচন্দ্রের চরণদ্বয়ে নিপতিত হইয়া ] আর্য্য, আর্য্য, আমাদের ভাগ্য সুপ্রসন্ন ; রঘুবংশের মঙ্গলময় অঙ্কুর উদ্গত হইয়াছে। [অবলোকন করিয়া] হায়, হায় সংক্ষুভিত অশ্রুরাশি পরিপ্লুত আর্য্য মূর্চ্ছিত হইয়াছেন। [ বীজন করিতে লাগিলেন ]

পৃথিবী। বৎসে আশ্বস্ত হও, আশ্বস্ত হও।

সীতা। [ আশ্বস্ত হইয়া ] ভগবতি, আপনি কে, এবং ইনি কে ?

পৃথিবী। ইনি তোমার শ্বশুরকুলের দেবতা ভাগীরথী।

সীতা। ভগবতি, আপনাকে প্রণাম করি, আপনাকে প্রণাম করি।

ভাগীরথী। চরিত্রের মাহাত্ম্যদ্বারা অর্জ্জিত উৎকৃষ্ট মঙ্গল লাভ কর।

লক্ষ্মণ। অনুগৃহীত হইলাম।

ভাগীরথী। ইনি তোমার জননী বসুন্ধরা।

সীতা। হা মাতঃ, আমাকে এমন অবস্থায় আপনাকে দেখিতে হইল।

পৃথিবী। এস বৎসে, এস পুত্রি। [ সীতাকে আলিঙ্গন করিয়া মূর্চ্ছিত হইলেন ]

লক্ষ্মণ। [ সহর্ষে ] সৌভাগ্যক্রমে, পৃথিবী এবং ভাগীরথী আর্য্যার প্রতি অনুগ্রহ প্রকাশ করিয়াছেন।

রাম। [ অবলোকন করিয়া ] এ অতি করুণ দৃশ্য।

ভাগীরথী। বিশ্বম্ভরাও ব্যথিত হইলেন। অপত্যস্নেহেরই জয়। অথবা এই অপত্যস্নেহ একটি মোহবন্ধন, ইহা সমস্ত চেতনাসম্পন্ন জীবের অন্তর্হৃদয়ে বর্ত্তমান, এবং ইহা অচ্ছেদ্য সংসারতন্তু। বৎসে বৈদেহি, সমাশ্বস্ত হও ; দেবি ভূতধাত্রি, সমাশ্বস্ত হউন।

পৃথিবী। দেবি, সীতাকে প্রসব করিয়া কিরূপে আশ্বস্ত হই। প্রথমতঃ রাক্ষসদিগের মধ্যে ইহার দীর্ঘকাল বাস ; তাহার পর পতিকর্ত্তৃক ত্যাগ। এ নিতান্তই দুঃসহ।

ভাগীরথী। কোন্ জন্তু ফলপাকোন্মুখ নিয়তির দ্বাররোধ করিতে সমর্থ হয় ॥৪॥

পৃথিবী। ভাগীরথি, উপযুক্তই বলিয়াছেন। রামভদ্রের কি এরূপ আচরণ উপযুক্ত হইয়াছে ?

বালক রামচন্দ্র বাল্যকালে ধর্ম্মসাক্ষী করিয়া ইহার যে পাণিগ্রহণ করিয়াছিলেন তাহার সম্মান রক্ষা করিলেন না ; আমার সম্মান রক্ষা করেন নাই ; রাজর্ষি জনকেরও গৌরবরক্ষা করেন নাই। চরিত্রবিশোধক অনল, ছায়াবদনুবর্ত্তন, ও সীতাগর্ভস্থিত সন্ততি এই সকলেরও সম্মান রক্ষা করেন নাই ॥ ৫ ॥

সীতা। হায়, আর্য্যপুত্রের কথা স্মরণ করাইয়া দিলেন।

পৃথিবী। আঃ কে তোমার আর্য্যপুত্র ?

সীতা। [ লজ্জার সহিত অশ্রুবিসর্জ্জন করিয়া ] অথবা জননী যেরূপ বলেন।

রাম। মাতঃ পৃথ্বি, আমি এইরূপই হইয়াছি।

ভাগীরথী। ভগবতি বসুন্ধরে, প্রসন্ন হউন। আপনি এই সংসারের শরীরস্বরূপ। তবে আপনি যেন কিছুই জানেন না এই ভাবে জামাতার প্রতি কুপিত হইতেছেন কেন? জগতে সর্ব্বত্র অতি ভীষণ অযশ পরিব্যাপ্ত, সুদূর লঙ্কাদ্বীপে যে অগ্নিপরীক্ষা হইয়াছিল অতত্র্য লোকে তাহা কিরূপে বিশ্বাস করিবে? সমস্ত প্রকৃতিমণ্ডলের চিত্তরঞ্জন ইক্ষ্বাকুবংশীয় নৃপতিদিগের কুলব্রত। উহা অতি দুষ্করকার্য্য। এ অবস্থায় বৎস রামচন্দ্র কি করিবেন? ॥ ৬ ॥

লক্ষ্মণ। প্রাণীদিগের অন্তরের ভাব পরিজ্ঞানে দেবতাদিগের বিশেষতঃ গঙ্গার শক্তি অব্যাহত। অতএব আপনার উদ্দেশে এই প্রণামাঞ্জলি বন্ধন করিলাম।

রাম। মাতঃ, আপনি ভগীরথের কুলে চিরদিনই অনুগ্রহ প্রদর্শন করিয়া আসিতেছেন।

পৃথিবী। দেবি, আমি নিত্যই আপনাদিগের প্রতি প্রসন্ন; কিন্তু আপাতদুঃসহ স্নেহশোকাবেগে এরূপ বলিতেছি। রামভদ্রের সীতার প্রতি স্নেহ আমি জানি না এমন নহে; দৈববশতঃ বৎসা সীতাকে পরিত্যাগ করিয়া শোকানলদগ্ধচিত্ত রামচন্দ্র স্বীয় লোকোত্তর ধৈর্য্যও প্রজাদিগের পুণ্যফলে জীবিত রহিয়াছেন ॥ ৭ ॥

রাম। গুরুগণ সন্তানের প্রতি করুণাময়।

সীতা। [ রোদন করিতে করিতে অঞ্জলিবন্ধন করিয়া ] জননী আমাকে নিজগাত্রে বিলীন করুন।

রাম। আর কি বলিবেন?

ভাগীরথী। ঈশ্বর এমন অনিষ্ট নিবারণ করুন। অবিলীন হইয়া সহস্রবৎসর জীবন ধারণ কর।

পৃথিবী। বৎসে, তোমার এই সন্তান দুইটিকে ত পালন করিতে হইবে।

সীতা। আমি অনাথা ইহাদিগকে লইয়া কি করিব?

রাম। হৃদয়, তুমি বজ্রনির্ম্মিত।

ভাগীরথী। তুমি সনাথা হইয়াও কিরূপে অনাথা?

সীতা। এই হতভাগিনীর সনাথত্ব কিরূপ?

## ACT VII.

[*Then enter Lakshmana*].

*Lakshmana.*—Ho! Hollao!

The holy sage Valmiki has invited to-day all the subjects, including the townsfolk, the villagers, the Kshatriyas, the Brahmans, together with us, and by his (ascetic) powers has caused the entire body of beings, moving and stationary, consisting of the leading Gods, demons, beasts, birds, snakes, to be assembled. And I have been ordered thus by my honoured brother.—

